२र र र र र र र र
॥ दैर्घश्रवसम्॥ त्वंसोमप्रथमावृदोहावृगोहाओहा
२ १ र१र र ऽ र ऽ २
३ए। ऋवा२र्हिषोमहेवा२जा। ओ३हा। ओ३हा३
२ ३१ ३१ १ २ १र २
ए३४। यओ३४वसायि। धायिन्द। धुःसात्वन्नोवायि३
ऽ २ ऽ २ २ ३२ ३२ २१
ओ३हा। ओ३हा३ए३४। रवा३४यिरिया३। यचो२३
५ ४ ५ २ र र र र
४वा। दा५योऽ६हायि॥(१) अभ्यभिहिश्रवसाओहाओ
२ १ र१ र ऽ २ ऽ २
हा३ए। तता२र्हिथोत्सन्ना२का। ओ३हा। ओ३हा
२ ३ २ ३२ १ २ १र २
३ए३४। चित्त्रा३४नपा। नामहि। तऽ३शार्य्याभिर्न्ना।
ऽ २ ऽ २ २ ३२ ३र २ २१
ओ३हा। ओ३हा३ए३४। भरा२४माणा३ः। गभोर
५ ४ ५ २ र र र र
३४वा। स्ता५योऽ६हायि॥(२) अजीजनोअमृतमओहा
र २ १ १ र ऽ २ ऽ
ओहा३ए। तिया२यकमृतस्या२धा। ओ३हा। ओ
२ २ ३१ ३२ १र१ १र
३हा३ए३४। मन्ना३४। मृता। स्याचारु। णःसादा
२ ऽ २ ऽ २२ ३र२ ३२
सराः। ओ३हा। ओ३हा३ए३४। वाजा३४मच्छा३।
२१ ५ ४ ५
सनो२३४वा। ध्या५दोऽ६हायि(३)॥ ७*॥ [२] ७

---

* ऊ० गा० १०प्र० १ख० ७सा०।

अथैन्दुमिन्द्रायेति त्र्यृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३ १२ ३ १र २र
एन्दुमिन्द्रायसिञ्चतपिबातिसोम्यम्मधु।
१र २र ३ २
प्रराधाᳫंसिचोदयतेमहित्वना॥ १ *॥

हे ऋत्विजः! "इन्दुं" स्यन्दनशीलं सोमम् "इन्द्राय" इन्द्रार्थम् "आ सिञ्चत" आश्रयण-द्रव्येणासेचनं कुरुत अभिषुणुतेत्यर्थः। ततः "सोम्यं" सोममयं "मधु" मदकरं सोमरसं "पिबाति" पिबतु। पीत्वा च स इन्द्रः महित्वना स्व-महत्त्वेनैव "राधांसि" धनानि स्तोतृभ्यः "प्र चोदयते" प्रकर्षेण चोदयते प्रेरयति॥

"प्रराधांसि"-"प्रराधसा"—इति पाठौ, "चोदयते"-"चोदयाते"—इति च॥ १॥

अथ द्वितीया।

१ ३ १ २ ३ २ ३ १ २ ३ १ २
उपोहरीणाम्पतिᳫंराधःपृञ्चन्तमब्रवम्।
३ १ २ ३ २ ३ १ २
नूनᳫंश्रुधिस्तुवतोअश्व्यस्य॥ २ †॥

---

* ऋ० वा० ४, २, ५, ६ (१भा० ७८४पृ०) = ऋ० वे० ६, १, १०, ३।

† ऋ० वे० ६, २, १०, ४।

"हरीणां" हरित-वर्णानाम् अश्वानां "पतिं" पालयितारं "राधः" धनं "पृचन्तं" [पृची सम्पर्के (अदा० आ०)] स्तोतृषु संयोजयन्तं ददतमित्यर्थः । एतादृशमिन्द्रम् "उपो* अब्रवम्" अतिशयेनाहं स्तोत्रं करवाणि "अश्वस्य" अश्वो नामर्षिरश्व-शब्देनोच्यते तस्य पुत्रस्य स्तुवतः स्तोत्रं कुर्वतः मम सम्बन्धिनीं हे इन्द्र ! त्वद्विषयां स्तुतिं "नूनं" सम्प्रति "श्रुधि" शृणु ॥

"राधः"-"दृचम्"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

२      २ ३ २ ३१ १ ३ २ ३ १ २ २ २

नह्या३ऽङ्गपुराचनजज्ञेवीरतरस्त्वत् ।

१ २   ३ २उ    ३ २ ३ १  २  २

नकीरायानैवथानभन्दना ॥ ३ † ॥ ८

हे इन्द्र ! "त्वत्" त्वत्तः "पुरा" पूर्वं "वीरतरः" सामर्थ्यवान् कश्चित् "न हि जज्ञे" न जातः खलु "अङ्ग" प्रसिद्धौ त्वमेव सामर्थ्यवान् जातइत्यर्थः । किञ्च त्वत्तोऽपि "राया" धनेन समर्थः "न किः" न कश्चिदस्ति । तथा "एवथा" शत्रुपुराणि सङ्ग्रामं वा प्रतिगमनेन त्वत्तोऽधिको न जातः [यद्वा, एवथा—अव रक्षणादिषु (भ्वा० प०) अकारस्यैकारश्छान्दसः, औणादिकस्थाप्रत्ययः; शरणागतानां स्तोतॄणां वा अवने त्वत्तोऽधिको नास्ति ।

---

* 'उप उ इति पादपूरणे'—इति वि० ।

† ऋ० ३० ६, १, १०, ५ ।

अथ नदंवइति चतुर्थसूक्तस्यर्क्वेषा ।

१ २ ३ १ २ ३ १ २ ३ १ २

नदंवओदतीनान्नदंयोयुवतीनाम् ।

१ २ ३ १ २ ३ १ २

पतिंवोअघ्न्यानान्धेनूनामिषुध्यसि ॥ १ * ॥ ९

"ओदतीनाम्" ओदत्यः उषसः ['ओदती'-'भास्वती'—इति नामसु पाठात् (निघ०१,८,३-४)] तासां "नदम्" उत्पादक-मित्यर्थः [इन्द्रेण हि उषस उत्पद्यन्ते इन्द्रस्यैव सूर्यत्वात्, द्वादशा-दित्य-मध्ये इन्द्रः पठितः]। तादृशमिन्द्रं हे यजमानाः! "वः" युष्म-दर्थम् आह्वयामि "अघ्न्यानाम्" अहन्तव्यानां गवां "पतिम्" आह्वये। अथ प्रत्यक्षकृतः—हे यजमानाः! "वः" त्वं "धेनूनां" क्षीरादिना प्रीणयित्रीणां गवाम् "इषुध्यसि" अन्नमिच्छसि† ॥ १ ॥ ९

१ २ १ २ १ २ ३ १

॥ अध्यम् ॥ नदंवओ२द । तीनोवा । नदंयोयू ।

२ ३ १ २ ३ १ २ २ ३ २ ३ १ २

वतीनाम् । पतिंवोअघ्न्यानान्धेनूनामि । षू२३ । ध्य

२ १ २ १ २ १

सोवा । अधिया२ । ए२३हियाइ३४३ । ओ२३४५ई ।

डा(१) ॥ ११ क ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशस्याध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

---

* इषुध्यसि—इदासोत्सर्थः—इति वि० ।

† ऋ० सं० १०म० २४० ११सा० ।

अथ तृतीय-खण्डे —

देवोवोद्रविणोदाइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ ३ २ ३ १ २ ३ १ २
देवोवोद्रविणोदाःपूर्णांविवष्ट्वासिचम्।

१ २ ३ २ ३ १ २ ३ १२ ३१ २ ३ १ २
उद्वासिञ्चध्वमुपवापृणध्वमादिद्वोदेवओहते॥ १ * ॥

"द्रविणोदाः" धनानां दाता "देवः" अग्निः "वः" युष्मदीयां "पूर्णां" हविषा "आसिचम्" आसिक्तां स्रुचं "विवष्टु" कामयताम् "उत्सिञ्चध्वम् वा" सोमेन पात्रम्, "उप पृणध्वम् वा" सोमम् [वा शब्दौ समुच्चयार्थौ ध्रुव-चमसेन होतृ-चमसं पूरयत च अग्नये सोमं यच्छत चेत्यर्थः]। "आदित्" अनन्तरमेव "देवः" अग्निः "वः" युष्मान् "ओहते" वहति ॥

"विवष्टु"-"विवष्टि"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१२ ३२ ३ १ २ ३ १ २ ३ १ २ ३ १२ ३
तꣳहोतारमध्वरस्यप्रचेतसंवह्निन्देवाअकृण्वत।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १२ ३२ ३ १ २
दधातिरत्नंविधतेसुवीर्यमग्निर्जनायदाशुषे ॥२ †॥१०

* उ० आ०—१, २, १, १ (१भा० १८४ पृ०)—ऋ० वे० ५, २, ११, ४।

† ऋ० वे० ५, २, ११, ५।

देवाः "प्रचेतसं" प्रकृष्टमतिं "तम्" अग्निम् "अध्वरस्य" यज्ञस्य "वह्निं" वोढारं "होतारं"* च "अकृण्वत" अकुर्वन् किमर्थमित्यत आह—स च "अग्निः" "विधते" परिचरते "दाशुषे" हविषां प्रदात्रे "जनाय" "सुवीर्य्यं" शोभन-वीर्योपेतं "रत्नं" रमणीयं धनं "दधाति" दधात्विति ॥ २ ॥ १०

॥ यज्ञायज्ञीयम् ॥ देवोऽ५व:। द्रा३वा३विणोदाः। पूर्णाँविवा। ष्टु३आसी३चाम्। उद्वा२सिञ्चध्वमुप। वा पा२३र्णा। ऊम्मायि। धू३वाम्। आदिद्वोदेवओर२ह ताउ ॥(१) आदायित्। वोदायि। वा३ओहा३तायि। तवृ्वो२तारमध्वर। स्यप्रा२३चे। ऊम्मायि। ता३ साम्। वाह्निन्देवाअकार२ण्वंताउ ॥(२) वाह्नीम्। दा यिवाः। आ३काणवा३ता। दधा२तिरत्नविध। तेस२ ३वा। ऊम्मायि। रा३याम्। आग्निर्जनायदा२शु षाउ(३) ॥ १२ † ॥ [१]

* 'होतारमकारमकरत्'—इति वि०।

† ऊ० गा० १०प्र० २अ० ११गा०।

१२ २ १२ २ २ १ १२ १२

॥ कण्वरथन्तरम् ॥ देवोवोद्रविणोदाः । पूर्णां वि

२ १ २ २ २ २ ३

वा । छु३आसीे३चाम् । उद्वासिञ्चध्वमुपवापृणध्वा २ ३

५२ १२ १ ५ २ १ २

४मैद्वी । आदिद्वो२३४दे । वओ३आउवा२३ । ए३ ।

१ ३ २ १२ १२ २२ १२ २ १ २ १ २ २

चतञ्चा ॥(१) आदिद्वोदेवओचतायि । ता३ ए चोता३रा

२ ३ ५२ ३१ १ ५

म् । अध्वरस्यप्रचेतसा२३४मैद्वी । वह्निन्दा२३४यिवाः ।

२ २ २ ३ १ १२ १२ १२ १

अका३१उवा२३ । ए३ । एवतञ्चा ॥(२) वाह्निन्देवाअक्र

२ १ २ १ २ २ २ २ ३ ५२

ण्वता । दा३धाता३यिरा । त्वं विधतेसुवी।रिया२३ ४मै

२ १ ५ २ २ २ १

द्वी । अग्निर्ज्ञा२३४ना । यदा३१उवा२३ । ए३ । पुष

२

चा(३) ॥ ७ * ॥ [२] १०

अदर्शीति द्वचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ २ १ २ ३ २

अदर्शिगातुवित्तमोयस्मिन्व्रतान्यादधुः ।

२ १ २ ३ १२ २२ ३ १ २ २ १ २ ३ १ २

उपोषुजातमार्यस्यवर्द्धनमग्निन्नक्षन्तुनोगिरः ॥ १ † ॥

---

* ऊ० गा० १२प्र० १ख० ७ग्रा० ।

† ऋ० ग्रा० ६, १, ४, १ ( १मा० १०१ पृ० )—ऋ० मं० ८, ७, ११, १ ।

"यस्मिन्" अग्नौ "व्रतानि" कर्माणि "आ दधुः" यजमानाः आहितवन्तः "गातुवित्तमः" अतिशयेन मार्गाणां ज्ञाता ; सोऽग्निः "अदर्शि" प्रादुरभूत्। किञ्च "सुजातं" सम्यक् प्रादुर्भूतम् अस्य "आर्यस्य" उत्तम वर्णस्य "वर्द्धनं" वर्द्धयितारम् "अग्निं" "नः" अस्माकं "गिरः" स्तुति-रूपा वाचः "उपो दयन्तु" उपगच्छन्तु [ अय गताविति ( भ्वा० प० ) धातुः ॥

"नयन्तु"-"नयन्त"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ ३ ३ १
यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
सहस्रसाम्मेधसाताविवत्मनाग्निन्धीभिर्नमस्यत ॥२*॥

"यस्मात्" कारणात् "चर्कृत्यानि" कर्त्तव्यानि कर्माणि "कृण्वतः" कुर्वाणान् मनुष्यान् "कृष्टयः" इतर-मनुष्याः "रेजन्त" कम्पन्ते,† तस्मादिदानीं हे मदीया जनाः! यूयं "सहस्रसां" गवां धनानां सहस्रस्य दातारमग्निं‡ "मेधसातौ" यज्ञे "धीभिः" कर्त्तव्यैः कर्मभिः "त्मना" आत्मनैव "नमस्यत" परिचरत ॥

"नमस्यत"-"सपर्यति"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ८, ७, १२, १।

† 'रेजन्त—राजन्तेत्येवं द्रष्टव्यम्'—इति वि०।

‡ 'चर्कृत्यं—पुनः पुनः कर्त्तव्यानि कार्याणि'—इति वि०।

अथ तृतीया।

१२ १२ १ २
प्रदैवोदासोअग्निः० ॥ ३ ॥ ११

"दैवोदासः" दिवोदासेनाहूयमानोऽग्निः "मातरं" सर्वस्य धारणवत्त्वात् पृथिवीं "अनु" प्रति "न" "प्र विवावृते" देवान् प्रति हविर्वोढुं विशेषेण न प्रवर्त्तयति, तस्मादेनमग्निं दिवोदासो "मज्मना" बलेन आजुहाव। तस्मादयमग्निं "नाकस्य" स्वर्गस्य "देवः" द्योतमानः "इन्द्रः" परमैश्वर्य-युक्तः "शर्मणि" गृहे स्वायतने एव "तस्थौ" अतिष्ठत् ॥ ३ ॥ ११

४ १ ४ २ ४ ५
॥ यज्ञायज्ञीयम् ॥ अदाऽ५भि। गा३तू३वित्तामाः।

१ १ १ २ १ १ १२ २
यास्मिन्व्रता। नौ३आदा३धूः। उपो२३सुजातमा। यस्या

२ १ २ २ १ २
२३वा। ऊम्मायि। धा३नाम्। आग्निस्सस्तुनो२३गि

१ १ २ १२ २ २ १
रा३ ॥(१) राया। स्याद्रेजन्तस्तुष्टयस्वर्ह्त्या। नौ३का

२ १ १ १२ २ २ २ २ १
पर्वी३ता। सचा२३स्वसान्निभसा। तावा२३यिवा। ऊ

२ १ १ २ १२ १
म्मायि। स्था३ना। आग्निर्धीभिर्मर्मा२३स्यताउ ॥(२) ता

१ १२ २ २ २ २ २ १ २ २
प्रा। दैवोदासोअग्निर्देवइन्द्रो। ना३ माया३ ना।

१ २ १ २ १ १ १ २
अनू२मातरम्पृथि । वीवा२३यिवा । ऊम्मायि । वा३र्त्ता
१ २ २ ३ १ १ १ १
यि । तास्थौनाकस्यग्रा२र्मणाउ । वा३४५(३) ॥ १२*॥ [१]

४ ३ ४ २ ४ ५
॥ यज्ञायज्ञीयम् ॥ प्रदैऽ५वः । दा३सो३आग्नायिः ।
१ २ १ २ १ १ २ १
दायिवइन्द्रो । ना ३ माप्वा३ना । अनू२मातरम्पृथि ।
२ १ १ १ १ १ २ २
वीवा२३पिवा । ऊम्मायि । वा३र्त्तायि । तास्थौनाक
३ १ १ १ १२ २
स्यग्रा२र्म्मणाउ ॥(१) णाया । स्माद्रे जन्तक्षष्टयस्वर्क्त्या ।
२ १ २ १ १ १२ २ २ २ २
नो३काएर्वा३ताः । मद्दा२स्सांमेधसा । तोवा२३यिवा ।
१ २ २ १ २ ३ २
ऊम्मायि । त्मा ३ ना । आग्निम्धीभिन्नमा २ स्यताउ ॥(२)
१ २ १ २ २ १ १ २ २
ताम्रा । दर्शिगातुवत्तमोयस्मिन्व्रता । नी३आदा३धः ।
१ १२ २ २ १ १ २
उपो२षुजातमा । यस्या२३वा । ऊम्मायि । धा३नाम् ।
१ ३ १ १११
आग्निचन्तुनोरगिराउ । वा३४५(३) ॥ ४ † ॥ [२]

---

* ऊ० गा० १०प्र० २अ० १२सा० ।

† ऊ० गा० ११प्र० २अ० ४सा० ।

२र १ २ १ २
॥ अभिनिधनंकाण्वम्॥ औहोहोहायि। आयिही।
१ २ २ ५ २ ३ ५ २ ३
आद्रा। श्री२३४गा। नूविश्वा२३४माः। यास्मिन्ना२
५ २र १र २र १ ३ ५ २
३४ता। नीयादधूः। ऐहोयि। आ२३४यिही। ऊ
३ ५ २ ३ ५ २र १ २र १
पोषू२३४जा। नामारी२३४या। स्यावर्द्धनाम्। ऐहो
५ ५ २ ३ ५ ३ २ ४
यि। आ२३४यिही। आग्निन्ना२३४त्ता। तुनो३गा५यि
२र १ २ १ २ १ २
रा६५६ः॥(१) औहोहोहायि। आयिही। यास्मात्।
२ ५ २ २ ५ २ ३ ५ २र १
रे२३४जा। ताक्रष्टा२३४याः। चार्का२३४त्यां। नीक्र
२र १ ३ ५ २ ५ ५
ण्वनाः। ऐहोयि। आ२३४यिही। साद्म्ना२३४साम्।
२ ३ ५ २र १ २र १ ३
मायिधासा२३४ताउ। ईवत्मना। ऐहोयि। आ२३४
५ २ ३ ५ ३ २ ४
यिही। आग्निर्धी२३४भीः। नमा३स्या५ता६५६॥(२)
२र १ १ १ २ १ २ ३ ५ २
औहोहोहायि। आयिही। प्राद्रै। वो२३४दा। सो
३ ५ २ ५ ५ २र १
आ२३४ग्रायिः। दायिवा२३४यिन्द्रो। नामम्ना।

२र१ १ ५ २ ३ ५ २ ३
ऐहोयि। आ२३४यिहो। आनूमा२३४मा। राम्पृथी२३

५ २र १र २र१ १ ५ २
४वीम्। वीवामृतायि। ऐहोयि। आ२३४यिहो। ता

३ ५ ३ २ ४
स्यौना२३४का। स्यश्रा३र्मापृणा६५६यि(३)॥२*॥[३] ११

अथाग्नआयूंषि-तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २
अग्नआयूंषिपवसे०॥१†॥

—इति प्रतीकमिदम्। सा चान्यत्राम्नाता (२भा० ३३५पृ०)॥१॥

अथ द्वितीया।

३ २उ ३ १ २ ३ १ २ ३ १ २
अग्निर्ऋषिःपवमानःपाञ्चजन्यःपुरोहितः।

१ २ ३ २
तमीमहेमहागयम्॥२‡॥

"पाञ्चजन्यः" निषाद-पञ्चमाश्चत्वारो वर्णाः पञ्चजनाः, [यद्वा, गन्धर्वाः पितरो देवाः असुराः रक्षांसीत्येतत् पञ्चजनाः, अथवा

* ऊ० गा० २२प्र० ३ख० २सा०।

† ऋ० आ० ६, ३, १०, ३ (२भा० ३३५ पृ०)=ऋ० वे० ७, २, १०, ३।

‡ ऋ० वे० ७. २. १०. ४।

देव-मनुष्य-गन्धर्वाप्सरसः सर्पाः पितर इति ब्राह्मणाभिहिताः पञ्चजनाः। "गम्भीरात् ञ्यः (४, ३, ५८)"—इत्यत्र "बहिर्देव पञ्चजनेभ्यइति वक्तव्यम्(भा०वा०)"—इति वचनात् ञ्य-प्रत्ययः] तेषां तत्तदभीष्ट-प्रदानेन स्वभूतः* "ऋषिः" सर्व्वस्य द्रष्टा "पवमानः" पवमान-रूपः "अग्निः" "पुरोहितः" कर्मार्थमृत्विग्भिः पुरतो निहितः, "तम्" पूर्वोक्त-लक्षणं "महागयं" महद्भिरपि देवादिभिर्गातव्यं† [ महान्ति प्रभूतानि यज्ञ-गृहाणि यस्य वा स तथोक्तः, तम् ] "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
अग्नेपवस्वस्वपाअस्मेवर्च्चःसुवीर्य्यम्॥

१ २ ३ २उ ३ १ २
दधद्रयिम्मयिपोषम्॥ ३‡ ॥ १२

हे अग्ने! "स्वपाः"¶ ["सोमनसो (६, २, ११७)"—इति उत्तरपदाद्युदात्तत्वम् ] शोभन-कर्मा त्वम् "अस्मे" अस्मासु "सुवीर्य्ये" शोभन-वीर्य्योपेतं "वर्च्चः" [वर्च्च दीप्तौ (भ्वा० आ०)] तेजः "पवस्व" आ गमय। तथा भवान् "रयिं" धनं पुत्रं वा

* 'पाञ्चजन्यः—पञ्चभिर्जन्यते, चत्वारो महर्त्विजः पञ्चमो यजमानः तैर्जन्यते अरणीरुत्पाद्यते—इति वि०।

† 'महागयं—बृहदावस्थितम्'—इति वि०।

‡ ऋ० वे० ७, २, ११, १=य० वे० ८, ३८।

¶ 'स्वपाः—शोभना आपो यस्य स्वभूता असौ स्वपाः स उच्यते'—इति वि०।

"पोषं" [ भावे कर्म्मणि वा घञ् ] गवां पुष्टिं यद्वा गवादिकं "मयि" "दधत्" दधातु करोत्वित्यर्थः [दधातेर्लेटि अडागमे— "वोर्लोपो लेटि वा (७, ३, ७०)"—इत्याकार-लोपः] ॥३॥ १२

अथाग्नेपावकेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ १ ३ १ २
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
२ ३ १ २ ३ १ २
आ देवान्वक्षि यक्षि च ॥ १ * ॥

हे "पावक" शोधक ! "रोचिषा" स्व-दीप्त्या "मन्द्रया" देवानां मादयित्र्या† "जिह्वया" च, हे "देव" द्योतमानाग्ने ! "देवान्" "आ वक्षि" आवह, यज्ञार्थं "यक्षि च" तान् यज ॥१॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २
तन्त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
१ २उ ३ १ २
देवाꣳ आ वीतये वह ॥ २ ‡ ॥

---

* ऋ० वे० ५, १, २६,=य० वे० १७, ८।

† 'मन्द्रया—मङ्गलया'—इति वि० ।

‡ ऋ० वे० ५, १, २६, २ ।

हे "घृतस्नो" घृतस्य प्रेरक!* [यद्वा, घृतेन जनित! हे "चित्रभानो!" चित्रा नानाविधा भानवो दीप्तयो रश्मयो यस्यासौ चित्रभानुस्तस्य सम्बोधनम्] "स्वर्दृशं" सर्वस्य द्रष्टारं "तं" "त्वा" त्वाम् "ईमहे" याचामहे, अतो "वीतये" हविषां भक्षणाय "देवान्" "आ वह" ॥ २ ॥

अथ तृतीया।

३ १ २    ३ २ ३   १ २
वीतिहोत्रन्त्वाकवेद्युमन्तᳬसमिधीमहि।
१ २ ३ १ २   ३ १
अग्नेबृहन्तमध्वरे ॥ ३ † ॥ १३

हे "कवे" कान्तदर्शिन्! "अग्ने!" "वीतिहोत्रं" कान्त-यज्ञं यद्वा प्रिययज्ञं, "द्युमन्तं" दीप्तिमन्तं "बृहन्तं" महान्तं, "त्वा" त्वाम् "अध्वरे" यज्ञे "समिधीमहि" समिद्भिः सन्दीपयामः ॥ ३ ॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* 'घृतस्नो—घृतेन स्नाप्यते यः असौ घृतस्नुः तस्य सम्बोधनं हे घृतस्नो। इति वि०।

† ऋ० वे० ४, १, १९; ३ = य० वे० ११, ४।

अथ चतुर्थे खण्डे—

अव। नोअग्नइति तृचात्मकं प्रथमं सूक्तम्।

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २
अवानोअग्नऊतिभिर्गायत्रस्यप्रभर्मणि।

१ २ ३ १ २
विश्वासुधीषुवन्द्य ॥ १ * ॥

"विश्वासु धीषु" सर्वेषु कर्मसु "वन्द्यः" स्तुत्यः हे "अग्ने!" "गायत्रस्य" गायत्र-साम्नः गायत्री-च्छन्दस्कस्य वा "प्रभर्मणि" प्रभरणे सम्पादने निमित्तभूते सति "नः" अस्मान् "ऊतिभिः" त्वदीयैः पालनैः "अव" रक्ष ["द्व्यचोऽतस्तिङः (६,३,१३५)"—इति संहितायां दीर्घत्वम् ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २
आनोअग्नेरयिम्भरसत्रासाहंवरेण्यम्।

१ २ ३ २ ३ १ २
विश्वासुपृत्सुदुष्टरम् ॥ २ † ॥

हे "अग्ने!" "रयिं" धनं "नः" अस्मभ्यम् "आ भर" प्रयच्छ॥ कीदृशम्? "सत्रासाहं" सत्रा सह युगपदेव दारिद्र्यस्य नाशकं "वरेण्यं" सर्वैर्वरणीयं "विश्वासु पृत्सु" सर्वेषु सङ्ग्रामेषु "दुष्टरम्" शत्रुभिस्तरीतुमशक्यम् ॥ २ ॥

---

* ऋ० वे० १, ५, २७, १।

† ऋ० वे० १, ५, २७, २।

अथ तृतीया।

१ २ ३१ १ ३ २ ३ १ २
आनोअग्नेसुचेतुनारयिंविश्वायुपोषसम्।

३ १ १ २ १ २
मार्डीकन्धेहिजीवसे॥ ३ *॥ १४

हे "अग्ने!" "नः" अस्माकं "जीवसे"† जीवनाय "सु-चेतुना" शोभनेन ज्ञानेन युक्तं "रयिं" धनम् "आ धेहि" आस्थापय। कीदृशम्? "मार्डीकं" मृडीकं सुखं तद्धेतु-भूतं "विश्वायु-पोषसं" सर्वस्मिन्नायुषि देहादेः पोषकं यावज्जीवमस्मदुपभोग-पर्याप्तमित्यर्थः‡॥ ३॥ १४

अग्निंहिन्वन्तीति पञ्चर्चं द्वितीयं सूक्तम्।

तत्र प्रथमा।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अग्निꣳहिन्वन्तुनोधियःसप्तिमाशुमिवाजिषु।

१ २ ३ १ २
तेनजेष्मधनन्धनम्॥ १ ¶॥

"नः" अस्माकं "धियः" कर्माणि स्तुतयो वा "अग्निं" "हिन्वन्तु" प्रेरयन्तु यागार्थमुद्योजयन्तु वर्द्धयन्तु वा [ हि गतौ

* ऋ० वे० १, ५, २७, ३।

† "तुमर्थे से-सेनसेन्-क्से-क्सेनध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः ( ३, ४, ८ )'—इति पा०।

‡ 'विश्वायुपोषसम्—आयवो मनुष्या' बहु-मनुष्य-पोषणम्'—इति वि०।

¶ ऋ० वे० ८, ८, १४, १।

हर्त्ता च। तत्र दृष्टान्तः—"आजिषु" सङ्ग्रामेषु "आशु" शीघ्र-गामिनं "सप्तिम् इव" सर्पण-शीलमश्वं यथा योद्धारः प्रेरयन्ति तद्वत्, "तेन" अग्निना "धनं धनं" सर्वं धनं "जेष्म" वयं जयेम॥ १॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ १ २ ३ १ ३ २
यथागा आकरामहै सेनयाग्ने तवोत्या।
१ २ ३ १ २
तान्नो हिन्व मघत्तये॥ २ *॥

हे "अग्ने!" "सेनया" इनेन सह वर्त्तमानया, सेना-रूपया वा "यया" "तव" "ऊत्या" रक्षया "गाः" "आ करामहै" आभिमुख्येन करवामहे लभामहइत्यर्थः। "ताम्" ऊतिं "नः" अस्मान् "हिन्व" गमय†। किमर्थम्? "मघत्तये" धनस्य दाना-र्थम् अस्माकं धन-लाभायेत्यर्थः।

"करामहै"-"करामहे"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
आग्ने स्थूरं रयिम्भर पृथुङ्गोमन्तमश्विनम्।
३ २उ ३ १ २ ३ २
अङ्धि खं वर्त्तया पविम्॥ ३ ‡॥

---

* ऋ० वे० ८, ८, १४, २।

† 'हिन्व—सेवयामः'—इति वि०।

‡ ऋ० वे० ८, ८, १४, ३।

हे "अग्ने!" "स्थूरं" स्थूलं दृढं "पृथु" विस्तीर्णं "गोमन्तं" गोभिर्युक्तम् "अश्विनम्" अश्वोपेतम् "आ भर" अस्मभ्यमाहर प्रयच्छ। किञ्च "खम्" अन्तरिक्षम् "अङ्धि" वृष्ट्युदकैः सिञ्च [यद्वा आत्मीयैस्तेजोभिः व्यञ्जय प्रकाशय] "पविम्" आयुधं* "वर्त्तय" अस्मद्विरोधिषु प्रवर्त्तय ॥

"पविम्"-"पणिम्"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२ ३ १ २   ३ १ २ ३ १ र   २र   ३ २
अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि ।
१ २ १   २   १ २
दधज्ज्योतिर्जनेभ्यः ॥ ४ † ॥

हे "अग्ने!" "नक्षत्र" [नक्षति समन्तात् गच्छतीति नक्षत्रः, नक्षि गतौ (भ्वा० प०) "अमि-नक्षि (उ० ३,१०५)"—इत्यादिना अत्रन् प्रत्ययः] सततं गन्तारम् "अजरम्" जरा-रहितम् "सूर्य्यं" सर्व्वस्य प्रेरकमादित्यं "दिवि" अन्तरिक्षम् "आ रोहयः" उपर्य्यवस्थापितवानसि [यद्वा, नक्षत्रं कृत्तिकादिकं सूर्य्यञ्च दिव्यारोहयः]। किङ्कुर्वन्? "जनेभ्यः" सर्व्वेभ्यः प्राणिभ्यः व्यवहारार्थं "ज्योतिः" प्रकाशकं "दधत्" विदधत् कुर्वन्, यथा सर्व्वेषां प्रकाशो भवति तथा उन्नते देशे सूर्य्यमगमयदित्यर्थः ॥ ४ ॥

---

* पविं—पावनशीलम्'—इति वि० ।
† ऋ० वे० ८, ८, १४, ४ ।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
अग्नेकेतुर्विशामसिप्रेष्ठःश्रेष्ठउपस्थसत्।
१ २ ३ २उ ३ १ २
बोधास्तोत्रेवयोदधत्॥ ५ * ॥ १५

हे "अग्ने!" "विशां" प्रजानां यजमानानां "केतुः" केतयिता ज्ञापयिता "असि" भवसि। अतएव "प्रेष्ठः" प्रियतमः "श्रेष्ठः" प्रशस्यतमश्च भवसि स त्वम् "उपस्थसत्" उपस्थाने यज्ञगृहे निषीदन् "बोध" अस्मदीयं स्तोत्रमवगच्छ। किङ्कुर्वन्? "स्तोत्रे" स्तुवते जनाय "वयः" अन्नं "दधत्" विदधन् कुर्वन् प्रयच्छन् वा॥ ५॥ १५

अथाग्निर्मूर्द्धेतिषड्चात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ २ ३ १र २र ३ २ ३
अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम्।
३ १र २र
अपाᳬरेताᳬसिजिन्वति॥ १ †॥

"मूर्द्धा" देवानां श्रेष्ठः, "दिवः" द्युलोकस्य "ककुत्" "उच्छ्रितः", "पृथिव्याः" च "पतिः", "अयम्" "अग्निः" "अपां" "रेतांसि" स्थावर-जङ्गमात्मकानि भूतानि "जिन्वति" प्रीणयति॥ १॥

* ऋ० वे० ८, ८, १४, ५।
† छ० आ० १, १, ३, ७ (१भा० १३५ पृ०) = ऋ०वे० ६, ३, २९, २।

अथ द्वितीया ।

१ १२१ २ ३ २३ १ १ ३२र
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।
३ १ २ २३ १ २
स्तोता स्यान्तव शर्मणि ॥ २ * ॥

हे "अग्ने !" "स्वःपतिः" स्वर्गस्य स्वामी त्वं "वार्यस्य" वरणीयस्य "दात्रस्य" दातव्यस्य धनस्य "ईशिषे" ईश्वरोऽसि "शर्मणि" सुख-निमित्ते तव "स्तोता" "स्यां" भवेयम् ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ ३ १र २र
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
२३ १ २ ३ १ २
तव ज्योतींष्यर्चयः ॥ ३ † ॥ १६

हे "अग्ने !" "ते" तव "शुचयः" निर्मलाः "शुक्राः" शुक्लवर्णाः "भ्राजन्तः दीप्यमानाः "अर्चयः" प्रभाः "तव" "ज्योतींषि" तेजांसि "उदीरते" प्रेरयन्ति ॥ ३ ॥ १६

३ २ र र
॥ सत्रासाहायम् ॥ अग्ना३४मिः । मूर्द्धादिवःककुत् ॥
५ ५ १ र १ १
ओ६वा । पतिःपृथिवियाआ२याम । आ२याम् । रा
२ १ ८ २र ३र १ १ ५ ५
२३यिता । सिजौ३हो । वाहा३४३यि । ऌआर३४तोई६हा

* ऋ० वे० ६, २, १९, २ ।

१र २ २र ५ ५ १र
यि ॥(१) ईंग्रा३४यि। येवारियस्यद्धि। ओ६वा। दा
२ र १ १ २ १ ऽ
त्रस्याग्नेसुवःपार्२तायिः। स्तोर्२ता। स्थार३न्ता। वशो
२र ३र २ १ ५ ५ ३ २
३हो। वाद्दा३४३यि। मा२३४णो३द्दायि॥(२) उदा३
र ५ ५ १ र र र १
४। ग्नेशुचयस्तव। ओ६वा। शुक्राभ्राञ्जन्तईरार्२ता
१ २ १ ऽ १र ३र २
यि। वार्२वा। ज्यो२३तायि। षियौ३द्दो। वाद्दा
१ ५ ५
३४३यि। चा२३४यो६हायि(३) ॥ १५ * ॥ [१] १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य चतुर्दशस्याध्यायस्य चतुर्थः खण्डः † ॥ ४ ॥

---

॥ इति सप्तमस्य प्रथमार्द्धप्रपाठकः ‡ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १४ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे चतुर्दशोऽध्यायः ॥ १४ ॥

---

* ऊ० गा० १८प्र० २अ० १५सा० ।
† उक्ता एकाद्याः सोम-पर्य्यन्ताः—इति वि० ।
‡ 'सप्तमस्य प्रथमः प्रपाठकः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-तहेश्वरम् ॥ १५ ॥

॥ अथ पञ्चदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

कस्तेजामिर्जनानामिति त्वचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र २र ३ २ ३ २ ३क १र
कस्तेजामिर्ज्जनानामग्ने कोदाश्वध्वरः ।
२ ३ १ २ ३ २
कोहकस्मिन्नसिश्रितः ॥ १ * ॥

हे "अग्ने !" "जनानां" मनुष्याणां मध्ये "ते" तव "कः" "जामिः" को बन्धुः ? त्वं सर्वैर्गुणैरधिकोऽसि त्वत्स्वरूपो बन्धुर्नास्तीति भावः। "कः" "दाश्वध्वरः" [दाशुर्दत्त अध्वरो यज्ञो येन स तथोक्तः ] त्वां यष्टुमतिसमर्थः कोऽपि नास्तीत्यर्थः। "को ह" त्वं कथम्भूतः ? त्वमीदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः। "कस्मिन्" स्थाने "श्रितः" आश्रितः "असि" भवसि वर्त्तसे ? तत्स्थान-

---

* ऋ० वे० १, ५, २२, २ ।

मपि न केन विज्ञायते [ अतस्त्वमस्माभिः मांसदृष्टिभिः कथमुप-
लब्धव्यः ?—इत्यग्निः प्रशस्यते ] ॥ १ ॥

अथ द्वितीया ।

२ ३ १र १र ३ १ २ ३ १ १ २ ३ २
त्वञ्जामिर्ज्जनानामग्नेमित्रोअसिप्रियः ।
२ ३ १ २ ३ १ २
सखासखिभ्यईड्यः ॥ २ * ॥

हे "अग्ने!" "त्वम्" उक्त-प्रकारेण अचिन्त्य-रूपोऽपि अनु-
गृहीततया सर्वेषां "जनानां" "जामिः" बन्धुः "असि"। तथा
"प्रियः" प्रीणयिता त्वं यजमानानां "मित्रः" असि । "ईड्यः"
स्तुतिभिः स्तुत्यः त्वं "सखिभ्यः" समानेभ्यः ऋत्विग्भ्यः "सखा"
सखिवद्‌त्यन्तं प्रियोऽसि ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र १र ३ १ २ ३ २ ३ २ ३ १
यजानोमित्रावरुणायजादेवाँऋतम्बृहत् ।
१ ३ २ ३ १र २र
अग्नेयक्षिस्वन्दमम् ॥ ३† ॥ १

हे अग्ने ! "नः" अस्मदर्थं "मित्रावरुणा" एतन्नामकौ देवौ
"यज" हविषा पूजय । तथा "देवान्" इन्द्रादीन् "यज"
पूजय "ऋतं" सत्यं यथार्थ-फलं यज्ञञ्च यजेत्येव । तदर्थं

* ऋ० वे० १, ५, २३, ४ ।

† ऋ० वे० १, ५, २३, ५ ।

"बृहत्" प्रौढ़ं "स्व" स्वकीयं "दमं" यज्ञगृहं* "यच्छि" यज सङ्गच्छस्व त्वयि अन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ ३ ॥ १

अथ द्वितीय-तृचे—प्रथमा।

२ १ १ ३क २र ३ १र २र २ २
ईडेन्योनमस्यस्तिरस्तमाᳬसिदर्शतः।

२ ३ १ २ ३ १ २
समग्निरिध्यतेवृषा॥ १ † ॥

"ईडेन्यः" स्तोतृभिरीड्यः अतएव "नमस्यः" सर्वैर्नमस्कार्यः "तमांसि तिरः" ध्वान्तानि स्वाभाभिस्तिरस्कुर्वन् "दर्शतः" कमनीयतया सर्वैर्दर्शनीयः ; तादृशः "अग्निः" "वृषा" यजमानस्य कामानां वर्षिता "समिध्यते" आहुति-प्रक्षेपेण प्रज्वाल्यते। उक्तार्थं वाजसनेयकम्—"ईडेऽन्यो ह्येष नमस्यो ह्येष तिरस्तमांसि दद्दृशे समिद्धः"—इति ॥ १ ॥

अथ द्वितीया।

१२ ३ १र २र ३ २ ३ १२ ३ १ २
वृषो अग्निःसमिध्यतेऽश्वोनदेववाहनः।

२ ३ १ २
तᳬहविष्मन्तईडते॥ २ ‡ ॥

"वृषा उ" वृषैव¶ कामानां वर्षिता "देववाहनः [देवान् हवींषि वाहयति प्रापयतीति देव-वाहनः] तत्र दृष्टान्तः—

* 'सम्यक्—आत्मीयं वर्ण-रश्मि-संयुक्तम्'—इति वि०।

† ऋ० वे० ३, १, ३०, ३। ‡ ऋ० वे० ३, १, ३०, ४।

¶ 'उ—इति पादपूरणः'—इति वि०।

"अश्वो न" यथाश्वो राजानं वाहयति स्व-पुरं प्रापयतीति वाहन-भूतो यः "अग्निः" "समिध्यते" आहुति-प्रदानेन सम्यग् दीप्यते "तं" तादृशमग्निं "हविष्मन्तः" सम्भृत-हविष्का यजमानाः "ईळते" कर्म-सिद्ध्यर्थं स्तुवन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
वृषणन्त्वावयंवृषन्वृषणःसमिधीमहि।
१ ३ १ २ ३ २
अग्नेदीद्यतम्बृहत्॥ ३ * ॥२

"वृषन्" कामानां वर्षितः। हे "अग्ने!" "वृषणः" वृषणाः घृताद्याहुतीनां सेक्तारो वयं वृषणम् आहुति-द्वारा उदकस्य सेक्तारं तथा च स्मृतिः—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनु ३,७६)" —इति "दीद्यतं" दीप्यमानं "बृहत्" अतएव महान्तं तमिमग्निं "समिधीमहि" सम्यग् दीपयामः ॥ ३ ॥ २

तृतीय-तृचे—प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
उत्तेवृहन्तोअर्चयःसमिधानस्यदीदिवः।
१ २ २ १ २
अग्नेशुक्रासईरते॥ १ † ॥

* ऋ० वे० ३, १, ३०, ५।
† ऋ० वे० ६, ३, ३६, ४।

हे "दीदिवः" दीप्ताग्ने ! "समिधानस्य" समिध्यमानस्य "ते" तव "बृहन्तः" महान्तः "शुक्रासः" ज्वलन्तः "अर्चयः" दीप्तयः "उदीरते" उद्गच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१ २   ३ २   १ २ ३ १ २
उपत्वाजुह्वोऽ३ममघृताचीर्यन्तुहर्यत ।
१ २ ३ १ २
अग्नेहव्याजुषस्वनः ॥ २ * ॥

हे "हर्यत" कामयमानाग्ने ! "मम" मदीया "घृताचीः" घृतमञ्चन्त्यः जुह्वः स्रुचः "त्वा" त्वाम् "उप यन्तु" । "नः" अस्माकं "हव्या" हव्यानि "जुषस्व" सेवस्व च ॥ २ ॥

अथ तृतीया ।

३ १र   २र   ३ १ २ ३ १ २   ३ १ २
मन्द्रꣳहोतारमृत्विजञ्चित्रभानुंविभावसुम् ।
३ १ २ ३ १ २
अग्निमीडेसउश्रवत् ॥ ३ † ॥ ३

"मन्द्रं" मोदनं "होतारं" देवानामाह्वातारम् "ऋत्विजम्' ऋतौ यष्टव्यं "चित्रभानुं" विविधदीप्तिं "विभावसुं" दीप्तिधनम्‡

* ऋ० वे० ६, ३, ३६, ५ ।

† ऋ० वे० ६, ३, ३७, १ ।

‡ 'विभावसुं'—विश्वस्य सर्वस्य भावयितारम्'—इति वि० ।

"अग्निम्" "ईडे" स्तौमि। "सः" अग्निः "अवत् उ"* अस्मदीयां स्तुतिं शृणोत्येव ॥ ३ ॥ ३

५ र २ ४ र ५ २ १
॥ आमहीयवम् ॥ उत्तेबृ३हन्तोअर्च्चयाः। समायि

१ १ २ १र २ १
धा१ना२। स्वदा२३यिदिवाः। अग्नेभ्राक्रा। सश्रा२३

२ ५ २ ४ ५र २ १ २
यिरताउ। वा३ ॥(१) उपत्वा३जुह्वोममा। घृताचा

१ २ १र २ १
१यिर्या२। ओहा२३यंता। अग्नेहव्या। जुषा२३स्व

२ ५ २ ४र ५ २ १
नाउ। वा३ ॥(२) मद्र१ होऽ३तारमृत्विजाम्। चित्रा

२ १ २ १ २र १
भा१नू२म्। विभा२३वसूम्। अग्निमीडायि। सऊ

२ २र १ १ १ १
२३श्रवाउ। वा३। स्तोषे२३४५(३) ॥ १४ † ॥ [१]

२ र १ २ १ २ १
॥ जराबोधीयम् ॥ मन्द्र१ होतोवा। रामृत्विजाम।

२ १ २ र १ २
चित्राभा२३नूम्। विभावाहम्। अग्नायिमा१यिडा२३

४ ५ २ १
यिसाः। उ। अवो३४५ई। डा(२) ॥ १५ ‡ ॥ [२] ३

---

* 'उ—इति पद-पूरणः'—इति वि०।

† ऊ० गा० १०प्र० २ख० १४सा०।

‡ ऊ० गा० १०प्र० २ख० १५सा०।

अथ प्रगाथात्मके चतुर्थ-सूक्ते—

प्रथमा।

२ १ २ २१२ ३ ३ २ ३ १ २
पाहिनोअग्नएकयापाह्युऽ३ऽतद्वितीयया।

३ २ ३ २ ३ १ २ २ १२३ १ २
पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्वसो ॥१*॥

हे "अग्ने" "नः" अस्मान् "एकया" ऋचा गिरा "पाहि" रक्ष। "उत" अपिच "द्वितीयया" ऋचा "पाहि" पालय। "पाहि" "तिसृभिः" "गीर्भिः" "ऊर्जाम्" अन्नानां बलानां वा "पते" स्वामिन्!। तथा "पाहि" "चतसृभिः" गीर्भिः हे "वसो" वासकाग्ने!॥ १ ॥

अथ द्वितीया।

३ १र १२र ३२३ २ २ ३ १ ३ १ २
पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव।

१र २र ३ १ २ ३ १र २र ३ २
त्वामिद्धिनेदिष्ठन्देवतातयआपिन्नक्षामहेवृधे॥२†॥४

हे "अग्ने" "विश्वस्मात्" सर्वस्मात् "रक्षसः" "अराव्णः" अदातुः सकाशात्‡ "पाहि" रक्ष। सोऽस्मान् "वाजेषु" सङ्ग्रामेषु "प्राव" प्रकर्षेण रक्ष। "स्म"—इति पूरणः। "हि" यस्मात्

---

* ऋ० आ० १, १, ४, १ (१भा० १५१पृ०) ऋ० वे० ६, ४, २२, ४।

† ऋ० वे० ६, ४, २२, ५।

‡ 'अराव्णः—मिथ्याकर्म-कारिणः',—इति वि०।

"नेदिष्ठम्" अन्तिकतमम्* "आपि" बन्धुभूतं "त्वाम् इत्" त्वामेव† "देवतातये" यज्ञाय सिद्ध्यर्थं "वृधे" वर्द्धनाय "नक्षामहे" व्याप्नुमः [नक्षति व्याप्तिकर्मा (निघ० २, १८, २) ॥ २ ॥ ४

॥ रौरवम् ॥ पाहिनोअग्ना३आयिका२३४या । पाह्यु तद्वितीययापाहिगीर्भिस्तिसृभिरूर्ज्जांरम्पतायि । ओहा ३उवा । पाहिचतसृभार ३ यिर्वायि । ओहा ३ उवा । वसा । औ३होवा ॥(१) पाहिचतसृ३भिर्वा२३४साउ । पाहिचतसृभिर्वसोपाहिविश्वस्मात्स्वसोआ२रावणः । ओहा३उवा । प्रस्मवाजेषुना२३हायि । ओहा३उवा । अ वा । औ३होवा ॥(२) प्रस्मवाजेषू३नोआ२३४वा । प्रास्मवाजेषुनोवत्वामिद्धिजेदिष्टन्देवता२तयायि । ओहा३ उवा । आपिन्नक्षामहा२३यिहायि । ओहा३उवा । वृ धा । औ३होवा । होप्र्ई । डा(३) ॥ १६ ‡ ॥ [१]

---

* 'नेदिष्ठ'—गुणैरत्यधिकम्'—इति वि० ।

† 'इत्—इति पदपूरणः'—इति वि० ।

‡ ऊ० गा० १०प्र० २ख० १६गा० ।

२र र र र र र २ १ २
॥ दैर्घश्रवसम् ॥ पाहिनोअग्नएकया। ओहा। ओहा३ए।
१र १ २ १र २ ऽ १ ऽ १ २
पाहा२उतद्वितीयार्या। ओ३हा। ओ३हा३ए३४।
३र २ ३र १ १ २ र १ १
पाहा३४यिगीर्भायिः। नायिस्तृभिः। ऊर्ज्जाम्पतायि।
ऽ २ ऽ १ २ ३र २ ३ २ २ १
ओ३हा। ओ३हा३ए३४। पाहा३४यिचताइ। स्रभो
५ ४ ५
२३४वा। वा५सो६हायि(१) ॥ १७* ॥ [२]

३र १ २ र १ २ १ र
॥ सम्मतम् ॥ पाहिविश्वस्माद्रक्षसः। अरावृणःप्र
र र र र २ १ २ र
स्मवाजेषुनोअवा। तुवामा२३यिद्धि। नायिविष्ठन्दे।
२ १ ३र २ ३र २ १र
वताताया। औचो३४वाहायि। आ। पायिन्ना२३
२ १ २ २ १र २ १
न्नाइ। चोवा३हायि। मद्धेवार२३ह्वा३४३यि। ओ२३
४५ई। डा(३) ॥ १८† ॥ [३]

३र २ २ ४ ५र २
॥ यौधाजयम् ॥ पाहा३१यि। नो३अ। ग्न। आयिका
५ १ २ १ ३ २ २
२३४या। पाहा३यि। उता२। द्विता३४५। या२३४

* ऊ० गा० १०प्र० २ख० १७सा०

† ऊ० गा० १०प्र० २ख० १८सा०।

या। पाहायिगार्भायि। ति। ह्मार्श्यिः। ऊर्जा३४५म्।
पा२३४ते। पाहा२यि। चता२। मुभा३ ४ ५यिः।
वा२३४सो ॥(१) पाहा३१यि। चा३त। सू। भिर्वा२३
४साउ। पाहा३यि। चता२। सुभा३४५यिः। वा२
३४सो। पाहायिविश्वा। स्मात्। रचा२। सोआ३
४५। रा२३४वृणाः। प्रस्मा२यि। वाजा२यि। षुनो३४५।
आ२३४वा ॥(२) प्रस्मा३१। वा३जे। षु। नोआ२३४वा।
प्रास्मा३। वाजा२यि। षुनो३४५। आ२३४वा। तुवा
मिद्धायि। ने। दिष्ठन्दा२यि। वता३४५। ता२३४ये।
आपा२यिम्। नाचा२। महे३४५। वा २ ३ ४ ई(३)
॥ १९ * ॥ [४] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

* ऊ० गा० १०प्र० २ख० १९सा०।

अथ द्वितीय-खण्डे—

इनोराजन्निति त्र्यचात्मके प्रथम-सूक्ते,

प्रथमा।

३ १ २    ३ १र    २र ३
इनोराजन्नरतिःसमिद्धो

२ ३ १२    ३ १    २
रौद्रोदक्षायसुषुमाँ अदर्शि।

३ १र २र    ३ १ २ ३ १
चिकिद्विभातिभासाबृहता

२    ३ १ २    ३ १ २
सिक्नीमेतिरुशतीमपाजन्॥ १ * ॥

हे "राजन्" दीप्यमानाग्ने !† त्वम् "इनः" ईश्वरः सर्वस्य भवसि। अथ परोक्षः—"अरतिः" हविरादाय देवान् प्रति गन्ता "समिद्धः" सन्दीप्तः "रौद्रः" शत्रूणां भयङ्करः "सुषुमानः" ओषध्यात्मना स्थितेरंशुः सुष्ठु सूयत इति सुसोमः, तेन तद्वान् शोभन-प्रसवो वा सोऽग्निः "दक्षाय" यजमानानां धनादि-वृद्ध्यर्थं कर्म-वृद्ध्यर्थं वा "अदर्शि" सर्वैर्दृश्यते। किञ्च "चिकित्" सर्वं जानानोऽग्निः "विभाति" विशेषेण दीप्यते तथा "बृहता" महता "भासा" तेजसा ज्वाला-लक्षणेन "असिक्नीं" रात्रिम् "एति" सायं-होम-सिद्ध्यर्थं गच्छति। किङ्कुर्वन् ? "रुशतीं"

* ऋ० वे० ७, ५, ११, १।

† 'इनः राजाभिधीयते, द्वितीयं यद्राज-ग्रहणं तदग्नेरेव सोमत्वं प्रतिपादयति' —इति वि०।

श्वेतवर्णां दीप्तिम् "अपाजन्" अपगमयन् सर्वतो विकिरन् [यद्वा, रुशतीं दीप्तामुषस मागच्छन् अपक्षिपन् परित्यजन्] रात्रिं गच्छति। सामर्थ्याद्रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्ध्यर्थं गच्छतीत्यर्थो लभ्यते ॥ १ ॥

अथ द्वितीया।

३ १र २र ३ १र २र ३ २
कृष्णांयदेनीमभिवर्पसाभू

३ २३ १ २ ३ २ ३ २
ज्जनयन्योषांबृहतःपितुर्ज्जाम्।

३ २ ३ १र २र ३ २
ऊर्द्ध्वम्भानुꣳसूर्यस्यस्तभाय

३ १र २र ३ १र १र
न्दिवोवसुभिररतिर्विभाति ॥ २* ॥

सोऽग्निः "यद्" यदा "कृष्णां" कृष्ण-वर्णाम् "एनीं" गच्छन्तीं रात्रिं "वर्पसा" आत्मीयेन ज्वाला-लक्षणेन रूपेण "अभिभूत्" अभिभवति। किङ्कुर्वन्? "बृहतः" महतः "पितुः" सर्वस्य जगतः पालयितुः पितृभूताद्वा आदित्यात् "जां" जायमानां "योषाम्" उषसं "जनयन्" अभिव्यञ्जयन्। तदा "अरतिः" गमनशीलोऽग्निः "दिवः" द्युलोकस्य "वसुभिः" वासयितृभिः आच्छादनैः आत्मीयैस्तेजोभिः "सूर्यस्य" "भानुं" दीप्तिम् "ऊर्द्ध्वम्" उपरिष्टात् "स्तभायं" स्तम्भयन् "वि भाति" विशेषेण दीप्यते ॥ २ ॥

* ऋ० वे० ७, ४, २१, २।

अथ तृतीया।

३ २ ३ २ ३ १ २ ३ २ ३
भद्रोभद्रयासचमानआगात्

१ २ ३ २ ३क २र ३ २
स्वसारञ्जारोअभ्येतिपश्चात्।

३ १ २ ३ २ ३ २ ३ १
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्

२ ३ १ २ ३ २ ३ १ २
रुशद्भिर्वर्णैरभिराममस्थात्॥ ३ *॥ ५

"भद्रः" भजनीयः कल्याणः "भद्रया" भजनीयया 'सचमानः "आगात्" आगच्छति। ततः "पश्चात्" "जारः" जरयिता शत्रूणां "सोऽग्निः" "स्वसारं" स्वयं सारिणीं भगिनीं वा आगतामुषसम् "अभ्येति" अभिगच्छति। तथा "सुप्रकेतैः" "सुप्रज्ञानैः "द्युभिः" दीप्तिभिस्तेजोभिः सह "वितिष्ठन्" सर्वतो वर्त्तमानः सोऽग्निः "उशद्भिः" श्वेतैः "वर्णैः" वारकैराग्नेयैस्तेजोभिः "रामं" कृष्णं शार्वरं तमः† "अभ्यस्थात्" सायं-होमकाले अभिभूय तिष्ठति॥ ३॥ ५

* ऋ० वे० ७, ५, ११, ३।

† "अभिरामं—अभिरमणीयं रूपमस्थात्"—इति वि०।

॥ औशनम् ॥ आयिनाः । राजन्नरतायिः । समा
३यिद्वाः । राजानरतायिः । समा३यिद्वाः । रौद्रोदच्चा ।
या३सुषु । मा९अदशा । चिकिद्विभातिभासा । वृत्रा
२३ता । असिक्नीमायि । तौ३रुश । तौ३४३म् । आ
२पा५जा६५६न् ॥(१) कार्ष्णम् । यदेनीमभिवा । प
सा३भूत् । जनयन्यो । षा३मृह । तःपितुर्ज्जाम् । ऊ
र्ध्वभानु९र्य्यंस्था । स्तभा२३यान् । दिवोवद्व । भी३
रर । ता३४३यिः । वा३यिभा५ता६५६यि ॥(२) भाद्राः ।
भद्रयासचमा । नआ३गात् । स्वसारञ्जा । रो३षभि ।
एतिपश्चात् । सुप्रकेतैर्द्युभिरग्नायिः । विता२३यिष्ठान् ।
रुशद्भिर्वा । णै३रभि । रा३४३ । मा ३ मा ५ स्था ६
५६त्(३) ॥ २० * ॥ [१] ५

---

* ऊ० गा० १०प्र० २ख० २०गा० ।

अथ द्वितीय-सूक्त—

प्रथमा।

१ २ ३ १ २ ३ १ २
कयाते अग्ने अङ्गिरऊर्जोनपादुपस्तुतिम्।

१ २ ३ १ २
वरायदेवमन्यवे॥ १ *॥

हे "अङ्गिरः" अङ्गिरसां वरिष्ठ! [यद्वा, अङ्गति सर्वत्र गच्छतीति अङ्गिराः तादृश!] हे "ऊर्जोनपात्" ['नपात्'—इत्यन्न-नाम (निघ०२,२,१३)] अन्नस्य पुत्र! [हविर्भिर्वर्द्धमानत्वात्! यद्वा नपादिति नप्ता, हविर्लक्षणस्यान्नस्य नप्ता!। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनुः३,७०)"—इति वृष्टेरोषधय ओषधिभ्योऽग्निरिति अन्नस्य नप्ता] हे "देव" द्योतमान! "अग्ने" "वराय" सर्व्वैर्वरणीयाय† "मन्यवे" अनूनभिमन्यमानाय‡ "ते" तुभ्यं "कया" कीदृश्या वाचा "उपस्तुति" स्तोत्रम् अहं भरेयम्। त्वं महान् खलु अहमल्पः तदर्थं कथं स्तुतिं कुर्य्यामिति ऋषिरग्निं प्रति वदति॥१॥

---

* ऋ० वे० ६, ३, ५, ७।

† 'वराय—वरिष्ठाय'—इति वि०।

‡ 'मन्यवे—दीप्तये'—इति वि०।

अथ द्वितीया।

१ २ १ २ १ १ २ ३ १ २
दाशेमकस्यमनसायज्ञस्यसहसोयहो।
१ २ ३ १ २
कदुवोचइदन्नमः॥ २ * ॥

ऋषिरग्निमप्रति ब्रूते—हे "सहसोयहो"१ ['यहुः'—इत्यपत्य-नाम (निघ० २,२,११) बलेन निष्पाद्यमानत्वात्] बलस्य पुत्र! हे अग्ने! "कस्य" कीदृशस्य "यज्ञस्य" यज्ञवतो यजनीय-देववतो वा यजमानस्य "मनसा" युक्ताः सन्तो हवींषि तुभ्यं वयं "दाशेम" प्रयच्छेम† [पूजायां बहुवचनम्] किञ्च, तुभ्यम् "इदं" "नमः" हविर्नमस्कारं वा "कत्" कदा‡ "वोचे" अहं वदामि? "उ" [—इति प्रश्ने। ऋषिः, 'कदा दास्यामि? कदा स्तोष्यामि?'—इत्यग्निं पृच्छति। वोचे—ब्रूआदेशस्य लुङ्यात्मने पदे उत्तमैकवचने रूपम्]॥ २॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १
अधात्वंहिनस्करोविश्वाअस्मभ्यꣳसुक्षितीः।
१ २ ३ १ २
वाजद्रविणसोगिरः॥ ३ ¶ ॥ ६

* ऋ० वे० ६, २, ५, ५।

† 'दाशेम—दद्म'—इति वि०।

‡ 'कत् उ वोचे—कदुवोचे—इत्येवं द्रष्टव्यम्। नपुंसको पुंल्लिङ्गः'—इति वि०।

¶ ऋ० वे० ६, ६, ९, १।

हे अग्ने! "अध" अथानन्तरं "त्वं हि" [हिरवधारणे] त्वमेव "अस्मभ्यम्" "कर:" कुरु देहीत्यर्थः [करोतेर्लेटा-ड़ागमः]। किमित्यपेक्षायामाह—"नः" अस्मदीयाः "गिरः" त्वद्विषयाः "विश्वाः" सर्वाः स्तुतीः एवं कुरु यथा "सुक्षितीः"* [क्षियन्ति निवसन्त्यत्रेति, क्षितयो गृहाः शोभन-निवासाः यद्वा] क्षित-मनुष्याः—कल्याण-पुत्र-पौत्र-युक्ताः, तथा "वाजद्रविणसः" अन्न-युक्ता धनवतीः अथवा वाजो दीप्तिः सर्व्वतो दीप्तिधनाश्च कुरु। त्वमस्माभिः स्तुतः सन् गृह-पुत्रान्न-धनादीनि देहीत्यर्थः॥३॥

३ र र ४ २ ४
॥ महावामदेव्यम्॥ काऽ५या। तआ३ग्ने३अङ्गि

५ १ र र २ १ र २
राः। ऊ। जोनयादुपस्तु। तायिम्। औ२३होहा

१ २ १र १ १ १
यि। वरा२३यदायि। वमौहो३। ऊम्मा२। न्याऽ२

२ ३ र ४ २ ४ ५ १
वो३५हायि॥(१) दाऽ५शे। मका३त्या३मनसा। या।

२ र १ २ र २ १ र २
ज्यसद्दसोय। द्दा। औ३हो३हायि। कदू२३वोचायि।

२ र १ १ १ २ ३
द्दुदौहो३। ऊम्मा२। नाऽ२मो३५हायि॥(२) आऽ५

र ४ २ ४ ५ १ र
धा। तुवा३ए२दा३यिनस्कराः। वायि। श्वाअस्मभ्य२

* 'सुक्षितीः—शोभनाः क्षितीः पोषाणि अधस्तात् करोषि'—इति वि०।

१ १ २ १ १र २
सुश्रि। तायिः। औ२३होहायि। वाजा२३इवायि।
३ र २ १ १ २
णहोवो३। ऊम्मा२। गा२यिरो३५हायि(३) ॥१*॥ [१]६

अग्न आयाहीति प्रगाथरूपे तृतीय-सूक्ते,

प्रथमा।

२ ३ १ २ ३ २ ३ १ २
अग्न आयाह्यग्निभिर्होतारन्त्वावृणीमहे।
१र २र ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
आत्वामनक्तु प्रयताहविष्मतीयजिष्ठम्बर्हिरासदे॥१†॥

हे "अग्ने!" "अग्निभिः" यष्टव्यैः सह "आ याहि" आगच्छ। तदर्थं "होतारं" देवानामाह्वातारं "त्वा" त्वां "वृणीमहे" त्वामागतं "प्रयता" अध्वर्युहस्ताभ्यां नियता "हविष्मती" घृतवती "यजिष्ठ" "बर्हिः" बर्हिषि "आसदे"‡। आसाद्य च "अनक्तु" सिञ्चतु ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ २ ३ ३ १ २ ३ २
अच्छाहित्वासहसःसूनोअङ्गिरःस्रुचश्चरन्त्यध्वरे।
३ १र २र ३ १ २ ३ १ ३ १ २ ३ २
ऊर्जोनपातङ्घृतकेशमीमहेऽग्निंयज्ञेषुपूर्व्यम् ॥ २¶॥ ७

---

* ऊ० गा० ११प्र० १अ० १सा०।

† ऋ० वे० ६, ४, ३१, १।

‡ 'आसदे—आसादनार्थम्'—इति वि०।

¶ ऋ० वे० ६, ४, ३१, १।

हे "सहसः सूनो" बलस्य पुत्र! बलेन मथ्यमानत्वात्, हे "अङ्गिरः" अङ्गिरसां मध्ये मुख्य!* [अथवा अङ्गतिर्गति-कर्म्मा सर्व्वत्र गन्तः!] "त्वा" त्वाम् "अध्वरे" यागे "अच्छ" अभिप्राप्तुं "स्रुचः" "चरन्ति" गच्छन्ति। अतः "ऊर्जः" अन्नस्य "नपातं" नपातयितारं रक्षकं बलस्य वा नप्तारं† "घृतकेशं" प्रदीप्तकेशं‡ "पूर्व्यं" पुरातनं, प्रेरकं वा "अग्निं" "यज्ञेषु" अस्मदीयेषु "ईमहे" स्तौमि॥ २॥ ७

॥ नौधसम्॥ आ२३४। इनआयाहिय। इनायि भायिः। होतारन्त्वा। वा३र्णायिमा३हायि। आ२३ त्वाम्। आनक्तु। प्रय। ता। हाविष्मा२ ३ ४ती। या २३जायि। ष्ठम्बर्हिरो२३४वा। सा२३४दे॥(१) या२३ ४। जिष्ठम्बर्हिरा। सादायि। यजिष्ठम्बा। हो३रासा ३दायि। आ२३च्छा। हायित्वा। सह। साः। नो

---

* 'अङ्गिरः—अन्नानां रसभूतः जठरस्त्वमेव'—इति वि०।

† 'ऊर्जोनपातम्—अन्नानां पुत्रभूतम्, अन्नाद्धत्या अग्निर्जायते तेन पुत्रः अथवा अन्नानां पवितारं रक्षितारमित्यर्थः'—इति वि०।

‡ 'घृतकेशं—केशभूता ज्वाला घृतेन वर्त्तते तस्माद् घृतकेशोऽग्निः तम्'—इति वि०।

२ ३ ५ १ २ १ २ १ ५
अङ्गा२३४यिराः। सू२३चाः। चारन्तियो २ ३ ४ वा।
३ ५ १ ५ ४ ५ २
ध्वा२३४रे ॥(२) सू२३४। चस्वरन्तिय। ध्वारायि। सु
१ १ १ २ २ १ २ १र २
चस्वरा। ती३आध्वा३रायि। ऊ२३र्जो। नापातम्।
१२ १ ५ ३ ५ १ २ १
घृत। के। शामायिमा२३४हायि। आ२३ग्नीम्। या
र २ १ ५ ३ ५
म्रे षुपो२३४वा। वो२३४याम्(३) ॥ २ * ॥ [१]
२ र र २ १ र
॥ नैपातिथम्॥ अग्नआयाह्यग्निभा३यिरे। होता
१ र १ २ २ ३र ५ १र
रन्वा। वृणायिमहा३यि। हा। औहो२३४हा। आ
र १ १२र १ ७ २ ३र
त्वामनक्तुप्रयता। हवायिष्मता२३यि। हा। औहोर
५ २ १ १ २ ३र ५ २
३४हा। यजायिष्टाम्बा३। हा। औहो२३४हा। हा
३ ५र र ३ ५ १ र
रयिरा२३४औहोवा। सा२३४दे ॥(१) यजिष्ठम्बहिरास
२ १ २ १ २ २ ३र
दा३ए। याजिष्ठम्ब। हिरासदा३यि। हा। औहोर
५ १र २र १ २१र १र१ ७
३ ४ हा। अच्छाहित्वासहसः सू। नोआङ्गिरा २ ३ः।

---

* क० ग्रा० ११प्र० १अ० २सा०।

२  ३र  ५  २ १  २  २  ३र
हा। औहो२३४हा। सुचास्वारा३। हा। औहो२३

५  १  २  ५र र  २  ५  २
४हा। ता२आ२२४औहोवा। ध्वा२३४रे ॥(२) सुचस

२  १ २  १ २  २  ३र
रन्त्यध्वरा३ए। सूयस्वर। तियाध्वरा३यि। हा। औ

५  २र१र र २  १२र  १  ७
हो२३४हा। ऊर्ज्जोनपातङ्कृतके। शमायिमहा२३यि।

२  ३र  ५  २ १  २  २  ३र
हा। औहो२३४हा। अग्नायिंयाआ३। हा। औ

५  १  २  ५र र  २
हो २ ३ ४ हा। पू २ पू २ ३ ४ औहोवा। वा २ ३ ४

५
याम्(३) ॥ ४ * ॥ [२] ७

अच्छानइति प्रगाथात्मके चतुर्थ-सूक्ते—

तत्र प्रथमा।

१ २  ३ १ २  ३ १ २  ३ २
अच्छानःशीरशोचिषङ्गिरोयन्तुदर्शतम्।

१ २ ३ २ ३ १ २  ३१२  ३२ ३१२
अच्छायज्ञासोनमसापुरूवसुम्पुरुप्रशस्तमूतये ॥१†॥

* ऊ० गा० १२प्र० ३ख० ४सा० ।

† ऋ० वे० ६, ५, १२, ५ ।

"अच्छ" अभिमुखं "यन्तु" गच्छन्तु "नः" अस्माकं "गिरः" स्तुतयः। कम्? "शोरशोचिषम्"* अग्रानशोलज्वालं वाग्निं "दर्शतम्" सर्वैर्दर्शनीयम्। तथा "यज्ञासः" यज्ञस्य अस्मदीया "नमसा" हविषा आज्यादि-लक्षणेन "अच्छ" अभिमुखं "यन्तु" गच्छन्तु। कीदृशम्? "पुरुवसुं" प्रभूत-धनं "पुरु-प्रशस्तं" बहुभिः सम्यक् स्तुतम्। किमर्थम्? "ऊतये" अस्माकं रक्षणाय॥ १॥

अथ द्वितीया।

३ २ ३१र २र ३ १२ ३ २ ३१२
अग्निꣳसूनुꣳसहसोजातवेदसन्दानायवार्य्याणाम्।
१ २उ ३१२ २३१र २र ३ १ २ ३ २
द्विताय़ोभूदमृतोमर्त्त्येष्वाहोतामन्द्रतमोविक्षि॥२†॥८

"यः" अग्निः "अमृतः" अमरण-धर्म्मा देवेषु भवति, सः "मर्त्त्येषु आ" [आकारश्चार्थे] "मर्त्येषु" मनुष्येषु च "अभूत्" अभवत्—इत्येवं "द्विता" द्वैधं भवति। देवेऽप्यमृतत्वमस्य प्रसिद्धम्। मनुष्येषु कीदृशोऽभूत्? उच्यते—"विक्षि" विक्षु यजमानरूपासु प्रजासु "होता" होम-निष्पादकः "मन्द्रतमः" मादयितृतमश्च भवति। तमच्छ यन्त्विति समन्वयः [अथवा 'यः' अमृतः 'द्विता' द्वित्वं द्वैधं द्विःप्रकारोऽभूत्। कथं मर्त्त्येषु सामान्येन तदाह—पाकादि-साधनो भवदित्येतत् प्रसिद्धम्

* 'शोचिश्शोचम्'—इति वि०।

† ऋ० वे१ ६, ५, १२, ५।

'वियि' यजमानरूपायां तु 'होता' 'मन्द्रतमश्च' अभवदित्येवं द्वित्वम्] ॥ २ ॥ ८

५ र २ ४र ५ ४र ५ २ १
॥ कालेयम् ॥ अच्छानाः३:शीरशोचिषाम्। गिरो

१ १ २ १ २ ३र २ १ १
यन्तू। दर्शतार३म्। अच्छायज्ञा३। सो२३४। नम

४र ५र २ ३ ३ ३ २ २ ५ ४
सापुरू। वा३सूम्। पुरुप्रशौ। वा३४३ओ३४वा। स्त

५ २ ४ ५ ४र ५ २ १ २ १ २
मूपूतयायि ॥(१) पुरुप्रा३शस्तमूतयायि। पुरुप्रशा। स्त

३र २ १ १ ३ र २ १ ३ ४र र
मूतया२३यि। अग्निꣳसून३म्। सा२३४। यसोजा

५र २ २ १र ३ २ २ ५ ४
तवे। दा३साम्। दानायवौ। वा३४३ओ३४वा। रि

र र २ ४र ५ ४र ५र २र १ २
या५णाम् ॥(२) दानाया३वारियाणाम्। दानायवा।

र १ १ ३र र २ १ २ ४र
रिया३२३म्। हितायोभू३त्। आ२३४। मृतोमर्त्ति

५र२ २ १र ३ २ २ ५ ४
योषू३वा। होतामन्द्रौ। वा३४३ओ३४वा। नमोपुवि

४
शायि। होपुइ। डा(३) ॥ ३ * ॥ [१]

१ र र २ २
॥ आयन्तीयम् ॥ अच्छानःशीरशो१चायिषाम्। गि

* ऊ० गा० ११प्र० १ख० ३सा०।

१ १ र २१र १र १२र
रो२यन्तू२। दा२र्शीनाम। आच्छायज्ञासोनमसा।
१२ १२र१२र १ २ १ २
पुरूवा१रू२म। पुरुप्रशस्तमूतये। पू२३रू। प्रशास्ता
२ १ ३२ १ ५ २
३मू। ऊम्। तया३। ओ२३४वा ॥(१) पुरुप्रशस्तमू
२ १ १ १ १ ७
१तायायि। पुरु२प्रशा२। स्तमू२तायायि। आगि
२र१ २र र १ २ र १र२१र
ं्वनुं्सहसोजा। तवायिदा१सा२म। दानायवारि
२र १ २ १ २ २ १ ३र२
याणाम्। दा२३ना। यावा३री। ऊम्। याणा३म्।
१ ५ २ र र २ १ १
ओ२३४वा ॥(२) दानायवारी१याणाम्। दाना२यवा
१ ७ २र १२र १
२। री२याणाम्। द्वायितायोभद्रतोम। तियायि
२ १र र २ १ २र १ २ १
षू१वा२। द्योतामन्द्रतमोविशि। द्यो२३ता। मन्द्रा
२ २ १ १२ १ ५ ३ १ १ १
ता३माः। ऊम्। विशा३। ओ२३४वा। ह्वे २ ३ ४
१
५(३) ॥ ७ * ॥ [२] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

---

* ऊ० गा० २३प्र० ३ष० ७सा० ।

अथ तृतीय-खण्डे—

अदाभ्यइति तृचात्मके प्रथमे सूक्ते,

प्रथमा।

१ २ ३१ ३ २ ३ १र २र
अदाभ्यःपुरएताविशामग्निर्मानुषीणाम्।
१ ३ २३ १२ १२
तूर्णीरथःसदानवः॥ १ *॥

"मानुषीणां" मनोर्जातानां "विशां" प्रजानां "पुरएता" सन्मार्ग-दर्शनेनानाग्रतो गन्ता, अतएव "तूर्णीः" तूर्णिताः† प्रजाः विहित-कर्म्मप्रवर्त्तनेनानुगृहीतुं त्वरा-युक्ताः आलस्य-रहिताः "रथः" हविषां वहनाद्रथ-सदृशः "सदा" सर्वदा तत्कर्म्मणि "नवः" नूतनः पुनर्मथनादभिनवः, एवंविधोऽग्निः "अदाभ्यः" अहिंस्यः न केनापि तिरस्कार्यइत्यर्थः॥ १॥

अथ द्वितीया।

३ १र.२र ३ १ २ ३ १ २ ३ १ २
अभिप्रयाꣳसिवाहसादाश्वाꣳअश्नोतिमर्त्त्यः।
१ २ ३ १ २
क्षयम्पावकशोचिषः॥ २ ‡॥

---

* ऋ० वे ३, १, ८, ५।

† 'तूर्णीः—त्वरितगामी'—इति वि०।

‡ ऋ० वे० ३, १, १०, १।

"दाश्वान्" हविषां दाता "मर्त्त्यः" मनुष्यः यजमानः "वाहसा" हविषां वाहकेनाग्निना "प्रयांसि" अन्नानि "अभि अश्नोति" अभितः सर्वतः प्राप्नोति । किञ्च "पावक-शोचिषः" शोधकदीप्तेः अग्नेः सकाशात् "क्षयं" गृहं चाप्नोति ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।

१ २ ३ १ २
अग्निस्तुविश्रवस्तमः ॥ ३* ॥ ९

"अभियुजः" अभियोक्त्रीः "विश्वाः" सेनाः "साह्वान्" सहमानः स्व-बलेन तिरस्कुर्वाणः अतएव "अमृक्तः" शत्रुभिरहिंसितः "देवानां" "क्रतुः" कर्त्ता हविः-प्रदानेन पोषकः† । एवम्भूतः "अग्निः" "तुविश्रवस्तमः" [तुवि-शब्दो बहु-वाची ( निघ० ३,१,२ ), श्रवः-शब्दोऽन्नवाची ( निघ० २,७,८ ) ] अतिशयेन बहुविधान्नोपेतो वर्त्तते यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान् करोत्विति भावः ॥ ३ ॥ ९

१ र १ १ २
॥ संहितम् ॥ अदाभ्यःपुरः । आ२यिता । विशा

१ २ १र १ २
२म । आ२३गोः । मानू२षायिणाम् । तू२३णोः ।

१ ७ २ ५
रा२थाः । सदा२३ । हाउवा३ । ना२३४वाः ॥(१)

---

* ऋ० मे० ३, १, १० २ ।

† 'क्रतुः—यज्ञः'—इति वि० ।

२ १ २र १ २र १ २
अभिप्रयाꣳसि। वा२हसा। दाश्वा२ꣳ। आ२३श्नो।
१ १ २ १ ७
तिमा२र्त्तायाः। च्चा२३याम्। पा२वा। कश्नो२३।
२ ५ १र१र २र
च्चाउवा३। चौ२३४षाः॥(२) साङ्काग्विश्वाश्च। भा२
२ २ १ २ १र १
यियुजाः। क्रतू२ः। दा२३यिवा। नामा२मार्त्ताः।
२ १ ७ २
आ२३गीः। तू२वायि। श्रवा२३। च्चाउवा३। ता२३
५
४माः(३)॥ ४ *॥ [१] ९

अथ भद्रोनोअग्निराहुत इति प्रगाथात्मके द्वितीयसूक्ते,

सैषा प्रथमा।

३ १ २ ३ १र २र ३ २ ३ १ २ ३ १ २ २ १
भद्रोनोअग्निराहुतोभद्रारातिःसुभगभद्रोअध्वरः।
२ २ ३ १र २र
भद्राउतप्रशस्तयः॥ १ †॥

"आहुतः" हविर्भिस्तर्पितः "अग्निः" "नः" अस्माकं "भद्रः" कल्याणः भवतु। हे "सुभग" शोभन-धनाग्ने! "भद्रा"

---

* ऊ० गा० ११प्र० १ख० ४सा०।

† ऋ० श्रा० ६, १, २, ५ (१भा०२८२पृ०) = ८, १, ३२, ४ = य० वे १५, ३८-३९।

कल्याणी "रातिः" दानं चास्माकं भवतु। '"भद्रः" कल्याणः "अध्वरः" यागश्च भवतु। "उत" अपिच "भद्राः" कल्याणाः "प्रशस्तयः" प्रशंसाः स्तुतयश्च भवन्तु॥ १ ॥

अथ द्वितीया।

३ १र २र ३ २ ३ १ २ ३ १ १ ३ २
भद्रम्मनःकृणुष्वव्वृत्रतूर्येयेनासमत्सुसासहिः।
१ १ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अवस्थिरातनुहिभूरिशर्द्धतांवनेमातेअभिष्टये॥ २* ॥ १०

हे "अग्ने!" "वृत्रतूर्ये" सङ्ग्रामे "भद्रं" "मनः" "कृणुष्व" अस्माकं कुरु। "येन" मनसा त्वं "समत्सु" सङ्ग्रामेषु "सासहिः" भृशं शत्रूनभिभवसि। अपिच "शर्द्धताम्" अभिभवतां शत्रूणां "भूरि" भूरीणि बहुनि "स्थिरा" स्थिराणि दृढ़ान्यपि बलानि "अव तनुहि" पराजितानि कुरु। वयञ्च "अभिष्टिभिः"† अन्वेषण-साधनैः हविर्भिः स्तोत्रैश्च¶ "ते" त्वां "वनेम" सम्भजेमहि [यद्वा, 'ते' तव प्रसादात् अभिष्टिभिः अभीष्टैः फलैः 'वनेम' सङ्गच्छेमहि]॥ २ ॥ १०

---

* ऋ० वे० ६, १, ३२, ५ = य० वे० १५, ३९-४०।

† "अभिष्टिभिः"—इति ऋ०-पाठः य०-पाठश्च।

¶ 'अभिष्टिभिरित्यन्यान्यवेदीय पाठमवलम्ब्यैवं व्याचष्टे। विवरणकारेणत्वत्र यथायथं सामवेदीयमेव पाठमवलम्ब्य व्याख्यातम्; तथाहि—'अभिष्टये—अभिष्टिर्यज्ञः तस्मै अभिष्टये'—इति।

२ १र २ ४ ५ २ ३ ५ ५ २
॥ सप्तम् ॥ भद्रोनोऽ३अग्निः । आ३२३४ता: । भ

१र २र १ १ २ ४ २ ५
द्रारातायिःह्न२ । भगभाद्रोऽ३आ३ । ध्वा३२३४रा: ।

१ १ २ ४ २ ५
भद्रा: । उताप्रा३आ३ । स्ता३४५यो६हायि(१)॥५*॥[१]१०

अथाग्नेवाजसीति तृतीय-तृचे,

प्रथमा ।

२ ३ १ १ २ १ २ ३ १ २
अग्नेवाजस्यगोमतईशानःसहसोयहो ।

२ १ २ ३ २ ३ १ २
अस्मेदेहिजातवेदोमहिश्रवः ॥ १ † ॥

हे "सहसः यहो" बलस्य पुत्र ! "अग्ने !" "गोमतः" बहुभिर्गोभिर्युक्तस्य "वाजस्य" अन्नस्य "ईशानः" ईश्वरस्त्वमसि । अतः "अस्मे" अस्मासु हे "जातवेदः" जातधन ! जातानां वेदितो वाग्ने ! "महि" प्रभूतं "श्रवः" अन्नं "देहि" प्रयच्छ । [सहसोयहो—पराङ्गवद्भावात् "आमन्त्रितस्य च (८, १, १९)" —इति षष्ठ्यामन्त्रित-समुदायो निहन्यते । अस्मे—सुपां सु-लुक् (७, १, ३९)—इति सप्तम्याः शे-आदेशः ॥ १ ॥

---

* ऊ० गा० ११प्र० १ख० ५सा० ।

† ऋ० आ० १, १, १, १, (१भा० ११२ प० ) = ऋ० वे० १, ४, १०, ४ = य० १४, ३५।

अथ द्वितीया ।

१ २ ३ १२ १२ ३ १ २ ३ २ ३ १ २ ३ १
सद्धानोवसुःकविरग्निरीडेन्योगिरा ।
३ २३ १ १
रेवदस्मभ्यम्पुर्वणीकदीदिहि ॥ २ * ॥

"सः" अग्निः "इधानः" दीपन-शीलः "वसुः" निवासयिता सर्वेषां, "कविः" क्रान्त-दर्शनः मेधावी वा "गिरा" स्तोत्र-रूपया वाचा "ईडेन्यः" स्तोतव्यो भवति हे "पुर्वणीक" अनीकं मुखं पुरुभिः बह्वीभिः अनीक-स्थानीयाभिः ज्वालाभिः युक्ताग्ने ! "अस्मभ्य" "रेवत्" धन-युक्तमन्नं यथा भवति तथा "दीदिहि" दीप्यस्व [दीदेति छान्दसो दीप्ति-कर्मा] ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ २उ ३ १ २ ३ १२ १२
अपोराजन्नुतत्मनाग्नेवस्तोरुतोषसः ।
१ २ ३ १ २ ३ १ २
सतिग्मजम्भरक्षसोदहप्रति ॥ ३ † ॥ ११

हे "राजन्" राजमान ! "अग्ने" ! "अप:" राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व । "उत" अपिच "त्मना" न केवलं अन्यैरेव आत्मना च तान् बाधस्व । कदा ? इति चेत्, उच्यते— "वस्तोः" सर्वाण्यहानि‡ "उत" अपिच "उषसः" कालोपलक्षण-

* ऋ० वे० १, ५, १०, ५ = य० वे० १५, ३६ ।

† ऋ० वे० १, ५, १०, ६ = य० वे० १५, ३७ ।

‡ 'वस्तो'—गृहस्य उपद्रवकराः'—इति वि० ।

रात्रीषु [अत्यन्तसंयोगे द्वितीया ( २, ३, ४ ) सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः] "हे तिग्मजम्भ" तीक्ष्ण-मुखाग्ने ! "रक्षसः" राक्षसान् उक्त-प्रकारेण क्षपयित्वा स एव त्वं "प्रति दह" प्रत्येकं प्रतीत्य दह न किञ्चिद्दग्धव्यमित्युदास्वेत्यर्थः ॥ २ ॥ ११

२ १र २ ४ ५ २ ३ ५ २र
॥ पौष्कलम् ॥ अग्नेवा३जस्य। गोमा२३४ताः। ई
१र २ १ २ ३ ५ ११र र ७र
शानःसा। हासोया२३४हो। अस्मायिदेहायि। जा
३ २ १ २ १ १ १ १
ता२वा२३४५यिदा६५६ः। मह्यिश्रवा२३४५ः(१) ॥ ६* ॥१]

१ र र र १ २र १र
॥ ऋध्यम् ॥ अग्नेवाजा२स्य। गोमतोवा। ईशा
२ १ १ २र १ १ २ १ २ र १र १र र १
नःसा। हसोयहो। अस्मायिदेहिजातवेदोम। हा२३
२ १र १ र
यि। श्रवाउवा। ऋधिया२॥(१) सह्यधानो२व। सु
१ २ १ २र १ १ २र २ १ १र १ १ १ १
क्रवोवा। अगिरोआयि। नियोगिरा। रेवदस्मभ्यम्पु
र १ २ १र
र्वणीक। दा२३यि। दिद्याउवा। ऋधिया२॥(२)
१ र र २ ११र २ १ १ २र २ १
क्षपोराजा२नु। तत्मनोवा। अग्नेवस्तोः। उतोषसाः।

● क०'मा० ११प्र० १ख० ६षा०।

२ १२१ १ २
स्तिम्मजम्भरत्सोद। द्दा२३। प्रताउवा। प्रधिया

१ १ १
२। ए२३ष्ठिया२३४३। ओ२३४५ई। डा(३)॥ ७* ॥ [२] ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य
तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

विशोविशोवोअतिथिमिति तृचात्मके प्रथमे सूक्ते।

प्रथमा।

२१ ३ ३ १ २ २ १ २ ३ २
विशोविशोवो अतिथिंवाजयन्तःपुरुप्रियम्।
३ २ २ २ ३ १ २ ३ २ ३ १ २ १ २
अग्निंवोदुर्यंवचःस्तुषेशूषस्यमन्मभिः॥ १ †॥

हे ऋत्विजो यजमानाश्च "वः" यूयं "वाजयन्तः" अन्नमिच्छन्तः "विशः विशः" सर्वस्याः प्रजायाः "अतिथिं" पूज्यं "पुरुप्रियं" बहु-प्रियम् "अग्निं" स्तुत्या परिचरेति शेषः। अहञ्च "वः" युष्मदर्थं "दुर्यं" गृह-हितम् अग्निं "वचः" अनु "स्तुषे" स्तौमि "शूषस्य" बलस्य लाभार्थकैः साधनैः "मन्मभिः" मननीयैः स्तोत्रैः॥ १॥

---

* ऊ० गा० ११प्र० १ख० ७गा०।

† छ० आ० १, २, ४, ७ (१भा० २४३ पृ०) = ऋ० वे० ६, ४, ११, १।

अथ द्वितीया।

१र २र ३ १ २ ३ २र ३ १ २
यञ्जनासोहविष्मन्तोमित्रन्नसर्पिरासुतिम्।
१ २ २ ३ १ १
प्रशं्ससन्तिप्रशस्तिभिः॥ २ * ॥

"यम्" अग्निं "जनासः" जनाः यजमानाः "हविष्मन्तः" सन्तः "मित्रं न" मित्रमिव सखायमिव वा "सर्पिरासुतिं" सर्पिरासूयते हूयते यस्मिन् तादृशं "प्रशंसन्ति" स्तुवन्ति "प्रशस्तिभिः" ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ ३ २ ३ १ २ १
पन्यांं्सञ्जातवेदसंयोदेवतात्युद्यता।
३ १र १र ३ १
हव्यान्यैरयद्दिवि॥ ३ † ॥ १२

"पन्यांसम्" अतिशयेन स्तोतारं साधुतममिति यजमानं स्तुवन्तं "जातवेदसं" जातधनं स्तुमइति वाक्य-शेषः। "यः" अग्निः "देवतातिः" यज्ञे "उद्यता" उद्यतानि "हव्यानि" हवींषि "दिवि" "ऐरयत्" प्रेरयति दिवि देवेभ्यः॥ ३ ॥ १२

---

* ऋ० वे० ६, ४, २१, २।

† ऋ० वे० ६, ४, २१, ३।

३ १ २ ४ २ ५
॥ श्यावाश्वम् ॥ विश्नो३१। वा ३ यिशे। वोश्व।
२ ४ ५ १ २ १
ता३यिथिम्। एहिया। वा। जयन्तःपुरु। प्रिया२
१र २र २ ४ ५
म्। एहिया२। अग्निंवोदुरो३याउम्। वा२३४चाः।
२र १र २ १र २ ४ २
ऽहा२यि। एहिया२। स्तुषेशूषास्या३मा३। न्मा३४
५
५भोई्हायि(१) ॥ ८ * ॥ [१]

२ र र २
॥ आन्धीगवम् ॥ विशोविशोवो१अतायिथायिम्।
१र २ १ १ २ १ १र १ २
वाजय। तःपूरुरु। ऊम्मा२१ऽ२। प्रियमग्निंवोदुर्य्यं
१ १ १ १ १ १ १ २ २ १ २
वषा२३४५ः। स्तुषा३उवा। शू२षा। स्या२३मा। न्म
१ ४ ५ १ र र २
भायिः। औ२३होवा ॥(१) स्तुषेशूषस्यमा२न्माभायिः।
१ र र २ १ र १ १
यज्ञना। सोहा२३वा। ऊम्मा२१ऽ२। अग्नोमित्रन्न
२ १ र १ ३ १ १ १ १ १ १ २ २ २
सर्पि रात्तमा२३४५यिम्। प्राप्रा३उवा। सा२न्तायि।
२ १ ४ ५ २
प्रार३श्रा। क्षिभायिः। औ२३होवा ॥(२) प्रप्रव्सन्ति

* ऊ० गा०,११प० १ख० ८गा०।

प्रशा१स्तायिभायिः। पन्या२ऽसम्। जाता२३वा। ऊ म्मा२१६२। दसंयोदेवताल्युह्नार२३४५। हाव्या३उवा। ना२भायि। रा२३यात्। दिवा। औ३होवा। हो ५ई। डा(३) ॥ ८* ॥ [२]

॥ यज्ञायज्ञीयम् ॥ विश्वो५पुवि। श्रो३वो३भ्रतायि थायिम्। वाजयन्ताः। पू३रुप्रो३याम्। अग्ना२यिं वः। दुरी२३याम्। ऊम्मायि। वा३चाः। स्तुषेशूष स्तमा२म्मभाउ ॥(१) स्तुषायि। शूषस्तमम्मभिर्ग्मनाना सो। चा३वायिग्ना३न्ताः। मित्रा२न्न। सर्प्या२३यि रा। ऊम्मायि। च३तायिम्। प्राशं२सन्तिप्रशा२स्ति भाउ ॥(२) प्राशा। सन्तिप्रशस्तिभःपन्या२ऽसञ्जा। ता

---

* ऋ० अ० ११०म० १व० ६ऋा०।

१ २ २.१ र १ र २ १
इवायिदा३साम्। योदे २व। ताता२३ज। ऊम्मायि।
२ २ १ र र ३१
या३ता। ह्राव्यान्यैरवा२हिवाउ(३) ॥ १० * ॥ [३]

५ ३१ ४र ५
॥ गौरीवितम् ॥ विश्वः। विश्वो३। वोअतिथायिम्।
१र १ र२ ४
वाजयन्तःपुरुप्रिया२३म्। आग्निंवोदू३१२३। रियाप्र
१र र१ ४ ५ ४ ५
पूवचाः। स्तुषेशूपा३१२३। स्यमोवा। न्मा५भोई्वा
यि(१) ॥ २ † ॥ [४] १२

अथ द्वितीय-खण्डे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १ ३ २
समिद्धमग्निꣳसमिधागिरागृणे
१ २ ३ २ ३ १ २ ३ २ ३ १
शुचिम्पावकम्पुरोअध्वरेध्रुवम्।
२ ३ १ २ ३ १ २ ३ १
विप्रꣳहोतारम्पुरुवारमद्रुहं
३ २ ३ १ २ ३ १ २
कविꣳसुम्नैरीमहेजातवेदसम् ॥ १ ‡ ॥

* ऊ० आ० ११प्र० १ख० १०गा०।

† ऊ० आ० १८प्र० १ख० १गा०।

‡ ऋ० वे० ४, ५, ११, २।

"समिद्ध" सम्यग्दीप्तम् "अग्निं" "समिधा" समिन्धन-हेतु-भूततया "गिरा" स्तुत्या "गृणे" अहं स्तौमि [यद्वा, 'समिधा' समिद्भिर्दीपकैः 'समिद्धं' सम्यक् दीप्तम्]। अपिच "शुचिं" स्वयं शुद्धं "पावकं" सर्वेषां शोधकं "ध्रुवं" निश्चलं तमग्निम "अध्वरे" यज्ञे "पुरः" करोमीति शेषः। तथा "विप्रं" मेधाविनं "होतारं" देवानामाह्वातारं "पुरुवारं" बहुभिर्वरणीयम्* "अद्रुहम्" अद्रोग्धारं सर्वेषा मनुकूलं "कविं" क्रान्त-दर्शनं "जातवेदसं" जातानां वेदितारमग्निं "द्युम्नैः" सुखकरैः स्तोत्रैः "ईमहे" सम्भजामहे [यद्वा, द्वितीयार्थे तृतीया (२, १, ८५)। सुम्नानि धनानि, ईमहे याचामहइति ॥ १ ॥

अथ द्वितीया।

२ ३ १ २   ३ १ २ ३ १ २
त्वान्दूतमग्ने अमृतंयुगेयुगे

३ १ २   ३ १र   २र
हव्यवाहन्दधिरेपायुमीड्यम्।

३ १ २ ३ १ २   ३ १ २   ३ २
देवासश्चमर्त्तासश्चजागृविंविभुं

३ २ ३ १ २ ३ १ २
विश्पतिन्नमसानिषेदिरे ॥ २ † ॥

---

* 'पुरुवारं—पुरुवाखं, बहुभिर्वाञ्छेयुं भ्रम,—इति वि०।

† ऋ० वे० ८, ५, १८, ३।

हे "अग्ने!" "त्वां" "देवासः" देवाश्च "मर्त्यासः" मनुष्याश्च "दूतं" "दधिरे" विदधिरे कृतवन्तः। कीदृशं त्वाम्? "अमृतम्" अमरणम्, "युगे युगे" काले काले तद्यागानुष्ठान-समये "हव्यवाहं" हविषां हव्यानां वोढारं "पायुं" पालयितारम्* "ईड्यं" स्तुत्यम्। अपिच ते उभयविधाः "जागृविं" जागरण-शीलं† "विभुं" व्याप्तं विश्पतिं विशां प्रजानां पालयितारम् अग्निं "नमसा" हविर्लक्षणेनान्नेन नमस्कारेण वा "नि षेदिरे" उपसेदिरे॥ २॥

अथ तृतीया।

३ १ २ ३ २ ३ २ १ ३ २
विभूषन्नग्न उभयाꣳ अनुव्रता

३ २ ३ २ ३ १ २ ३ १ २
दूतो देवानाꣳ रजसी समीयसे।

१ २ ३ १ २ ३ २ ३ १र
यत्ते धीतिꣳ सुमतिमावृणीमहे

२र ३ १ २ ३ १ २
अधस्मा नस्त्रिवरूथः शिवो भव॥ ३‡॥ १३

* पायुं—पानीयं सोमम्—इति वि०।

† 'जागृविम्—सम्यक् दयास्थित्यैव यो जागर्त्ति स जागृविः तम् जागृविम्—इति वि०।

‡ ऋ० वे० ४, ५, १२, ४।

हे "अग्ने!" उभयान् "उभयविधान् देवान् मनुष्यांश्च*" "विभूषयन्" अलङ्कुर्वन् त्वम् "अनुव्रता" व्रतान्यनु† "व्रतेषु" कर्मसु यागेषु "देवानां" "दूतः" सन् "रजसी" द्यावा-पृथिव्यौ "समीयसे" सञ्चरसि देवानां नेतुं द्युलोकं गच्छसि हवींषि भजामहे। "अध" अतः कारणात् "त्रिवरूथः" त्रिस्था-नस्त्वं‡ "नः" अस्माकं "शिवः" सुखकरः "भव" "स्म" [—इति पदपूरणम्]॥ ३॥ १३

॥ यज्ञायज्ञीयम्॥ समा५यिद्धम्। आ३ग्ना३यि९ समिधा। गायिरागृणेप्रुचिम्पावकम्पुरो३आ। ध्वा३रा यिध्रु३वाम्। विप्रा२९होतारम्पुरुवारमद्रु। हुङ्का२३ वोम्। ऊम्मायि। हु३म्माई:। आयिमद्देजातवा२यि दसा३उ॥(१) सान्त्वाम्। दूतमग्ने अमृतम्पुगेयुगेहव्यवा वन्दाधिरेपा। यू३मायिडा३याम्। देवा२मश्रमर्त्तास अजागृ। विंवा२३यिभूम्। ऊम्मायि। वा३यिश्रपा।

---

* 'उभयान्—ऋत्विजो मनुष्यांश्च'—इति वि०।

† 'अनुव्रताः—शरणं प्रपन्नाः'—इति वि०।

‡ 'त्रिवरूथः—त्रिस्थानम् गार्हपत्यादि अथवा भूलोकादि'—इति वि०।

तायिन्नमसानिषा२यिदिराउ ॥(२) रायिवायि। भूषन्न
ग्नाउभया७अनुव्रतादूतोदेवाना७रजसी। सा३ मीया ३
सायि। यत्ते२धीति७सुमतिमावृणीम। च्छ्रा२३धा।
ऊम्मायि। स्मा२ना:। त्रायिवरूथःशिवो२भवाउ। वा
३४५(इ) ॥ ११* ॥ [१]

॥ कावम् ॥ समोवा। त्वमग्नि७समिधा। गिरा
गार्णा२यि। शुचिम्पावकम्पुरोश्रा। ध्वरेध्रूवा२म्।
विप्र७होतारम्पुरुवा। रमद्र हा२३म्। कावी३७छ्म्ना
यि:। ईमहायिजा२३। तावा३यिदा५सा६५६म् ॥(१)
तुवोवा। दूतमग्नेअमृताम्। युगेयूगा२यि। हव्यवा
हन्दधिरेपा। युमीडाया२म्। देवासश्चमर्त्तासा:। च
जागृवा२३यिम्। वायिभू३वायिश्पा। तिन्नमासा२३।

* ऊ० गा० ११०प्र० १ख० ११सा०।

१ २ ४ २ १
नायिषा३यिदा५यिरा६५६यि ॥(२) विभोवा। घसग्नउ

२ १ १२ २ २ २ २ २ २
भयाꣳ। अनुव्राता२। दूतोदेवानाꣳरजसी। समी

१ १ २ २ २ २ १
यासा२यि। यत्तेधीतिꣳसुमतिमा। वृणीमाहा२३यि।

१ २ ४ ५ १ २ ४
आधाꣳस्माना:। त्रिवरूथा२३:। शायिवो३भा५वा ६ ५

६(३) ॥ १२* ॥ [२] १३

अथ तृतीय-सूक्ते—प्रथमा।

१ २ ३ २ ३ २ ३ १ २ ३ १ ३
उपत्वाजामयोगिरोदेदिशतीर्हविष्कृतः।

३ १२ १२
वायोरनीके अस्थिरन् ॥ १ † ॥

हे अग्ने ! "हविष्कृतः" यजमानार्थं "गिरः" स्तुतयः "जामयः" स्वसारइव "देदिशतीः" तव गुणान् दिशन्त्यः "त्वा" त्वाम् "उप अस्थिरन्" उपतिष्ठन्ते "वायोरनीके" समीपे त्वां समिधत्यः अस्थिरंश्च ॥ १ ॥

---

* ऊ० गां० ११प्र० १ख० १२सा०।

† ऋ० वा० १, १, २, ३ (१भा० ११३ पृ०) — ऋ० वे० ६, ७, ११, २।

अथ द्वितीया।

१ २ ३ १२ २२ ३ २ ३ १२ २२
यस्य त्रिधात्ववृतम्बर्हिस्तस्थावसन्दिनम् ।
१ २ ३ १ २ ३ १
आपश्चिन्निदधापदम् * ॥ २ ॥

"यस्य" अग्नेः "त्रिधातु"† त्रिपर्व "अवृतम्" अनावृतं च "असन्दिनम्" अबद्धञ्च स्तरण-काले बर्हिरबद्धं भवति "बर्हिः" "तस्थौ" आसदनार्थं तिष्ठतीत्यर्थः ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ १२ २२ ३ १ २
पदन्देवस्यमीढुषोनाधृष्टाभिरूतिभिः ।
३ १२ ३२ ३ २
भद्रासूर्यइवोपदृक् ॥ ३ ‡ ॥ १४

"मीढुषः" कामानां सेक्तुः "देवस्य" द्योतमानस्याग्नेः पदं स्थानं "धृष्टभिः ग्रतुभिः अबाधिताभिः "ऊतिभिः रक्षाभिः भजनीयं भजतीत्यर्थः। तथैवास्य "उप दृक्" उपदृष्टिरपि "सूर्य्य इव" यथा सूर्यः तद्वत् "भद्रा" मनुष्यैर्भजनीया भवति ॥ ३ ॥ १४

---

* ऋ० वे० ६, ७, ११, ४।

† 'त्रिधातु—स्वर्ण-रजत-ताम्रैः त्रिभि र्धातुभि. यथा वा त्रिधातु इति पदपूरणः' —इति वि०।

‡ ऋ० वे० ६, ७, ११, ५।

॥ वारवन्तीयोत्तरम् ॥ उपत्वाजा । औहोहायि ।
मायोगा२३४यिराः । देदायिशा२३४हा । तीर्हविष्का
३४ । औहोवा । इहा२३४ हायि । उऋवा२३४र्त्ताः ।
वायोर । नायिकेअस्था३४ । औहोवा । इहा२३४हा
यि । औहो३१२३४रान् । एहियाऽ६हा ॥(१) यस्यत्रिधा
औहोहायि । तूआवा२३४र्त्ताम् । बर्हायिस्ता२३४हा
यि । स्थावसन्दा३४ । औहोवा । इहा२३४हायि । उ
ऊवा२३४नाम् । आपश्चित् । नायिदधापा३४ । औ
होवा । इहा२३४हायि । औहो३१२३४दाम् । एहिया
६हा ॥(२) पदन्देवाऔहोहायि । स्थामायिदू२३४हा ।
अनाधा२३४हा । छाभिद्रुता३४औहोवा । इहा२३४हा
हायि । उऋवा२३४भोः । भद्राद्द । व्यादृत्रोपा३४औ

होवा । इहा२३४हाथि । औहो१२३४इक् । एहिया

इहा । हो५इ । डा(३) ॥ १२ * ॥ [१] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य पञ्चदशस्याध्यायस्य

चतुर्थः खण्डः* ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १५ ॥

॥ इति सप्तमस्य द्वितीयोऽर्द्ध प्रपाठकः‡ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे

उत्तराग्रन्थे पञ्चदशोऽध्यायः ॥ १५ ॥

---

* ऊ० गा० ११प्र० १अ० ११खा० ।

† 'समाप्ताश्चाग्निष्टुतः पिहतो मध्ये * * * ।'—इति वि० ।

‡ 'सप्तमस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १६ ॥

## ॥ अथ षोड़शोऽध्याय आरभ्यते* ॥

तत्र,

प्रथमे खण्डे—

अभित्वापूर्वपीतय इति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
अभित्वापूर्वपीतय इन्द्रस्तोमेभिरायवः।
२ १ २ २ ३ १ २ ३ १ २ ३ २
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्तपूर्व्यम् ॥ १† ॥

हे "इन्द्र!" "आयवः" मनुष्याः स्तोतारः "स्तोमेभिः" स्तोत्रैः "त्वा" त्वाम् अभिष्टुवन्ति। किमर्थम्? "पूर्वपीतये" सर्वेभ्यो देवेभ्यः पूर्वं प्रथमतएव सोमस्य पीतये पानाय [सवन-मुखे हि चमसगणेष्विव सदस्येव सोमो हूयते] तथा "समीचीनासः" सम्मताः "ऋभवः" [प्रथम-वाचकेन शब्देन

* 'इदानीं सर्वस्यारम्भ, पुनश्चातुर्मास्यानि'—इति वि०।
† छ० आ० ३, २, १, ४ (१भा० ५२९ प०) = ऋ० वे० ५, ७, २३, १।

त्रयोऽप्युपलक्ष्यन्ते ] ऋभुर्विभ्वावाज इत्येते "समस्वरन्" त्वामेव सम्यगस्तुवन् [ स्तृ शब्दोपतापयोः(भ्वा०प०)] "रुद्राः" रुद्रपुत्रा मरुतश्च "पूर्व्यम्" पुरातनं वृत्र त्वामेव "गृणन्त" अभ्यस्तुवन् वृत्र-बध-समये 'प्रहर भगवो जहि वीरं जयस्व'—इत्येवं रूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥ १ ॥

अथ द्वितीया।

२ १र २र ३ १ ३ १ ३ १ १ ३ २ ३ १ २
अस्येदिन्द्रोवावृधेवृष्ण्यꣳशवोमदेसुतस्यविष्णवि।
२ १र १र ३ १ १ ३ १र २र ३ १ २
अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्वथा ॥ २*॥ १

"अस्येत्" अस्यैव † यजमानस्य "वृष्ण्यं" वृषत्वं वीर्यं "शवः" बलं च "इन्द्रः" "वावृधे" वर्द्धयति "सुतस्य" अभिषुतस्य सोमस्य पानेन "विष्णवि" कृत्स्न-देहस्य व्यापके "मदे" हर्षे सति तस्यैव यजमानस्य बलं वर्द्धयतीत्यर्थः। "अद्य" अस्मिन् काले "अस्य" इन्द्रस्य "तम्" उक्तगुणं "महिमानं" महत्वम् "आयवः" मनुष्याः ‡ "अनु ष्टुवन्ति" तस्यानुपूर्व्येण स्तुवन्ति, "पूर्वथा" [पूर्वशब्दादिवार्थे "प्रत्न"पूर्व (४, ३, १११) इत्यादिना था-प्रत्ययः] यथा पूर्वस्मिन् काले अस्तुवन् एव मिदानीमपि तेनैव क्रमेणैव स्तुवन्तीत्यर्थः ॥ १ ॥ १

* ऋ० वे० ५, ७, १९, १।

† 'इत्—इति पदपूरणः'—इति वि०।

‡ 'आयवः—ऋत्विग्यजमानौ'—इति वि०।

४ ३ ४र र १ ४र ५ र
॥ वषट्कारणिधनम् ॥ अभित्वापूर्वपीतये । अभि
१ ४र ५ ४र ५ १ र र १ ० १
त्वा३पूर्वपीतयायि । इन्द्रस्तोमेभी३रायवा२ः । भिरा
२ १र ऽ २ र र र १
या१वा२३ः । ओमो३वा । समीचीनासऋभवःसा३मा
० १ २ १र ऽ २ र
स्वरा२न् । समास्वा१रा२३न् । ओमो३वा । रुद्रागृ
१ ० १ २ २
णन्ता३पूर्वियार२म् । तपूर्वा१या२३म् । ओ२ । वा२३
५र र ३ ३र ४ ३ ४र ५ र २ ४
४औ३होवा ॥(१) रुद्रागृणन्तपूर्वियम् । रुद्रागा३णंतप्
५ २ र १ ० १ २
र्वियाम् । रुद्रागृणन्ता३पूर्विया२म् । तपूर्वा१या२३म् ।
१र ऽ २ र र र र १ ०
ओमो३वा । अस्येदिन्द्रोवावृधेवृष्णी३या२ञ्ज्ञवा२ः ।
१ १ १र ऽ २ र १
ष्णियाञ्ज्ञा१वा२३ः । ओमो३वा । मदेसुतस्या३वा
० १ २ १र
यिष्णवा२यि । स्यवायिष्णा१वा२३यि । ओम् । ओ
२ ५र र ३ ४र २ ४ ३ ५ ५
२ । वा२३४ । औ३होवा ॥(२) मदेसुतस्यविष्णवि । म
र २ ४ ५ ४ ५ २र १ ०
दे२३तस्यविष्णवायि । मदेसुतस्या३वायिष्णवा२यि ।
१ २ १र ऽ २ र
स्यवायिष्णा१वा२३यि । ओमो३वा । अयातमस्यमचि

मानाश्मायवा२:। नमायाश्वा२३:। ओमो३वा। अ
नुष्टुवन्तो३पूर्वथा२। तिपूर्वा१था२३। योम्। ओ२।
था२३४ओ३होवा। ऊ२३४पा(३) ॥ १६* ॥ [१]

॥ कण्वरथन्तरम् ॥ आभित्वापूर्व्यपीतयायि। इन्द्र
स्तोमायि। भी३रायाश्वा:। समीचीनासऋभव:सम
स्वरा२३४नैही। रुद्रागा२३४र्णा। तपू३ आउवा२३।
ए३। विंयमा ॥(१) रुद्रागृणतपूर्वियाम्। आ३स्येदा
३यिन्द्रा:। वावृधेवृष्णियश्वा२३४ऐही। मदे३षु२३४
ता। स्यवा३१उवा२३। ए३। ष्णविया ॥(२) माद्रेषु
तस्यविष्णवायि। आ३याता३मा। स्यमहिमानमायवा
२३४ऐही। अनुष्टू२३४वा। तिपू३आउवा२३। ए३र्वथ
था(३) ॥ १६ † ॥ [२] १

---

* ऊ० गा० ११प्र० १ष० १६षा०। † ऊ० गा० २२प्र० १ष० १६षा०।

प्र वामर्चन्त्युक्थिन इति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २

प्रवामर्चन्त्युक्थिनोनीथाविदोजरितारः ।

१ २ ३ २ ३ १ २

इन्द्राग्नीइषआवृणे ॥ १ * ॥

हे "इन्द्राग्नी !" "उक्थिनः" [उक्थं शस्त्रं तद्वन्तः] शस्त्रिणः होत्रादयः "वां" युवां प्रार्चन्ति—इह कर्मणि स्तुतिरूपाभि र्वाग्भिः पूजयन्ति । तथा "नीथाविदः" स्तोत्राभिज्ञाः साम,गान-कुशला "जरितारः" स्तोतारः उद्गात्रादयः अभिलषित-फला-वाप्तये युवामर्चन्ति । अहमपि "इषः" अन्नस्य लाभार्थम् "इन्द्राग्नी" युवाम् "आ वृणे" सर्वतः सम्भजे पूजयामीत्यर्थः ॥१॥

अथ द्वितीया ।

१ २ ३ १र २र ३ १ २

इन्द्राग्नीनवतिम्पुरोदासपत्नीरधूनुतम् ।

३ १र २र ३ १ २

साकमेकेनकर्म्मणा ॥ २ † ॥

हे "इन्द्राग्नी !" "दासपत्नीः" दासयन्ति उपक्षयन्तीति दासाः उपक्षयितारः असुराः, ते पतयः पालकाः यासां ता दासपत्नीः "नवतिं" नवति-सङ्ख्याकाः "पुरः" एवंविधाः शत्रु-

---

* अत्रैव पुनः ८, २, १७, १ = ऋ०वे० ३, १, १२ १

† अत्रैव पुनः ८, २, १७, २ = ऋ० वे० ३, १, १२, २।

पुरोः "एकेन कर्मणा" एकेनैवोद्योगेन युवां "साकं" सह युगपत् "अधूनुतम्" अकम्पयतं, ताविन्द्राग्नी आह्वयामीति शेषः ॥१॥

अथ तृतीया।

१ २ ३ १ १ २ ३ २उ ३ १ २ ३ १ १
इन्द्राग्नी अपसस्पर्युपप्रयन्तिधीतयः।
३ १ १ ३ २ १ २
ऋतस्यपथ्या३अनु ॥ ३ * ॥

हे "इन्द्राग्नी !" "धीतयः" सोमस्य धातारः पातारो होत्रादयः "ऋतस्य" कर्म-फलस्य "पथ्याः" पथः मार्गान् "अनु" लक्षीकृत्य "अपसः" अस्माभिः क्रियमाणस्य परितः सर्वतः समीपे "पर्युप" "प्र यन्ति" प्रकर्षेण वर्त्तन्ते अतः सोमपानार्थं युवामागच्छतमिति भावः [यद्वा,'धीतयः' 'ऋतस्य' यज्ञस्य 'पथः' मार्गान् 'अनु' लक्षीकृत्य 'अपसः' कर्मणः 'परि' परितः 'उप प्र यन्ति' प्रवर्त्तन्ते, अतः स्तोतव्यतया युवामागच्छतामिति ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्राग्नीतविषाणिवाꣳसधस्थानिप्रयाꣳसिच।
२ ३ ३ १ १ ३ २
युवोरप्तुर्यꣳहितम् ॥ ४ † ॥ २

* ऋग्वेदे पुनः ८, २, १४, २ = ऋ० वे० ३, १, १२, २।
† ऋग्वेदे पुनः ८, २, १४, ३ = ऋ० वे० ३, १, १२, ४।

हे इन्द्राग्नी! "वां" युवयोः "तविषाणि" बलानि "प्रयांसि अन्नानि*" "च" "सधस्थानि" सहस्थितानि परस्परमवियुज्य वर्त्तन्ते। तथा "असूर्य" वृष्टिधारायाः प्रेरकं त्वं "युवोः" युवयोरेव "हितं" निहितं वर्त्तन्ते तस्मात् सोमपान प्रभृतिषु सर्व-कर्मसु इन्द्राग्न्योः सहैव वर्त्तनमिति भावः [सधस्थानि—ष्ठा गति-निवृत्तौ च (भ्वा० प०) "आतोऽनुपसर्गे कः (३,२,३)" "सधमादस्थयोश्छन्दसि (६,३,८६)—इति सहस्य सधादेशः ॥ ४ ॥ २

अथ शग्ध्यूष्विति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

३ २ १ २ ३ १ २ १ २ ३ १ २
शग्ध्यू३षुशचीपतइन्द्रविश्वाभिरूतिभिः।
२ १ ३र २र ३ १ २ ३ २ ३ १ २ ३ १ २
भगन्नहित्वायशसंवसुविदमनुशूरचरामसि ॥१†॥

हे "शचीपते!" "इन्द्र!" "शग्धि" "विश्वाभिः" सर्वाभिः "ऊतिभिः" मरुद्भिः सह। हे "शूर हे वीर! "भगं न" भाग्यमिव "यशसं" यशस्विनं "वसुविदं" धनस्य लम्भकं "त्वा" त्वाम् "अनु चरामसि" अनुचरामः परिचरामइत्यर्थः ॥ १ ॥

---

* 'प्रयांसि—प्रकर्षेण यातव्यान्यध्वराणि यज्ञगृहाणि'—इति वि०।

† छ० आ० ३,३,१,(१भा० ५२१ पृ०) = ऋ० वे० ६,५,१५-५।

अथ द्वितीया।

३ १र २र ३ १र २र३ १ २ ३ १ २
पौरोअश्वस्यपुरुकृद्गवामस्युत्सोदेवहिरण्ययः।

२ ३ १र २र ३ १ २ ३ २उ ३ २ ३ १र २र
नकिर्हिदानम्परिमर्द्धिषत्त्वेयद्यद्यामितदाभर॥ २ *॥३

हे इन्द्र। त्वम् "अश्वस्य" "पौरः" पूरयिता† "असि" भवसि। तथा गवां "पुरुकृत्" बहुकर्तासि। हे "देव" "हिरण्ययः" हिरण्मय-शरीरस्त्वम् "उत्सः" उत्स-सदृशोऽसि। हे इन्द्र "त्वे" त्वयि वर्त्तमाने "दानम्" अस्मद्विषये देयं धनं वा "न किर् हि परि मर्द्धिषत्" न कश्चित् हिनस्ति। अतो "यद्य द्यामि" तत्तदाभर मह्यम्॥ २॥ ३

१ र र र १
॥हारायणम्॥ प्रग्ध्यूपौहो२इशचीपतायि। आ

र र १ १ १र
यिन्द्रविश्वाभिरूतिभिः। भगान्नाइही। त्वयिशसाम्।

२ १ १ १ र २
वह्ना३हायि। वायिदा२म्। अनुश्रूरचरोवा३ओ२३४

४ ४ ५ १ र र र १
वा। मा५सोइहायि॥(१) अनुश्रूरौहो२यिचरामसा

र ५ र १ १ १
यि। आनुशूरचरामसि। पौरोआ३श्वा। स्यपुरुकृत्।

---

* ऋ० वे० ६, ४, ३ १।

† 'पौरः—पुरो भवः वीरः'—इति वि०।

गवा३ऽहायि । आसा २यि । उत्सोदेवहिरोवा३ओ२३४वा । एया५योऽहायि ॥(२) उत्सोदेवोचो २यिहिरण्ययाः । ऊत्सोदेवहिरण्ययः । नकायिर्हा३यिदा । नम्परिमा । धिषा३हायि । तूवा २यि । यद्यामितदोवा३ओ२३४वा । भा५रोऽहायि(३) ॥ १८ * ॥ [१]

॥ अभीवर्त्तम् ॥ श्रग्ध ा३ऊ३षुश्रचोपतोवा । आयिन्द्रविश्वा । भिहूता१यिभा २यिः । भागन्नहा३१२२४यि । त्वायश्रसम् । वसूवा१यिदा २म् । अनूश्रू१रा२ । चरा३ । मा२३४५ । सा२३४५यि ॥(१) अनू३श्रू३रचरामसोवा । आनुशूर । चरामा१सा २यि । पौरोअश्वा३१२३४ । स्यपुरूकृत् । गवामा१सा २यि । उत्सोदा१यिवा२ । हिरा३ण्या२३४५ । या२३४५ः ॥(२) उत्सा३दे३

* ऊ० गा० १२प्र० १ख० १८गा० ।

४ ५ ४ ५ १ र २र १ २ १
वहिरण्ययोवा । ऊत्सोदेव । हिराण्या१या२ः । ना

२ २ ४ ५ २ १ २ १
किर्विदा३१२३४ । नम्परिम । धिषात्तू१वा२यि । यद्या

२ ३ २ १ ३ १ १ १ १
द्या१मा२यि । तदा३ । भा२३४५ । रा२३४५(३) ॥६*॥[२]

२ र २ ३ ४ १
॥ मानवम् ॥ श्रग्ध्यूषू । शचीपा२३४तायि । श

३ ५ १ २ र २ २
चायिपा२३४तायि । श्रायिन्द्रविश्वा । भिरूता१यिभा२

१ २ १ ७ २ १ ३
यिः । भगम् । नहि । त्वायशमा३म् । वसू२वा२३४

५ १ र र १ १ ३ ५र र ३
यिदाम् । अनुशूरा२३ । चा२रा२३४औहोवा । मा२३

५ २ र ३ ५ २ ३
४सो ॥(१) अनुशूरा । चरामा२३४सायि । चरामा२ ३ ४

५ १ २र १ २ र २
सायि । श्रानुशूर । चरामा१सा२यि । पौ । रः । अश्व ।

१ ७ १ १ ३ ५ १ २र र १
स्यापुरूकृ४त् । गवा२मा२३४सायि । उत्सोदेवा २ ३ ।

१ ३ ५र र ३ ५ २ र र
चा२यिरा२३४औहोवा । ण्या२३४याः ॥(२) उत्सोदेवा ।

३ ५ २ ३ ५ १ र २र १
हिरण्या२३४याः । हिराण्या२३४याः । उत्सोदेवहिरा

---

* ऊ० गा० ११प्र० २श्व० ६सा० ।

२ १ २ र १ ० २ १
एयाश्या२ः। नाकिः। हिटा। नापरिमा३। धिषा

३ ५ १ १ र १ १ ३ ५ र र
रत्तू२३४वायि। यद्यद्यामा२३यि। ता२टा२३४औहोवा।

३ ५
भा२३४रा(३) ॥ ११ * ॥ [३] ३

अथ त्वंह्येहिचेरवइति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

२३ ३ १ १ १ २ ३ ३ १ २
त्वꣳह्येहिचेरवेविदाभगंवसुत्तये।

१ २ ३ १ २ ३ १ ३ १ २
उद्वावृषस्वमघवन्गविष्टयउदिन्द्राश्वमिष्टये ॥ १ † ॥

हे "इन्द्र!" "त्वं हि" त्वं खलु सामर्थ्याद्दातेति गम्यते। अतः "एहि" आगच्छ। आगत्य च अस्मभ्यं "भगं" भजनीयं धनं "विदाः" लभस्व दत्स्व। किमर्थम्? "वसुत्तये" अस्माकं वसु-दानाय। हे "मघवन्" धनवन्! "गविष्टये" गा इच्छते मह्यं "उद्वावृषस्व" उत्सिञ्च गाइति शेषः। तथा हे इन्द्र! "अश्वमिष्टये" अश्वेषणवते मह्यम् अश्वान् उद्वावृषस्व उत्सिञ्चस्व देहि ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० ११गा०।

† छ० आ० ३, १, ५, ८ (१भा०४९७४०) = ऋ० वे० ६. ४, ३९, १।

अथ द्वितीया ।

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
त्वम्पुरूसहस्राणिशतानिचयूथादानायमꣳहसे ।
१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
आपुरन्दरञ्चकृमविप्रवचसइन्द्रङ्गायन्तोवसे ॥ २ * ॥४

हे इन्द्र ! त्वं "पुरू" पुरूणि बहूनि "सहस्राणि शतानि च" "यूथा" गवादि-यूथानि "दानाय" यजमाना-विषयाय "मंहसे" अनुमन्यसे [यद्वा, दानाय दात्रे यजमानाय मंहसे प्रयच्छसि । मंहति दानकर्मा ( निघ० ३, २०, १० )] अथ परोक्षेण ब्रवीति—"पुरन्दरं" शत्रु-पुराणां दारयितारम् "इन्द्रम्" "अवसे" रक्षणाय तर्पणाय वा "गायन्तः" स्तुवन्तः विप्रवचसः" विविध-प्रकृष्ट-वचना वयम् "आ" आगन्तारम् अभिमुखं वा "चकृम" कुर्मः ॥ २ ॥ ४

५ ४ २ ४र ५र २
॥ कौल्मलबर्हिषम् ॥ तुवा३ꣳहो३इहिचेरवायि । वि
१र १ २ र १ २ र
दाभगवर्हु२त्ताया२३४यि । उहावृषस्वमघावान् । ऐ
१ १ र २ १ ५
होयि । गा२विष्टयायि । उदिन्द्राश्वमोवा३ओ२३४वा ।
५ ५ ४ २ ४ ५ १
हा५योईहायि ॥(१) उदा३यिन्द्रा३अश्वमिष्टयायि । उदि
र १ २ र १ २ र १
न्द्राश्वमा२यिष्टाया२३४यि । त्वम्पुरूसहस्राणी । ऐहो

* ऋ० वे० ६, ४, ३९, ३ ।

यि। श्रा२तानिचा। यूथादानायमोवा३ओ२३४वा।
हा५सो६हायि॥(२) यूथा३दा३नायम२हसायि। यूथा
दानायमा२हासा२३४यि। आपुरन्दरञ्चकृमा। ऐ
होयि। विप्रा२वचसाः। इन्द्रङ्गायन्तोवा३ओ२३४वा।
वा५सो६हायि(३)॥ १८ *॥ [१]

॥ काण्वबृहत्॥ औहोतुव२हिया ३ ए। हिचायिरा१
वा२३४यि। हाहोयि। वायिद्राभगंवसुत्तये। उद्वा
वा१र्षा२३४। हाहो। स्वामघवन्। गवायिष्टा१या२
३४यि। हाहोयि। उदायिन्द्रा१आ २ ३ ४। हाहो।
उदाआ१यिन्द्रा२३४। हाहो। श्वमा३यि। ष्टा२३४
यायि। उऴ्वा६हाउ। वा॥(१) औहोउदिन्द्रआ३ए।
श्वमायिष्टा१या२३४यि। हाहोयि। तूवम्पुरू। सहा

* ऊ० गा० ११प्र० १ख० १९गा०।

हा१णा२३४यि। हाहोयि। शतानाश्यिचा२३४। हा
होयि। यूथादा१ना२३४। हाहो। यमा३। हा२३
४मायि। उहुवा६हाउ। वा॥(२) औहोयूथादाना
३ए। यमा९हा१सा२३४यि। हाहोयि। आपुरन्दरम्।
चकमा१वा२३४। हाहोयि। प्रवाचा१सा२३४:। हा
होयि। इन्द्रागा१या२३४। हाहो। तोआ३। वा२
३५मायि। उहुवा६हाउ। वा(३)॥ १८*॥ [२] ४

अथ योविश्वेति प्रगाथात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा।

योविश्वादयतेवसुहोतामन्द्रोजनानाम्।
मधोर्नपात्राप्रथमान्यस्मैप्रस्तोमायन्त्वग्नये॥ १ †॥

---

* ऊ० गा० २२प्र० १अ० १८सा०।

† छ० आ० १, १. ४, १० (१भा०१६५पृ०) = ऋ० वे० ६, ७, १४, १।

"होता" देवानामाह्वाता "मन्द्रः" मोदनः "यः" अग्निः "विश्वा" सर्वाणि "वसु" वसूनि धनानि "जनानां" जनेभ्यः "दयते" प्रयच्छति ; तस्मात् "अग्नये" "मधोः" मदकरस्य सोमस्येव "प्रथमानि" मुख्यानि "पात्रा" पात्राणि "स्तोमाः" "प्र यन्तु" प्रगच्छन्तु ॥ १ ॥

अथ द्वितीया।

१ २ १ ३ २ ३क २र ३ १ २ १ २ ३ १ २
अश्वन्नगीर्भीरथ्यꣳसुदानवोमर्मृज्यन्तेदेवयवः।

३ १ ३ १र २र ३ २ ३ १ २ ३ १ २
उभेतोकेतनयेदस्मविश्पतेपर्षिराधोमघोनाम्॥ २* ॥५

हे "दस्म" दर्शनीय ! "विश्पते" विशां पते अग्ने ! यं त्वां "सुदानवः" शोभन-दानाः "देवयवः" देवानात्मन इच्छन्तो यजमानाः "रथ्यं" रथस्य बोढारम् "अश्वं न" अश्वमिव "गीर्भिः" स्तुतिभिः "मर्मृज्यन्ते" परिचरन्ति त्वमस्माकं यजमानानां "तोके" पुत्रे "तनये" पौत्रे "उभे" उभयस्मिन् "मघोनां" धनवतां "राधः" धनं "पर्षि" प्रयच्छ ॥ २ ॥ ५

१र २ २ २ २ २
॥ दर्घश्रवसम् ॥ योविश्वादयतेवस्वोहाओहा ३ ए।

१ १र २ ५ २ ५ २ २
होता २मन्द्रोजना २नाम्। ओ३हा। ओ३हा३ए३४।

१ २ ३ २ १ २ २ १ २ ५ २
मधो३४र्नपा। त्राप्रथ। मानायस्माथि। ओ ३ हा।

---

* ऋ० वे० ६, ७, १४, १।

ऽ २ २ ३ २ ३ २ २ १ ५ ४
ओ३हा३ए३४ । प्रस्तो३४माया३ । तुवो२३४वा । ग्ना
५ २ र र र र र २ १र
पूयो६हायि ॥(१) प्रस्तोमायत्वग्नयओहाओहा३ए । प्रस्तो
१ २र ऽ २ ऽ २ २ ३ २ ३
मा२यत्वग्नये । ओ३हा । ओ३हा३ए३४ । अग्ना३४न्न
२ १ २ १र २ ऽ २ ऽ
गायि । भायिरथि । यꣳ॒ह्नूदानवाः । ओ३हा । ओ३
२ २ ३ २ ३ २ २र १ ५ ४
हा३ए३४ । मम्हृ३४ज्यन्ता३यि । देवो२३४वा । या५
५ २ र र र र र २
वो६हायि ॥(२) मम्हृज्यन्तदेवयवओहाओहा३ए । मम्
१ र १ २ ऽ २ ऽ २ २ ३ २
ज्यन्ता२यिदेवयवः । ओ३हा । ओ३हा३ए३४ । उभा
३र २ १ २र १ २ ऽ २
३४यितोकायि । तानये । दस्माविश्पतायि । ओ३हा ।
ऽ २ २ ३ २ ३र २ १ ५ ४
ओ३हा३ए३४ । पर्षा३४यिराधा३ः । मो२३४ना । धो
५
पूनो६हायि(३) ॥ ५ * ॥ [१] ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० ११प्र० २ख० ५सा० ।

अथ द्वितीय-खण्डे—

इममग्नेवरुणेत्येकर्चं प्रथमं सूक्तम्,

सा ऋगेषा ।

३ १ १     ३ १ २ ३ १ २
इममग्नेवरुणश्रुधीहवमद्याचमृडय ।
१ २ ३ १र   २र
त्वामवस्युराचके ॥ १ * ॥ ६

हे "वरुण !" "मे" मदीयम् "इमं" "हवम्" आह्वानं "श्रुधि" शृणु [ श्रु श्रवणे ( भ्वा० प० ), लोटो हिः, "श्रु-शृ-णु-पॄ-कृ-वृभ्यश्छन्दसि ( ६, ४, १०२ )"—इति हेर्धिरादेशः, "बहुलं छन्दसि ( २, ४, ७३ )"—इति विकरणस्य लुक् "अन्येषामपि दृश्यते ( ६,३,१३६ वा० )"—इति संहितायां दीर्घः] । किञ्च "अद्य"† अस्मिन् दिने "मृडय" अस्मान् सुखय "अवस्युः" रक्षणेच्छुः [ अवस्-शब्दात् "सुप आत्मनः क्यच् ( ३, १, ८ ), "क्याच्छन्दसि ( ३, २, १७० )"—इति उ-प्रत्ययः ] एवं विधोऽहं त्वां वरुणम् "आ" आभिमुख्येन "चके" शब्दयामि [ कै, गै शब्दे ( भ्वा० प० ), अस्माल्लिटि "आदेच ( ६, १, ४५ )"—इत्यात्वं, द्विर्भाव-चर्त्वे, "आतोलोप इटि च (६,४,६४ )"—इत्याकार-लोपः, "तिङ्ङतिङः ( ८, १, २८ )"—इति निघातः ; स्तौमीत्यर्थः ॥ १ ॥ ६

* ऋ० वे० १, २, १९, ४ ।

† संहितायान्तु दीर्घश्रुतिः "निपातस्य च (६, ३, १३६)"—इति मते दीर्घः ।

"कयात्वन्नइत्येकर्च" द्वितीयं सूक्तम्,

सा ऋगेषा।

१ २ १ १ १ १ २ १ २
कयात्वन्नऊत्याभिप्रमन्दसेवृषन्।
१ २ १ २ ३ १ १ १
कयास्तोतृभ्यआभर॥ १ *॥ ७

हे "वृषन्" कामानां वर्षित इन्द्र! "कया" केन "ऊत्या" [अव रक्षणादिषु (भ्वा० प०), गत्यर्थः "ऊति-यूति (३,३,९७)"—इत्यादिना निपातितः]। केनाभिगमनेन "नः" अस्मान् "अभि" अभितः "प्र मन्दसे" प्रकर्षेण मादयसि अस्मदीयं यज्ञं प्रति सोमपानार्थमागमनेन वा त्वदीयस्तुति-श्रवणार्थमागमनेन वा कदा अस्मान् प्रमादयसीति। किञ्च "कया" केन "अभि" गमनेन "स्तोतृभ्यः" अस्मभ्यं धनम् "आ भर" बिभर्षि?—इतीन्द्रं स्तोता पृच्छति॥ १॥ ७

अथेन्द्रमिद्देवतातयइति प्रगाथरूपं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ १ २ ३ १ २ ३क २र ३ १
इन्द्रमिद्देवतातयइन्द्रम्प्रयत्यध्वरे।
१ २ ३ १ ३ १ २ ३ १ २ १ २ १ १ २
इन्द्रꣳसमीकेवनिनोहवामहइन्द्रन्धनस्यसातये॥ १ †॥

* ऋ० वे० ६, ६, २४, ४।
† ऐ० आ० २, २, १, ७ (२भा० ५१५ पृ०) = ऋ० वे० ५, ७, २४, ५।

"देवतातये" [ देवैः स्तोतृभिस्तायते विस्तार्य्यत इति ] देवतातिर्यज्ञस्तदर्थम् "इन्द्रम् इत्" देवेषु मध्ये इन्द्रमेव "हवामहे" आह्वयामहे। "अध्वरे" यज्ञे "प्रयति" प्रगच्छति उपक्रान्ते सति "इन्द्रं" हवामहे। तथा "समीके" सम्यग्जाते सम्पूर्णे च यागे "वनिनः" सम्भजमानाः वयम् "इन्द्रम्" इन्द्रमेवाह्वयामहे [ यद्वा, समीकमिति सङ्ग्राम-नाम ( निघ० २, १७, ११ ), समीके सङ्ग्रामे इन्द्रमाह्वयामहे ] "धनस्य" "सातये" लाभाय "इन्द्रम्" इन्द्रमेव आह्वयामहे। अतः शीघ्र मिन्द्र आगच्छत्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १र २र ३ २ ३ १ १ १ २
इन्द्रोमह्नारोदसीपप्रथच्छवइन्द्रःसूर्य्यमरोचयत्।
१ २ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
इन्द्रेहविश्वाभुवनानियेमिरइन्द्रेस्वानासइन्दवः ॥ २ * ॥ ८

अयम् "इन्द्रः" "शवः" शवसः आत्मीयस्य बलस्य "मह्ना" महिम्ना महत्त्वेन "रोदसी" द्यावापृथिव्यौ "पप्रथत्" अप्रथयत् विस्तारितवान्। तथा स्वर्भानुहतं "सूर्य्यम्" "इन्द्रः" "अरोचयत्" अदीपयत् तस्यासुरेण बधेन प्रकाशितवान्। अपिच "इन्द्रे ह" अस्मिन्नेवेन्द्रे "विश्वा" विश्वानि व्यापानि "भुव-

* ऋ० वे० ५, ७, १९, १।

नानि" भूतजातानि "येमिरे" उपरमन्ते इन्द्रेण नियम्यन्त इत्यर्थः। तथा "स्वानासः" स्वानाः अभिषूयमाणाः "इन्दवः" सोमाश्च अस्मिन्नेवेन्द्रे नियम्यन्ते परमात्मन्यन्तर्भवन्तीत्यर्थः॥२॥८

१ २ १ २र १

॥ यौक्तस्रुचम्॥ इन्द्रेमिद्देवता। तयायि। इन्द्र

२ १ २ १ र २र

प्रयतियध्वा २ ३ रायि। आयिन्द्रा२म्। समीकेवनि

र २ १र २ १ १ २ १

नोद्दवामा२३द्दायि। आयिन्द्रा२म्। धानस्यसो२३४

५ ३ ५ १ २ १ २ १

वा। ता२३४ये॥(१) इन्द्रधनस्यसा। तयायि। इन्द्र

२ १र २ १ १र र र २ १

धनस्यसाता२३यायि। आयिन्द्रो२। मह्नारोदसीपप्रथ

२ १ १ २ १ ५ २

स्त्वा२३वाः। आयिन्द्रा२ः। सूर्य्यमरो२३४वा। चा२३

५ १ २ १र २ १ र २ १र

४यात्॥(२) इन्द्रःसूर्य्यमरोचयात्। इन्द्रःसूर्य्यमरोचा२३

२ १ १ र र २ १र २

यात्। आयिन्द्रे२। इविश्वाभुवनानियेमा२३यिरायि।

१ १ र २ १ ५ ३ ५

आयिन्द्रे२। स्वानासओ२३४वा। दा२३४वा(३)॥१२*॥[१]

२ र र २ १ २

॥ नैपातिथम्॥ इन्द्रमिद्देवतातया३ए। आयिन्द्रम्प्रय।

* ऊ० गा० ११प्र० २ख० १२सा०।

तियाध्वरा३यि। हा। औहोर२३४हा। इन्द्रꣳसमीके
वनिनः। हवामहा२३यि। हा। औहो२३४हा।
इन्द्राꣳधाना३। हा। औहो२३४हा। स्या२सा२३४
औहोवा। ता२३४ये॥(१) इन्द्रन्धनस्यसातया३ए। आ
यिन्द्रन्धन। स्यसातया३यि। हा। औहो२३४हा।
इन्द्रोमह्नारोदसीप। प्रथाच्छवा२३ः। हा। औहोर२३
४हा। इन्द्राःसूर्य्या३म्। हा। औहोर२३४हा। आ
२रो२३४औहोवा। चा२३४यात्॥(२) इन्द्रःसूर्य्यमरोच
या३दे। आयिन्द्रःसूर्य्यम्। अरोचया३त्। हा। औ
होर२३४हा। इन्द्रेहविश्वाभुवना। नियायिमिरा२३यि।
हा। औहोर२३४हा। इन्द्रेस्वाना३। हा। औहोर२३
४हा। सा२आ२३४औहोवा। दा२३४वाः(३)॥५*॥[२]८

अथ विश्वकर्मन्नित्येकर्चं चतुर्थं सूक्तम्,

सा ऋगेषा।

१ २ ३ १ २ ३ २
विश्वकर्म्मन्हविषावावृधानः
३ १ २ ३ २ १२ १२
स्वयंयजस्वतन्वा ऽ २ ऽ ३ स्वाहिते।
१ २ ३ २ ३ २ ३ १ २
मुह्यन्त्वन्येअभितोजनास
३ १२ १२ ३ १ २ ३ १ २
इहास्माकम्मघवासूरिरस्तु ॥ १ * ॥ ९

हे "विश्वकर्मन्" विश्व-विषय-कर्मवन्! † एतन्नामक-परमेश्वर! "हविषा" हविर्भूतेन विश्वकर्मणा मया दत्तेन वा हविषा "वावृधानः" वर्द्धमानः ["विश्वकर्म्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार स आत्मानमप्यन्ततो जुहवाञ्चकार"—इत्यादि निरुक्तम् (दै० ४, २६) पूर्वमुदाहृतं "स्वयं" स्वयमेव "तन्वा" शरीरेण "स्वाहिते" अग्नौ दत्तो हविः "यजस्व" पूजय।] "अन्ये" मर्त्त्याः "जनासः" जनाः अयष्टारोऽस्मद्याग-विरोधिनो वा "मुह्यन्तु" मुग्धा भवन्तु, "अभितः" सर्वतः। अथ परोक्षकृतः—"इह" अस्मिन् यागे "अस्माकं" "मघवा" अस्मद्दत्तेन हविर्लक्षणेन धनेन धनवान्

---

* ऋ० वे० ८, ३, १६, ६ = य० वे० १७, २२।

† 'विश्वकर्मा सर्वस्य कर्त्ता'—इत्यादि निरु० दै० ४, १५।

सः "सूरिः" स्वर्गादि-फलस्य प्रेरकः "अस्तु" भवतु [ अत्र "विश्व-कर्मन् हविषा वर्द्धयमानः (दै॰४, २७)"—इत्यादि निरुक्तं द्रष्टव्यम्* ॥

तन्वांस्वाहिते"-"पृथिवीमुतद्याम्"—इति पाठौ ॥ १ ॥ ९

अयारुचेति तृचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३१र २र ३ २उ ३ १ २
अयारुचाहरिण्यापुनानोविश्वाद्वेषाᳬसि

३ १ २ ३ २ ३ २ ३ १ २
तरतिसयुग्वभिःसूरोनसयुग्वभिः ।

१ २ ३ १ २ ३ १ २ ३१र २
धारापृष्ठस्यरोचतेपुनानोअरुषोहरिः

२ ३ २ ३ १ २ ३१र २र ३ १ २ ३ १ २
विश्वायद्रूपापरियास्यृक्वभिःसप्तास्येभिर्ऋक्वभिः ॥१†॥

"पुनानः" पूयमानः सोमः "हरिण्या" हरित-वर्णया "अया" अनया "रुचा" रोचमानया धारया "विश्वा" सर्वाणि "द्वेषांसि" द्वेष्टॄणि रक्षांसि "तरति" विनाशयति । तत्र दृष्टान्तः—

* अत्रेयं महीधर-व्याख्या—"हे विश्वकर्मन् ! 'हविषा' मद्दत्तेन 'वावृधानः' वर्धमानो जातहर्षः सन् मम यज्ञे 'पृथिवीं' पृथिव्याश्रितानि भूतानि 'उत' अपिच 'द्यां' द्युलोकाश्रितानि भूतानि 'स्वयं यजस्व' तदनुग्रहाय। किञ्च त्वत्प्रसादात् 'अन्ये अभितः' स्थिताः 'सपत्नाः' शत्रवः 'मुह्यन्तु' मोहं प्राप्नुवन्तु, किञ्च 'इह' यज्ञे 'मघवा' इन्द्रः 'अस्माकं' 'सूरिः' पण्डितः आत्मज्ञानोपदेशकः 'अस्तु'।"—इति १७, २२ ।

† ऋ॰ आ॰ ५, १, ३, ७ (१भा॰ ९२३ पृ॰) = ऋ॰ वे॰ ७, ५, २४, २ ।

"सूरो न" यथा सूर्यः "सयुग्वभिः" सह युक्तैः रश्मिभिः तमांसि छिनत्ति तद्वत् [सयुग्वभिरिति छान्दसत्वात् दकारार्थः । यद्वा, धारया युक्तः सोमः युक्तैस्तेजोभिः सह रचां तरति]। तस्य "पृष्ठस्य" दशापवित्रस्योपरिसिक्तस्य "धारा" "रोचते" दीप्यते "पुनानः" पूयमानः "हरिः" हरितवर्णः सोमः "अरुषः" आरोचमानो भवति "यद्" यः सोमः "सप्तास्येभिः" रस-हरण-शीलैः आस्यैः "ऋक्वभिः" स्तुतिमद्भिः "ऋक्वभिः" तेजोभिः "विश्वा" विश्वानि व्याप्तानि "रूपा" रूपाणि नक्षत्राणि "परि याति" गच्छति व्याप्नोति ॥

"पृष्ठस्य"-"सुतस्य"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ १ २ ३ १ २   ३ १ २ ३ २   ३ १ २
प्राचोमनुप्रदिशंयातिचेकितत्सꣳरश्मिभि
३ २उ ३ १ २   ३ १र २र
र्यततेदर्शतोरथोदैव्योदर्शतोरथः ।
१ २ ३ २   ३ १उ   ३ १ २
अग्मन्नुक्थानिपौꣳस्येन्द्रञ्जैत्रायहर्षयन्
१ २ ३ १र २र ३ १ २   ३ १र १र
वज्रश्चयद्भवथोअनपच्युतासमत्स्वनपच्युता ॥ २ * ॥

"चेकितत्" जानानः सोमः "प्राचीं" पूर्वां "प्रदिशं" प्रकृष्टां दिशम् "अनु याति" अनुगच्छति । किञ्च "दर्शतः"

* ऋ० वे० ७, ५, २४, ३ ।

सर्वदर्शनीयः "दैव्यः" देवेषु भवः तव "रथः" सूर्यस्य "रश्मिभिः" "सं यतते" सङ्गच्छते । पुनः "दर्शतः रथः"—इत्यादरार्था । ततः "पौंस्या" पुंस्त्वावगमानि "उक्थानि" स्तोत्राणि "अग्मन्" इन्द्रं गच्छन्ति "यद्" यदा "समत्सु" सङ्ग्रामेषु "अनपच्युता अनपच्युतौ शत्रुभिरपराजितौ, सोमस्त्वञ्च इन्द्रश्च युवां "समत्सु" सङ्ग्रामेषु सह भवथः, तदा स्तोत्रागमनादीनि भवन्ति । पुनः "अनपच्युता"—इत्यादरार्था ॥ २ ॥

अथ तृतीया ।

२　१ १ २ ३ १　२ ३ २ ३ २ ३　१ २
त्वꣳ ह्यत्यपणीनां विदो वसु सम्मातृभि

१ १ ८　२र २ १ २ ३ २ ३ १ २
र्म्मर्ज्जयसि स्व आ दम ऋतस्य धीतिभिर्द्दमे ।

३　२ ३ २उ　३ २उ ३ १ २　३ १ २
परावतो न साम तद्यत्रा रणन्ति धीतयः

२ १ ० २ १ २　३ १ २　३ १ २　३ १ २
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥३*॥ १०

हे सोम ! त्वं "त्यत्"† त्यानि "वसु" गवादीनि धनानि "पणीनां" पणिभिः अपहृतं तत् गवात्मकं धनं "विदः" अविन्दः अलभथाः । "आ" अपिच "ऋतस्य" यज्ञस्य "धीतिभिः" धात्रीभिः "मातृभिः" वसतीवरीभिः "स्वे" आत्मीये "दमे" यज्ञे "सम्मर्जयसि" सम्यक् शुद्धो भवसि । "परावता न" दूर-

* ऋ० वे० ७. ५, २४. २ ।

† 'त्यच्छब्दस्तच्छब्द पर्य्यायः'—इति वि० ।

स्थादेशात् यथा "साम"* साम-ध्वनिः श्रूयते तथा तव "तत्" साम-ध्वनिः सर्वैः श्रूयते असौ सोमाभिषवाभिप्रायेणोक्तः । "यत्र" यस्मिन् शब्दे "धीतयः" कर्मणो धर्त्तारो यजमानाः "रणन्ति" रमन्ते, "रोचमानः" सोऽयं सोमः "त्रिधातुभिः" त्रयाणां लोकानां धारयित्रीभिः† "अरुषीभिः" आरोचमानाभिः दीप्तिभिः "वयः" अन्नं‡ "दधे" स्तोतृभ्यः प्रयच्छति । पुनः "वयो दधे" —इत्यादरार्थां ॥ ३ ॥ १०

१ २ १ र २
॥ गायत्रपार्श्वम ॥ आया । हुवाहरा३१उवा२३यि ।
५ २ र १र २र१रर २ १ २ १र २र
ओ२३४या । पुनानोविश्वाद्वेषाऽसितरतिसयुग्वभिःहूरो
१ २ १ २ १र र २ १ २र र र १र २ १र २र १ १र१र
नसयुग्वभिर्द्धारापृष्ठस्यरोचतेपुनानोअरुषो हर्विश्वायद्रूपा
२ १र २ १ ३१११ १ २ १ २ ३ २ १
परियास्युक्वभी२३४५ः । सप्तासी१येर२ । भिरा३ । हुं२
४ १ १ १ १ १
३वा३ । काभा२३४५यिः(१) ॥ ३ ¶ ॥ [१] १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

* 'साम शब्द साधु वचनः'—इति वि० ।

† 'त्रिधातुभिः—सुवर्ण-रजत-ताम्रैः'—इति वि० ।

‡ 'वयः—स्थानम्'—इति वि० ।

¶ ऊ० गा० १०५० २ख० ३मा० ।

अथ तृतीय-खण्डे —

उतनोगोषणिमित्येकर्चं प्रथमं सूक्तम्,

सा ऋगेषा।

१ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २

उतनोगोषणिन्धियमश्वसांवाजसामुत।

३ १ २ ३ १ २

नृवत्कृणुह्यूतये ॥ १ * ॥ ११

"उत" अपिच हे "पूषन्!" "गोषणिं" गवां सनित्रीं दात्रीं "अश्वसां" अश्वानां सनित्रीं "वाजसां" वाजानामन्नानां सनित्रीम् "उत" अपिच "नृवत्" नृवतीं नृणां वनित्रीं दात्रीम् एवम्भूतां "धियं" बुद्धिं कर्म च "नः" अस्माकम् "ऊतये" तस्यै उपभोगार्थं "कृणुहि" कुरु।

"ऊतये"-"वीतये"—इति पाठौ ॥ १ ॥ ११

अथ शशमानस्येत्येकर्चं द्वितीयं सूक्तम्,

सैषा ऋक्।

२ १ २ ३ १ २

शशमानस्यवानरःस्वेदस्यसत्यशवसः।

३ १२ २ ३ १ २

विदाकामस्यवेनतः ॥ १ † ॥ १२

हे "सत्यशवसः" अविनश्वर-बलाः "नरः" नेतारः मरुतः! "शशमानस्य" युष्मान् स्तुतिभिः सम्भजमानस्येत्यर्थः, "स्वेदस्य"

* ऋ० वे० ४, ८, १८, ४। † ऋ० वे० १, ६, १२, ३।

स्तावक मन्त्रोच्चारण-जनितेन श्रमेण क्लिद्यमान-गात्रस्य "वेनतः" [वेनतिः कान्ति-कर्मा (निघ०२,६,४)] कामयमानस्य* "वा"-शब्दः समुच्चये, एवम्भूतस्य स्तोतुश्च "कामस्य" काममभिलाषं "विद" लम्भयत प्रयच्छतेत्यर्थः ॥ १ ॥ १२

उपनस्सूनव इत्येकर्चं तृतीयं सूक्तम्,

सैषा ऋक् ।

१ २ ३ १ २ १ २ ३ २ ३ १ २ ३ २
उपनःसूनवोगिरःशृण्वन्त्वमृतस्ययें ।

३ १ २
सुमृडीकाभवन्तुनः ॥ १ † ॥ १३

"अमृतस्य" मरण-रहितस्य प्रजापतेः "ये" "तनवः" पुत्राः ते देवाः "नः" अस्माकं "गिरः" स्तुतीः "उप शृण्वन्तु" "नः" अस्माकं "सुमृडीकाः" सुष्ठु मृडयितारः सुखयितारश्च "भवन्तु" सन्तु ॥ १ ॥ १३

प्रवाम्महीति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

२ ३ २ ३ १ २ ३ १ २
प्रवाम्मर्चिद्यवोअभ्युपस्तुतिम्भरामहे ।

२ ३ २ ३ १ २
शुचीउपप्रशस्तये ॥ १ ‡ ॥

* 'सत्यश्रवसः—सम्यग्बलस्य 'विदाः' विद्वांसो वयं 'कामस्य' कमनीयस्य ...दुनः 'वेनतः' स्तूयमानस्य'—इति वि० ।

† ऋ० वे० ८, ८, १५, २ । ‡ ऋ० वे० ३, ८, ८, ५ ।

हे द्यावापृथिव्यौ ! "द्यवो" द्योतमाने "वां" युवाभ्याम "उपस्तुतिं" स्तोत्रं "महि" महत् प्रभूतम् "अभि प्र भरामहे" प्रकर्षेण सम्पादयामः ॥ १ ॥

अथ द्वितीया ।

२ २३क१र ३२उ ३१२
पुनानेतन्वामिथःस्वेनदक्षेणराजथः ।
३१ २ ३२३२
उह्याथेसनादृतम् ॥ २ * ॥

हे देव्यौ ! "तन्वा" स्वीयया मूर्त्या "दक्षेण" बलेन च "मिथः" प्रत्येकं "पुनाने" शोधयन्त्यौ यज्ञं यजमानं वा युवां "राजथः" ईश्वरे भवथः [यद्वा, 'तन्वा' स्व शरीरैकदेशेन 'मिथः' प्रत्येकं पुनाने शोधयन्त्यौ द्यौः स्वीयेनोपरेण भुवं सा च स्वकीयेन कार्य्येन चन्द्रमस-स्थिते दिवमिति विवेकः] "सनात्" सदाकालम् "ऋत" यज्ञम् "उह्याथे" वहथः ॥ २ ॥

अथ तृतीया ।

३१ ३१२ ३ १२ ३ १२३ १२
महीमित्रस्यसाधथस्तरन्तीपिप्रतीऋतम् ।
१२३१र २र
परियज्ञन्निषेदथुः ॥ ३ † ॥ १४

"मही" महत्यौ द्यावापृथिव्यौ "मित्रस्य" मित्रभूतस्य स्तोतुरभिमतं "साधथः" साधयथः । "ऋतम्" अन्नं "तरन्तौ"

* ऋ० वे० ३, ८, ८, ६ ।

† ऋ० वे० ३, ८, ८, ७ ।

हे "गावः" घर्म्मदुघा यूयम् "अवटे" महावीरे महावीरम् "उप वद" उपावत [वर्ण-व्यत्ययः उपायच्छत] यस्मात् "यज्ञस्य" घर्मयागस्य साधनभूते "रप्सुदा" रप्सुदे [रिप्सोः फल-प्रद-निप्सोरश्विनादातव्ये। यद्वा, रपणं शब्दनं रप् मन्त्रः तेन सुष्ठु दातव्ये। अथवा, षूद क्षरणे (भ्वा० आ०) रपा मन्त्रेण क्षरणीये ईदृशे] गवाजयोः पयसो "मही" महती बहुले अपेक्षिते उपावत [गो-शब्दोऽजाया अप्युपलक्षकः अजापयसोऽपि महावीरे आसेचनीयत्वात्]। अपिचास्य महावीरस्य "उभा" उभौ "कर्णा" कर्ण-स्थानीयौ द्वौ रुक्मौ "हिरण्यया" हिरण्ययौ सुवर्ण रजत-मयावित्यर्थः ॥

"अवटे"-"अवतम्"--इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभ्यारमिदद्रयोनिषिक्तम्पुष्करेमधु।
१ १ २ ३ १ २
अवटस्यविसर्ज्जने ॥ २ * ॥

"अद्रयः" आद्रियमाणाः अध्वर्य्वादयः "अभ्यारमित्" अभिगम्यैव "निषिक्तम्" अतिरिक्तम् "मधु" "पुष्करे" प्रवृद्धे उपयमनीय-पात्रे † सिञ्चति अग्निहोत्रार्थम् "अवटस्य" महावीरस्य "विसर्जने" विसर्जन-समये होमानन्तरं महावीरमासन्द्यामासाद्य ॥

"अवटस्य"-"अवतस्य"—इति पाठौ ॥ २ ॥

---

* ऋ० ८०५ ५, १६ १।　　† 'पुष्करे'—द्रोणकलशे'—इति वि०।

अथ तृतीया।

२ १ २ १ २ ३ २ ३ १ २ ३ १ २
सिञ्चन्ति नमसावटमुच्चाचक्रम्परिज्मानम्।
३ १ २ २ १ २
नीचीनबारमक्षितम्॥ ३ * ॥ १६

"अक्षितम्" अक्षीणम् ईदृशं चीराद्यवशेषमुक्तम् आहवनीयस्योपरि "नमसा" नमनेन "सिञ्चन्ति" शुम्भन्ति महावीरेण हि आहवनीये हूयते॥

"अवटम्"-"अव्रतम्"—इति पाठौ॥ ३॥ १६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोडशस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

माभेमेति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २३ १ २ ३ १ २ ३ १ २र
माभेम मा श्रमिष्मोग्रस्य सख्ये तव।
२ २ ३ १ २ ३ १ २ ३ १र २र ३ २ ३ १ २
महत्ते वृष्णो अभिचक्ष्यं कृतम्पश्येम तुर्वशं यदुम्॥ १†॥

---

* ऋ० वे० ८, ५, १५, ५।

† ऋ० वे० ५, ७, २१, २।

हे इन्द्र! "उग्रस्य" उद्गूर्ण-बलस्य तव "सख्ये" सखित्वे सति वयं "मा भेम" मा भेष्म कुतश्चिदपि शत्रोर्भीता माभूम "मा शमिष्म" श्रान्ताः पीड़िताश्च मा भूम "वृष्णः" कामानां वर्षितुः "ते" तव सम्बन्धि "महत्" प्रभूतं वृत्र-बधादि-लक्षणं "कर्म" "अभि चक्ष्यम्" अभितः ख्यापनीयं स्तोतव्यम् अतः महानुभावस्य तव सख्य-प्राप्तानां भीति-श्रमौ न जायेते इत्यर्थः। तत् कथमवगम्यते? इति चेत् उच्यते—"तुर्वशम्"; "यदुम्" एतत्सञ्ज्ञकञ्च* त्वत्प्रसादात् सुखेन जीवन्तौ "पश्येम" दृष्टवन्तः खलु वयम्। अतः कारणात् त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः॥ १॥

अथ द्वितीया।

३ १र २र ३ २र ३ २ ३ २ ३ १ २

सव्यामनुस्फिग्यंवावसेवृषानदानोअस्यरोषति।

२ ३ १ २ ३ ३ १ २ ३ २ ३ १ ३ २ ३ २ ३ १ २

मध्वासम्पृक्ताःसारघेणधेनवस्तूयमेहिद्रवापिब॥२†॥१७

"वृषा" कामानां वर्षिता इन्द्रः "सव्या" दक्षिणान "स्फिग्यं" कटि-प्रदेशम् "अनु" [तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् (१, ४, ८५)] स्फिग्या शरीरैकदेशेनैव "वावसे" वस्ते सर्वं भूतमाच्छा-

---

* 'तुर्वशं यदुम्'—एतौ क्षत्रिय कुमारौ—इति वि०।

† ऋ० वे० ५, ७, ३१, २।

दयति स्वयं कृत्स्नं जगदतीत्य वर्त्तत इत्यर्थः [ऋगन्तरञ्च दर्शयति—"यदन्यया स्फिग्या क्षामस्याः"—इति]। अपिच "दानः" अवखण्डयिता [दान अवखण्डने (भ्वा०प०), पचाद्यच्। (३,१, १३४) सच "अस्य" इममिन्द्रं "न रीषति" न हिनस्ति [रुष हिंसायाम् (भ्वा०प०) इन्द्रं हिंसितुं कश्चिदपि शक्तो नास्तीत्यर्थः। यद्वा, हे यजमान! 'दानः' हविषां दाता त्वम् 'अस्य' इन्द्रस्य 'न रीषति' रोषं न जनयतीत्यर्थः ]। उत्तरोऽर्द्धर्चः प्रत्यक्षकृतः— "सारघेण" सरघा मधुमक्षिका, तत्सम्बन्धिना "मध्वा" मधुना लुप्तोपमानमेतत् .मधुनेव रसवता क्षीरादिना अपण-द्रव्येण सम्पृक्ताः संसृष्टाः संस्कृताः "धेनवः" धेनुवत्-प्रीति-जनकाः अस्मदीयाः सोमाः [यद्वा, धिविः प्रीणनार्थो (भ्वा०प०) 'धेनवः' प्रीणयितार इत्यर्थः। अथवा धेट् पाने (भ्वा० प०)—"धेट इच्च (उ० ३, ११)"—इत्यौणादिको न-प्रत्ययः सन्नियोग इकारान्तादेशश्च। पातव्याः सोमा इत्यर्थः ]। यतएवमतः कारणात् हे इन्द्र! "तूयम्" क्षिप्रम् "एहि" अस्मत्समीपमागच्छ, आगत्य च सोमा यस्मिन्नुत्तरवेदिलक्षणे स्थाने ह्रयन्ते तं देशं "द्रव" शीघ्रं गच्छ [द्रु गतौ (भ्वा०प० )—इति धातु. "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति सांहितिको दीर्घः] तदनन्तरम् अध्वर्युणा दत्तं सोमं "पिब" तेन सोमेन सम्यक् स्वोदरं पूरयेत्यर्थः ॥ २ ॥ १०

इमाउत्वेति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२ १ २ २ १ २ २ १र २र
इमाउत्वापुरूवसोगिरोवर्द्धन्तुयाममा ।
२ १ २ ३ १ २ ३ १ २ ३ १र २र
पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत ॥ १* ॥

हे "पुरूवसो" बहुधनेन्द्र ! "मम" मदीयाः "इमाः" "गिरः" स्तुतिरूपा वाचः "त्वा" त्वां "वर्द्धन्तु" वर्द्धयन्तु । तथा "पावकवर्णाः" अग्नि-समान-तेजस्काः अतएव "शुचयः" शुद्धाः "विपश्चितः" विद्वांसः उद्गातारश्च "स्तोमैः" स्तोत्रैः बहिष्पवमानादिभिः "अभ्यनूषत" त्वामभिष्टुवन्ति [ णु स्तुतौ कुटादिः(प०)॥१॥

अथ द्वितीया ।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अयꣳसहस्रमृषिभिःसहस्कृतःसमुद्रइवपप्रथे ।
२ १र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
सत्यःसोअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ २† ॥ १८

"अयम्" इन्द्रः "सहस्र" सहस्र-सङ्ख्याकैः ऋषिभिः अतीन्द्रियार्थ-दर्शिभिः स्तोतृभिः"सहस्कृतः" सहसा बलेन युक्तः कृतः [स्तुत्या हि देवताया बलं वर्द्धते; स च एवं स्तुतः सन्]"समुद्रइव", उदधिरिव "पप्रथे" प्रथितो विस्तीर्णो बभूव । "अस्य" चेन्द्रस्य

---

* ऋ० आ० ३, २, १, ८ (१भा० ५१७४०)=ऋ० वे० ५, ७, २५, ३।

† ऋ० वे० ५, ७, २५, ४ ।

"सत्यः" अवितथः "सः" प्रसिद्धः "महिमा" महत्त्वं "शवः" बलं "यज्ञेषु" यागेषु "विप्रराज्ये" [राज्ञः कर्म्म राज्यम्] विप्राणां स्तोतॄणां राज्ये स्तुत-शस्त्र-सङ्घे * "गृणे" स्तूयते ॥ २ ॥ १८

४ १र ४ ५र र १ १ १र ४र ५
॥ श्यैतम् ॥ इमाउत्वापुरू । वसा ३ ४ औहोवा ।
१ र १ १ ० ५ ५ १र १ १र
गायिरोवर्द्ध । तुयाममार३४ । ओ६हा । पावकवर्णाः ।
१ २ १ २ ५ १ र
शूचार३याः । विपा२ः । चार३४यिताः । अभिस्तोमा
२ २ १ २ ५र र ४
यिरा३नू । ऊम्मायि । पा२ता२३४औहोवा ॥(१) अ
२ र ४र१र १ २ १र ४र ५ १ १र र १
भिस्तोमैरनू । पता३४औहोवा । आभिस्तोमैः । अनू
० ५ ५ १ १ २ १ २ १
पता२३४ । ओ६हा । अय७सहस्रम् । आर्षा२ ३यि
२ १ २ ५ १ र २ २
भायिः । सहा२ः । का२३४र्त्ताः । समुद्राइवा३पा ।
१ २ ५र ५ ४ ३४ ५ ३
ऊम्मायि । प्रा२था२३४औहोवा ॥(२) समुद्रइवप । प्र
२ १र ४र ५ १ २ १ ० ५
था३४औहोवा । सामुद्रइ । वपाप्रथा२३४यि । ओ६
५ १ १ र २ १ २ १ २
हा । सत्यःसोअस्य । माहा२३यिमा । गृणा२यि । शा

* 'विप्रराज्ये'—ब्राह्मणाध्यक्ष-भूमे राज्ये'—इति वि० ।

५ १ र २ २ १ ३
२३४षाः। यज्ञेषुवायिप्रा३रा। ऊम्मायि। जा२या२३

५ र र ३ ५
४औहोवा। वा२३४ह्न(३)॥ १० *॥ [१]

१ र ५ ४ र ५ र ४ ५
॥ नौधसम्॥ आ२३४यि। माउत्वापुरू। वासा

२ १र २ १ २ २ १ २ १
उ। गिरोवर्ह्णा। त३यामा३मा। पा२३वा। काव

१र १ २ १ २ ३ ५ १ २
र्णाः। प्रुच। यो। वायिपस्था२३४यिताः। आ२३भायि।

१ र २ १ ५ ३ ५ १ र
स्तोमैरनो२३४वा। पा२३४ता॥(१) आ२३४। भिस्तो

५ र र ४ ५ २ १ र २ १ २ २
मैरनू। षाता। अभिस्तोमायिः। आ३नूषा ३ ता।

१ २ १ २ १ २ १ २ ३
आ२३याम्। साहस्रम्। ऋषि। भायिः। साहस्का

५ १ २ १ २ १ ५ ३ ५
२३४र्त्ताः। सा२३म्। द्रा३वपो२३४वा। प्रा२३४थे॥(२)

१ ५ ४ ४ २ १ १
सा२३४म्। उद्र३वप। प्राथायि। समुद्रायि। वा

१ २ २ १ २ १ २ १ २ १
३पाप्रा३थायि। सा२३त्याः। सोमस्य। मंहि। मा

---

* ऊ० गा० १२प्र० १ख० १०मा०।

२ ३ ५ १ २ १ २१
गाणीयिग्रा२३४वाः। या२३ ज्ञायि। षूविप्रो २३४

५ ३ ५
वा। औ२३४यै(३)॥५*॥[२] १८

अथ यस्यायमिति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ २उ ३ २ ३ १ २ ३ २ ३ २
यस्यायंविश्वआर्योदासःशेवधिपाअरिः।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ २
तिरश्चिदर्येरुशमेपवीरवितुभ्येत्सोअज्यतेरयिः॥ १† ॥

"यस्य" यज्ञस्य "अयं" "विश्वः" सर्वो लोकः "आर्यः" प्रभुरपि "शेवधिपाः" निधि-पालकः ["विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि"—इति (ऋ०वे०८,२,२२,४) मन्त्रान्तरे पठितत्वात्] "दासः" भृत्यइव "अरिः" भवति स यज्ञः "अर्ये" स्वामिनि "रुशमे" नियन्तरि "पवीरवि" सरस्वत्याः पितरि ["पावीरवी कन्या चित्रायुः सरस्वती"‡—इत्युक्तम्] "तिरश्चित्" तिरोभूतोऽपि "तुभ्येत्" हे इन्द्र! तुभ्यमेव "रयिः" हविर्लक्षणं धनमुद्दिश्य "अज्यते" प्राप्तो भवति [अयमभिप्रायः —विप्र-क्षत्रादिकः सर्वो लोकः बृहस्पतिः, सच राजसूयादि रूपस्य यज्ञस्य भृत्या वर्द्धते, स तादृशो यज्ञो मन्त्र-रूपायाः सरस्वत्याः

● ऋ० गा०'१८प्र० २ख० ५मा०। † ऋ० वे० ६, ४, १८, ४।

‡ निरुक्त-दैवतकाण्डीय त्रिशत्तमं खण्डं "पवि: शल्यो भवतीत्यादिकं द्रष्टव्यम।

पिहित-स्थानीये परमेश्वर-स्वरूपे गूढोऽपि सन् हे इन्द्र ! त्वदर्थमेव हविर्दातुं प्रकटीभवति तथाविधस्तव महिमेति] ॥ १ ॥

अथ द्वितीया ।

२ १ २ ११ ३ २ ३ १ २ २ १ २
तुरण्यवोमधुमन्तङ्घृतश्चुतंविप्रासोअर्कमानृचुः ।
३ १ २ १ २ २ १ २ १ २ १ २ २ २ १ २
अस्मेरयिःपप्रथेवृष्ण्यꣳशवोऽस्मेस्वानासइन्दवः ॥ २* ॥ १९

“तुरण्यवः” यागादि-कर्मसु त्वरण-शीलाः† “विप्रासः” मेधाविन ऋत्विजः “मधुमन्तं” मधु-चीराद्याहुति-युक्तम्, [घृतमाज्यं श्चोतते चरति यस्मिन्नाहुति-द्वारेणेति] “घृतश्चुतम्‡”, “अर्कम्” अर्चनीयमिन्द्रम् “आनृचुः” पूजयन्ति§। किमर्थम्? इत्युच्यते—“अस्मे” अस्मभ्यं “रयिः” हविर्लक्षणं धनं “पप्रथे” प्रख्यातं भवतु। तथा “वृष्ण्यं” वर्षण-शीलं सोम-निबन्धनं “शवः” बलमपि प्रथताम्। तथा “अस्मे” अस्मासु “स्वानासः” सुवानाः अभिषुताः “इन्दवः” सोमाः प्रख्याता भवन्तु। एवं फलं कामयमानाः ऋत्विजः इन्द्रं पूजयन्तीत्यर्थः ॥ २ ॥ १९

---

* ऋ० वे० ६, ४, १९, ५ ।

† ‘तुरण्यवः—वेगवन्तः’—इति वि० ।

‡ ‘घृतश्चुतं—घृतमिव, उदकमिव-सोमम्’—इति वि० ।

¶ ‘अर्कं—द्रोणकलशम्’—इति वि० ।

§ ‘आनृचुः—मीतवन्तः’—इति वि० ।

॥ कालेयम् ॥ यस्यायाइविश्वाअर्य्याः। दासःशेवा। धिपाअराऽइयिः। तिरश्चिदाइ। यें२३४। रुशमेपवी। राइवायि। तुभ्येत्सौ। वा३४३ओ३४वा। ज्यते५र यायिः ॥(१) तुभ्येत्सोइअज्यतेरयायिः। तुभ्येत्सोआ। ज्यतेरया२३यिः। तुरण्यवो३। मा२३४। धुमन्तङ्‌न। श्रू३ताम्। विप्रासऔ। वा३४३ओ३४वा। कमा५नूचूः ॥(२) विप्रासोइअर्कमानूचूः। विप्रासोआ। कमानूचू२३ः। अस्मेरया३यिः। पा२३४। प्रशेतूष्णि यम्। शा३वाः। अस्मेस्वानौ। वा३ ४ ३ओ३ ४वा। सआ५यिन्दवाः। द्यो५ई। डा(३) ॥ ११ * ॥ [१] १९

* ऊ० गा० १३प्र० १ख० ११गा०।

अथ गोमन्नइन्दो इति त्वचात्मकं चतुर्थं सूक्तम,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
गोमन्नइन्दोअश्ववत्सुतःसुदक्षधनिव ।
१ २ ३१२३२ ३१ २
शुचिञ्चवर्णमधिगोषुधारय ॥ १ *॥

हे "सुदक्ष" हे सुबल ! हे "इन्दो" सोम ! "सुतः" अभिषुतस्त्वं "नः" अस्माकं "गोमत्" यज्ञ-साधन-गो-युक्तम् "अश्ववत्" अश्वयुक्तं धनं "धनिव" धन्व [वर्ण-विकारोऽत्र] गमय [ धविगत्यर्थः (प०)भूवादिः] ततोऽहं "शुचिं" पूतं दीप्यमानं "वर्णं" रसं "च" "गोषु" गव्येषु क्षीरादिषु "अधि धारय" अधिमिश्रयामीत्यर्थः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ १
सनोहरीणाम्पतइन्दोदेवप्सरस्तमः ।
१२ ३२३ १ २ ३ १ २
सखेवसख्येनर्योरुचेभव ॥ २ †॥

हे "हरीणाम्पते" अस्मदीयानां हरित-वर्णानां पशूनां स्वामिन्! हे "इन्दो" सोम ! "देव !" "प्सरस्तमः" अतिशयेन दीप्त-रूपोपेतः "नर्य्यः" कर्म-नेतृभ्य ऋत्विग्भ्यः हितः "सः" त्वं

---

* छ० आ० ६,२,३,९ (२भा० २१८पृ०)=ऋ० वे० ७, ५, ८, ४ ।

† ऋ० वे० ७, ५, ८, ५ ।

"नः" अस्माकं "रुचे भव" दीप्तिकरो भव। कइव? "सखेव" यथा सखा "सख्ये" मित्राय दीप्तिं करोति, तद्वत् ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
सनेमित्वमस्मदाँ अदेवङ्कञ्चिदत्रिणम्।
३ १ २ ३ २ ३ २ ३ १ २ ३ २
साह्वाँ इन्दोपरिबाधोअपद्वयुम् ॥ ३ * ॥ २०

हे सोम! "त्वं" "सनेमि" पुराणं सख्यम् "अस्मद्" अस्मासु "आ" कुरु। अपिच "अदेवम्" अदेवन-शीलं† "कञ्चिद्" अपि "अत्रिणम्" अदन-शीलं राक्षसम् अस्मत्तः "अप" गमय। किञ्च हे "इन्दो" सोम! साह्वान्" शत्रून् अभिभवन् "बाधः" बाधमानान् "परि" जहि। तथा "द्वयुं" द्वयवन्तं सत्यानृत-युक्तं बाह्याभ्यन्तरमय-द्वयोपेतं वा राक्षसमस्मत्तोऽपगमय ॥३॥२१

१र २ १ २ १
॥ अध्यम् ॥ गोमन्नाऽ२यिन्दो। अश्ववोवा। सुतः
२ १ २ ३ २ १ २ १ २ १ २ १र
सुदा। क्षधनिवा। शुचिञ्चवर्णमधिगोषु। धाऽ२३।
२ १र १ र र १
रयाउवा। शुधियाऽ२ ॥(१) सनोक्षराऽ२यिणाम्। पतौ
१ १र २र १ २ ३ २ १ र २ १ १र १ २ १र
वा। इन्दोदेवा। प्सरस्तमाः। सखेवसख्येनरियोरु।

* ऋ० वे० ७, ५. ८, ६।

† 'अदेवं—देवानां भक्ती न भवति स्वभावदेवः तम् अदेवम'—इति वि०।

चा २ ३ यि । भवाउवा । शूधियार२ ॥(२) सनेमिह्व२
वम् । अस्मदोवा । आदेवङ्काम् । चिदत्रिणाम् । सा
ह्वाꣳइन्द्रोपरिबाधोअ । पा२३ । दयाउवा । शूधिया
२ । ए२३ह्विया३४३ । ओ२३४५ई । डा(१) ॥ १४ * ॥[१]

॥ त्रैतम् ॥ गोमन्नइन्द्रोअश्वावत् । सुतःसुदक्षध
निवा । शुचिम्वर्णमा३धायिगो२३४हायि । षू२धा२३
४औहोवा । ए ३ । रया२३४५ ॥(१) सनोहरीणाम्पा
तायि । इन्द्रोदेवप्सरस्तमाः । सखेवसख्येना३रायियो
२३४वायि । ह्व२चा२ ३ ४ औहोवा । ए ३ । भवा २ ३
४५ ॥(२) सनेमितुवमास्मात् । आदेवङ्कञ्चिदत्रिणाम् ।
साह्वाꣳइन्द्रोपरी३बाधो२३४हायि । आ२या२३४औहो
वा । ए३ । दयू२३४५म(३) ॥ २ † ॥ [२]

---

*ऊ० गा० १२प्र० १अ० ४सा० । † ऊ० गा० १७प्र० १अ० २सा० ।

२र १ २ ४ ५र २ ३ ५
॥ पौष्कलम् ॥ गोमन्ना३इन्दो। आश्वा२३४वात्।
२ १ २ १ २ ३ ५ २ १ २ १ ७
सुतःसुद्रा। त्वाधाय्या२३४यिवा। शुचायिश्चवा। णमा
३ २ र १ ३ १ १ १ १ २ १र २ ५र
२धा२३४५यिगो६५६। सुधारया२३४५ ॥(१) सनोत्वा३री।
२ ३ ५ २ १र २र १ २ ३ ५
णाम्या२३४तायि। इन्दोदेवा। प्सारस्ता २ ३ ४ माः।
२ १ ७ ३ २ र १ ३
सखायिवसा। खियार्यिना२३४५र्यो६५६ः। रुचेभवा
१ १ १ १ २ १र २ ५ २ ३ ५ २र १र २
२३४५ ॥(२) सनेमी३तु। वामा२३४स्मात्। आदेव
१ २ ३ ५ २र १ ७
काम्। चायिद्वा२३४यिणाम्। साक्षा(ं)इन्दो। परा
३ २ १ ३ १ १ १ १
२यिवा२३४५धा६५६ः। अपद्वय्२३४५म्(३)॥६*॥[३]२०

अथाञ्जत इति पञ्चमं सूक्तम्,

तत्र प्रथमा।

३ २ ३क २र ३ १ २ ३ १ २ ३ २ ३क २र
अञ्जतेव्यञ्जते समञ्जते क्रतु(ं)रिहन्तिमध्वाभ्यञ्जते।
१ २ ३ २ ३ १ २ ३ १ २
सिन्धोरुच्छ्वासे पतयन्तमुक्षण(ं)
३ २ ३ १ ३ १ १
हिरण्यपावाः पशुमप्सुगृभ्णते ॥ १ † ॥

* ऊ० गा० १८प्र० २ख० ६सा०।

† ऋ० षा० ६, २, २, ११ (२भा० १९१पृ०) = ऋ० वे० ७, ३, २०, ३।

सोऽयमृत्विजः "अञ्जते" गोभिः, तथा "व्यञ्जते" विविधमञ्जन्ति, "समञ्जते" सम्यगञ्जन्ति [स्तुत्यर्थत्वादपुनरुक्तिः]। तथा "क्रतुं" बल-कर्त्तारं "रिहन्ति" लिहन्त्यास्वादयन्ति देवाः। तथा पुनः "मध्वा" मधुना गव्येन "अभ्यञ्जते" तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पत्लृगतौ (भ्वा० प०)—इत्यस्मात् स्वार्थिके णिचि वृद्धाभावश्छान्दसः] "उक्षणं" सेक्तारं "हिरण्यपावाः" हिरण्येन पुनन्तः "पशुं" द्रष्टारं ["पशुः पश्यतेः"—इति (निरु० नै० ३, १६) यास्केनोक्तत्वात्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति॥ १॥

अथ द्वितीया।

३ २ ३१२ ३१र २र
विपश्चितेपवमानायगायतमहीनधारात्यन्धोअर्षति।

२ ३२ ३ १ २र ३२ ३
अहिर्नजूर्णामतिसर्पतित्वच

२ ३ १र २र ३ २ ३ १ २
मत्योनक्रीडन्नसरद्वृषाहरिः॥ २ *॥

"विपश्चिते" मेधाविने "पवमानाय" पूयमानाय "गायत" स्तुतिं कुरुत। सच "विपश्चित्" सोमः "मही न धारा" महती वर्ष-धारेव "अन्धः" अन्नं रसात्मकम् "अभ्यर्षति" "अहिर्न"

* ऋ० वे० ७, ३, २०, ४।

† 'विपश्चिते—विश्वगाद्ये'—इति वि०।

अहिरिव "जूर्णा" जीर्णां त्वचम् "अति सर्पति" अतिसृजति धारा दशापवित्रात् अभिषवादि-कर्म्मणा त्वचं विसृजतीत्यर्थः । "अत्यः न" अश्व इव "क्रीड़न्" क्रीड़मानः "असरत्" सरति द्रोण-कलशं गच्छति । "वृषा" वर्षकः कामानां "हरिः" हरित-वर्णो रसः ॥ २ ॥

अथ तृतीया ।

३ १र १र ३ २ ३ १ ३ १ २ ३ १ २
अग्रेगोराजाप्यस्तविष्यतेविमानोअह्नाम्भुवनेष्वर्पितः ।

१ २ ३ १ २ ३ १ २ ३ १
हरिर्घृतस्नुःसुदृशीकोअर्णवो

३ १ २ ३ २ ३क २र
ज्योतीरथःपवतेरायओक्यः ॥ ३ * ॥ २१

"अग्रेगः" अग्रे गन्ता† "राजा" राजमानः "आप्यः" सुसंस्कृतः सोमः "तविष्यते" स्तूयते यः "अह्ना" दिनानां "विमानः" निर्म्माता चन्द्रकला-ह्रास-वृद्ध्यधीनत्वादहर्व्यवहारस्य निर्म्माता "भुवनेषु" उदकेषु वसतीवरी-सम्बन्धिषु "अर्पितः" स्थापितः सः "राजा" "तविष्यते" । किञ्च "हरिः" हरित-वर्णः "घृतस्नुः" प्रस्नुतोदकः "सुदृशीकः" शोभन-दर्शनः "अर्णवः"

---

* ऋ० वे० ७, ३, २०, ५ ।

† 'अग्रेग.— अग्रे देवानां गच्छति'—इति वि० ।

उदकवान् [अर्णइत्युदकं नाम (निघ० १,१२,१) [“ज्योतीरथः” ज्योतिर्मय-रथः “रायः” धनस्य प्रापयिता “ओक्यः”[“ओकइति निवास-नाम” ( निरु० नै० ३, ३ ) तस्य हितः ॥ ३ ॥ २१

२ १ २
॥ काවम् ॥ अञ्जोवा। तायिवियञ्जतायि। सम
१ १ २ १
ञ्जतायि। क्रतुᳫरिद्धन्तिमधुवा। भियञ्जाता२यि।
१ र र र २ १ १ २ ४
सिन्धोरुच्छासेपतया। तमुद्दाणा२३म्। द्दायिरा३ण्या
५ २र १ १ २ ४
पा। वाःपष्टमार२३। पृगा३भर्णा५ता६५६यि ॥(१)
२ १ र र २ र १ १ र र
विपोवा। चितेपवमाना। यगायाता२। मद्दोनधा
र २र १ १ र र
राअतिया। धोअर्षाता२यि। अद्दिर्न्नजूर्णामतिसा।
२ १ १ २ ४ ५ २ १ १ २
पतित्वाचा२३म्। आत्यो३नाक्री। उन्नसारा२३त्। वार्षा
४ २ १ र र र
३द्दा५रा६५६यिः ॥(२) अग्नोवा। गोराजाअपियाः।
२ १ १ र र र २ १
तविष्याता२यि। विमानोअक्नांभुवनायि। धुवर्य्यायिता
१ २र १ १
२ः। द्दरिघृतःस्नुःसुदृशायि। कोअर्णावा२३ः। ज्यो

२ ४ ५ २ १ १ १ ४
तौ ३ राथाः। पवनायिरा २ ३। याम्ओ ३ का ५ या

६५६:(३) ॥ १७* ॥ [१] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षोड़शस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १६ ॥

॥ इति सप्तमः प्रपाठकः† ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे
उत्तराग्रन्थे षोड़शोऽध्यायः ॥ १६ ॥

———000@000 ———

---

* ऊ० गा० १२प्र० १ख० १०सा०।

† 'इति सप्तमः प्रपाठकः'—इति वि० मूलादि सर्व-सम्मतश्च।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १७ ॥

## ॥ अथ सप्तदशोऽध्यायआरभ्यते ॥

तत्र,

प्रथमे खण्डे—

विश्वेभिरग्नइत्येतत् तृचं प्रथमं सूक्तं,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
विश्वेभिरग्नेअग्निभिरिमंयज्ञमिदंवचः ।

१ २
चनोधाःसहसोयहो ॥ १ * ॥

हे "सहसोयहो" बलस्य पुत्र ! देवतारूप ! "अग्ने !" "विश्वेभिः" अग्निभिः सर्वैराहवनीयादिभिर्युक्तः त्वम् "इयम्" अस्मदीयं "यज्ञम्" "इदम्" अस्मदीयं "वचः" स्तोमञ्च सेवमानः "चनः" अन्नं "धाः" अस्मभ्यं धेहि ॥ १ ॥

अथ द्वितीया ।

२ ३ १र २र ३ १ २ ३ १ २ ३ १ २
यच्चिद्धिशश्वनातनादेवंदेवंयजामहे ।

१र २र ३ २
त्वेद्धूयतेहविः ॥ २ † ॥

---

* ऋ॰ वे॰ १, १, २१, ५ ।  † ऋ॰ वे॰ १, १, २१, १ ।

"देवं देवम्" अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविषयं "यजामहे" तत्रापि तत् "हविः" सर्वं "त्वे इत्" त्वय्येव* हूयते अन्य-देवतान्तर-विनियोगोऽपि त्वदीयैव सेवेत्यर्थः। [तना— तनु विस्तारे (तना० प०), "क्विप् च (३, २, ७६)"—इति क्विप्, यद्वा पचाद्यच्, "सुपां सुलुगिति (७, १, ३९) तृतीयाया आकारः। देवंदेवं—"नित्यवीप्सयोः (८, १, ४)"—इति द्विर्भावः, "तस्य परमाम्रेडितम् (८, १, २)"—इति उत्तरस्याम्रेडितसञ्ज्ञायाम् "अनुदात्तञ्च (८, १, ३)"—इति सर्वानुदात्तत्वम्। यजामहे—"निपातैर्यद् यदि-हन्त (८, १, ३०)"—इति निघात-प्रतिषेधः। त्वे—युष्मच्छब्दात्सप्तम्येकवचनस्य "सुपां सुलुगिति (७, १, ३९) शे-आदेशः, "त्वमावेकवचने (७, २, ९७)"—इति मपर्य्यन्तस्य त्वादेशः, शेषलोपे "अतो गुणे (६, १, ९७)"—इति परपूर्वत्वम्, "शे (१, १, १३)"—इति प्रगृह्य-सञ्ज्ञायां "प्लुत-प्रगृह्या अचि (६, १, १२५)"—इति प्रकृतिभावः। हूयते—"अकृत्सार्वधातुकयोः (७, ४, २५)"—इति दीर्घः॥ २॥

अथ तृतीया।

३ १ २ २ २ ३ १ २ ३ १र २र
प्रियोनोअस्तुविश्पतिर्होतामन्द्रोवरेण्यः।
२ १ २ १ १ ३ १
प्रियाःस्वग्नयोवयम्॥ ३ †॥ १

---

* 'त्वे इत्—त्वे त्वाम्। इत् इति पदपूरणः'—इति वि०।

† ऋ० ने० १, १, २१, १।

"विश्पतिः" विशां प्रजानां पालकः ["पत्यावैश्वर्य्ये ( ६, २, १८ )"—इति पूर्वपद-प्रकृतिस्वरे प्राप्ते "परादिश्छन्दसि बहुलम् ( ६, २, १९९ )"—इत्युत्तरपदाद्युदात्तत्वम् ] "होता" होम-निष्पादकः "मन्द्रः" हृष्टः* "वरेण्यः" वरणीयः [ वृञ एण्यः ( उ० ३, ९८ ) वृषादित्वादाद्युदात्तत्वम् ] एवं विशिष्टोऽग्निः "नः" अस्माकं "प्रियः" "अस्तु" भवतु। "वयम्" अपि "स्वग्नयः" शोभनाग्नि-युक्ताः [बहुब्रीहौ "नञ्सुभ्याम् ( ६, २, १७२ )"—इति उत्तरपदान्तोदात्तत्वम् ] एवम्भूतः अतस्तव प्रिया भूयास्म: इति शेषः ॥ ३ ॥ १

अथेन्द्रं वहति तृचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।

३ १ २ ३ १ २

अस्माकमस्तु केवलः ॥ १ † ॥

हे ऋत्विग्यजमानाः "विश्वतः" सर्वेभ्यः जनेभ्यः "परि" उपरि अवस्थितः "इन्द्रं" "वः" युष्मदर्थं ‡ "हवामहे" आह्वयामः। अतः स इन्द्रः "अस्माकं" "केवलः" साधारणः "अस्तु" इतरेभ्यो-ऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः [ इन्द्रं—रन् प्रत्ययान्तः ( उ० २, २८ ), नित्त्वादाद्युदात्तः ( ६, १, १९७ ) ॥ १ ॥

* 'मन्द्रः—दीप्तः'—इति वि० ।

† ऋ० वे० १, १, १४, ५ ।

‡ 'वः—बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्, इन्द्रं त्वाम्'—इति वि० ।

अथ द्वितीया ।

१ २    ३ १ २ ३ १र    १र    २ ३ १ २
सनोवृषन्नमुञ्चरुᳫसत्रादावन्नपावृधि ।
३ २ ३ १ २
अस्मभ्यमप्रतिष्कुतः ॥ २ * ॥

हे "सत्रादावन्" अस्मदभीष्ट-फलानां सर्व्वेषां सह प्रदातः ! [ "आतो मनिन् क्वनिब्वनिपश्च ( ३, २, ७४ )"—इति वनिप्, "आमन्त्रितस्य च ( ६, १, १९८ )"—इत्याद्युदात्तत्वम्, पादादित्वान्न निघातः ( ८, १, १९ ) ] अतः कारणात् व्रीह्यादि-निष्पत्त्यर्थं हे "वृषन्" वृष्टि-प्रदेन्द्र ! [ आमन्त्रित-निघातः ( ८, १, १९ ) ] "नः" अस्मदर्थम् "अमु" "दृश्यमानं "चरु" मेघं [चरतीति चरुः† "भृ-मृशीत्यादिना (उ० १, ७) उ-प्रत्ययः, प्रत्यय-स्वरेणान्तोदात्तः ] "अपावृधि" उद्घाटय [ वृञ् वरणे ( स्वा० उ० ), लोटः सिप्, तस्य "सेर्ह्यपिच्च ( ३, ४, ८७ )"—इति हि, "स्वादिभ्यः श्नुः ( ३, १, ७३ )", तस्य "बहुलञ्छन्दसि ( २, ४, ७३ )"—इति लुक् "श्रु-शृ-णु पृ-कृ-वृभ्यश्छन्दसि ( ६, ४, १०२ )"—इति हेर्धिरादेशः, तस्य ङित्त्वात् पूर्व्वस्य गुणाभावः, निघातश्च, उद्घाटयेत्यर्थः] तथैव "अस्मभ्यम्" अस्मच्छब्दात् "भ्यसोभ्यम् ( ७, १, ३० )"—इति भ्यमादेशः, "शेषे (७,२,९०)"—इति तदो लोपः, "बहुवचने झल्येत् (७,३,१०३)"—इत्येत्वं न भवति "अङ्गवृत्ते: पुनर्वृत्तावविधिर्निष्ठितस्य"—

---

* ऋ० वे० १, १, १४, १ ।

† "चरुर्मेघो भवति चरतेर्वा समुच्चरन्त्यस्मादापः"—इति निरु० ६, ११ ।

इत्युक्तम्। प्रातिपदिक-स्वरेण स्मेत्यकारउदात्तः। "भ्यसोऽभ्यम् (७,१,३०)"* इत्यभ्यमादेश-पक्षे "शेषे लोपः (७,२,९०)"—इति मपर्य्यन्त-शेषस्यादशब्दस्य लोपः, तदा उदात्त-निवृत्तिस्वरेण अभ्यमआदेरकारस्य उदात्तत्वम्] अस्मदर्थम् "अप्रतिष्कुतः" प्रतिशब्द-रहितः केनचिदप्रतिशब्दितः [कुङ् शब्दे (भ्वा०आ०) "निष्ठा (३, २, १०२)"—इति कर्म्मणि क्त-प्रत्ययः, प्रतेः प्राक् प्रयोगः, पारस्करादेराकृतिगणत्वात् (६, १, १५७) सुडागमः, सुषामादेराकृतिगणत्वात् (८, ३, ९८) षत्वम्, नञ्-समासे अव्यय-पूर्वपद-प्रकृतिस्वरत्वम् (८, २, २), यद्यदस्माभिर्य्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति अतोऽस्मद्विषये कदाचिदप्यस्खलिताः। एतदेवाभिप्रेत्य यास्कआह—"अप्रतिष्कुतो अप्रतिस्खलितो वा (निरु० नै० ६, १६)"—इति ] ॥ २ ॥

अथ तृतीया।

१ २ ३१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वृषायूथेव वंसगः कृष्टीरियर्त्त्योजसा।

१ २ ३ १ २
ईशानो अप्रतिष्कुतः ॥ ३* ॥ २

"वृषा" कामानां वर्षिता इन्द्रः "ओजसा" स्वकीयेन बलेनानुगृह्णातु "कृष्टीः" मनुष्यान्† "इयर्त्ति" प्राप्नोति‡। कीदृशइन्द्रः? "ईशानः" समर्थः "अप्रतिष्कुतः" प्रतिशब्द-

* ऋ० वे० १, १, १४, २।

† 'कृष्टिः—कारयिता द्विजः'—इति वि०।

‡ 'इयर्त्ति—आगच्छति'—इति वि०।

रक्षितः याच्यमानं न परिहरतीत्यर्थः। दृष्टान्तः— "वंसगः" वननीय गतिर्वृषभः "यूथेव" गो-यूथानि यथा प्राप्नोति तद्वत् [ यूथाइव—युवन्ति मिश्रीभवन्तीति यूथानि, यु मिश्रणामिश्रणयोः (अदा० प०), "तिथ-पृष्ठ-गूथ-यूथ-प्रोथाः (उ०२,१२)"—इति क-प्रत्ययान्तो निपातितः, निपातनाद्दीर्घत्वम्, प्रत्ययस्वरेण अकार उदात्तः ( ३, १, ३ ), "शेश्छन्दसि बहुलम् (६,१,७०)"—इति शे-लुक्, "इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वं च वक्तव्यम् (२,४,७१वा०)"—इति समासेऽपि स एव स्वरः ॥ ३ ॥ २

त्वमग्ने इति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ १उ ३ १ १
त्वन्नश्चित्र ऊत्या वसो राधांसि चोदय ।

३ २ ३ १र २र ३ १ २ ३ १ ३ २ ३ १र १र
अस्य रायस्त्वमग्ने रथीरसि विदा गाधन्तु चे तुनः ॥ १ * ॥

हे "वसो" वासकाग्ने ! "चित्रः" दर्शनीयस्त्वम् "ऊत्या" रक्षया सह "राधांसि" धनानि "नः" अस्मभ्यं "चोदय" प्रेरय "अस्य" लोके परिदृश्यमानस्य "रायः" धनस्य त्वं "रथीः असि" रंहिता नेता भवसि अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपि च "नः" अस्माकं "तुचे" [ अपत्य नामैतत् निघ० २, २, १) अपत्याय अपतन-हेतुभूताय पुत्रादये "गाधं" प्रतिष्ठां "तु" क्षिप्रं "विदाः" लम्भय ॥ १ ॥

* ऋ० सा० १, १, ५, ७ (१ भा० १६०पृ०)=ऋ० वे० ४, ८, १, ५ ।

अथ द्वितीया ।

१ २ ३ १२ ३१ २ ३ २ ३१२ ३१ ३ १ २
पर्षि तोकन्तनयम्पर्त्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
१२ १ २ ३ १ २ ३ १ २ ३ १ २
अग्ने हेडाᳲसि दैव्या युयोधि नोदेवानि ह्वराᳲसि च ॥२*॥३

हे "अग्ने !" त्वम् अदब्धैः केनाप्यहिंसितैः "अप्रत्वभिः" अपृथग्भूतैः [ यौतिरत्र पृथग्भावार्थः ] सहितैः "पर्त्तृभिः"† पालन-साधनैः "तोकं" पुत्रं "तनयं" पौत्रं च "पर्षि" पालय "दैव्या" देव-सम्बन्धीनि च "हेडांसि" क्रोधान् "नः" अस्मत्तः "युयोधि" पृथक् कुरु ॥ २ ॥ ३

॥ वारवन्तीयम् ॥ त्वन्नस्त्वा औहोहाइ । त्राजता२३४ या । वसोराधाᳲसिचोदायो२३४हाइ । अस्यरायस्त्व मग्नेरथीरा३४औहोवा । इहा२३४हाइ । उरुवा२३४ सायि । विदागा । धान्तुचेतू३४ । औहोवा । इहा २३४हाइ । औहो३१२३४ । नाः । एहियाइहा ॥(१)

* ऋ० वे० ३, ८, २, ५ ।

† 'पर्त्तृभिः—छान्दसो रेफलोपः तृतीयाबहुवचनश्चेदं पर्त्तृभिः'—इति वि० ।

१ र र र र १ २ ७ ५ २ र र
विदागाधाऔहोहायि। तूहायितू२३४नाः। विदागाध
र १ ५ ५ र २
न्तुचेतूनोर ३ ४हायि। पर्षितोकन्तनयम्पर्तृभिष्टू ३ ४।
३र ४र ५ २ १ ५ १ २
औहोवा। पर्षायिता२३४हा। कन्तन्नयंयर्तृभिष्टू३४।
३र ४र ५ १ ३ ५ २ ३ ५ २ १
औहोवा। इहा२३४हायि। उऊवा२३४वाम्। अद
३र १ ७ २ ३र ४र ५ १ ३ ५
ब्धैः। आप्रयुत्वा३४। औहोवा। इहा २ ३ ४ हायि।
३र २ ५र ५ २ र र र
औहो३१२३४। भोः। एहियाह्हा ॥(२) अदब्धैराऔ
१ २ ३ ५ २ र १
होहायि। प्रायूत्वा२३४भायिः। अदब्धैरप्रयुत्वाभोर३४
५ १ र र र र र र र ३र ४र ५ २
हायि। अग्नेहेडाᳫंसिदैव्यायुयोधा३४। औहोवा। अ
१ ५ १र र र र १ ३र
ग्नायिहा२३४यिहायि। डाᳫंसिदैव्यायुयोधा ३ ४। औ
४र ५ १ ३ ५ २ ३ ५ २ १र ५
होवा। इहा२३४हायि। उऊवा२३४नाः। अदेवा।
१ ७ र २ ३र ४र ५ १ ३ ५ ३र
नायिङ्क्रराᳫंसा३४। औहोवा। इहा२३४हायि। औ
२ ५र ५ ४
हो३१२३४। वा। एहियाह्हा। हो५ई। डा(३) ॥६*॥[१]३

---

* ऊ० गा० १२प्र० २अ० ६सा०।

अथ किमित्तद्दति त्र्यचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ २ ३
किमित्तेविष्णोपरिचचिनाम*

१र २र ३ १ २ ३ १ २
प्रयद्ववक्षेशिपिविष्टोअस्मि।

१र २र ३ १र २र ३ २उ
मावर्पोअस्मदपगूहएत

३ १ २ ३ २ ३ १ २
द्यदन्यरूपःसमिथेबभूथ॥ १ †॥

[पुरा खलु विष्णुः स्वरूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् सङ्ग्रामे वसिष्ठस्य साहाय्यं चकार। तं जानन् ऋषिः अनया प्रत्याचष्टे। अत्र निरुक्तम्—"शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। *** ॥ किन्ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपि वा प्रशंसा-नामैवाभिप्रेतं स्यात्। किन्ते विष्णोः प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्न-रश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मावर्पो अस्मदपगूह एतत्। वर्प इति रूप नाम वृणोतीति सतः। यदन्यरूपः समिथे सङ्ग्रामे भवसि

* "परिचच्यभूत्"—इति ऋ०-पाठः।

† ऋ० वे० ५, ६, २५, ६।

संयत-रश्मिः (निरु० नै० ५, ८)"—इति] तत्र कुत्सितार्थ-पक्षे योजना—हे "विष्णो !" "ते" तव तत् "नाम" "किं" "परिचक्षि" प्रख्याप्यं भवतीति शेषः [किं शब्दः क्षेपे। अप्रख्याप्यमेव तद्भवति] "यत्" नामास्मभ्यं "प्र ववक्षे" प्रब्रूषे "शिपिविष्टो अस्मि"—इति [अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितः तेजसा अनाच्छादितो भवामीति अश्लीलार्थ-वादिनीदं नाम न प्रशस्तमित्यर्थः। यद्वा, परिपूर्व्वो चक्षिर्वर्जनार्थः, तन्नाम किं चक्षि परिचक्ष्यं परिवर्जनीयं परित्याज्यं विरुद्धार्थ-प्रतिपादकत्वात् स्वतएव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण]। अन्यम् उक्त-रूप-विलक्षणं यद् वैष्णवं रूपमस्ति "एतद्" "वर्पः" रूपम् "अस्मत्" अस्माकं "मा अप गूहः" अवगूढ़ं संवृतं मा कुरु [गूह संवरणे (भ्वा० उ० )] अपितु तदेव रूपं प्रकटयति। वैष्णवस्य रूपस्य गूहने का प्रशक्तिरिति चेत्—"यद्" यस्मात् त्वम् "अन्यरूप इत्" रूपान्तरमेव धारयन् "समिथे" सङ्ग्रामे "बभूथ" अस्माकं सहायो भवसि तस्मात् त्वयेदं गूहनं न कार्य्यमिति ॥ प्रशंसा-पक्षे तु—हे विष्णो ! "ते" तव तत् "नाम" "किं" "परिचक्षि" प्रख्यातं भवति ? न प्रख्यापनीयं स्वतएव प्रख्यातम्, अप्रख्यातम् प्रख्यापनीयम्। किं तन्नाम ? "शिपिविष्टो अस्मि" आविष्टोऽस्मीति यन्नाम "प्रब्रूषे"। यत एवं प्रख्यातरूपस्त्वमतोऽस्माद् कामनाद् वैष्णवं रूपं संवृत्तं मा कार्षीः। इदानीं गूढ़रूपोऽपि "यद्" यस्मात् त्वं गूढ़ोऽपि ज्ञायसएवेति व्यर्थमेव तस्य रूपस्य गूहनं "समिथे" सङ्ग्रामे "अन्यरूपः" कृत्रिम-रूपाद् यदन्यद् वैष्णवं रूपं शौर्यादि-लक्षणं तादृग्रूप एव "बभूथ" भवति।

तस्मात् त्वं गूढ़ोऽपि स्वायस एवेति अर्थमेव तस्य रूपस्य गूहनम्। अतो बहु-तेजस्कं यद्वैष्णवं रूपं तदेवास्माकं प्रदर्शयेति तात्पर्य्यार्थः ॥ १ ॥

अथ द्वितीया।

१ २र ३ १ २ ३ २३ १
प्रतत्तेअद्यशिपिविष्टहव्यमर्य्यः

२ ३ १ २ ३ २
शंसामिवयुनानिविद्वान्।

१ २ ३ २ ३ १ २ ३
तन्त्वागृणामितवसमतव्यान्

१ २ ३ १र ३ २र ३ २
क्षयन्तमस्यरजसःपराके ॥ २ * ॥

हे "शिपिविष्ट" रश्मिभिराविष्ट ! विष्णो ! "ते" तव "तत्" प्रसिद्धं विष्णुरिति प्रख्यातं नाम "अर्य्यः" स्वामी स्तुतीनां हविषां वा तथा "वयुनानि" ज्ञातव्यान्यर्थजातानि† "विद्वान्" जानन् यस्य "हव्यम्" आह्वान-योग्यं नाम अहम् "अद्य" इदानीं प्रशंसामि प्रकर्षेण स्तौमि। "तवसं" प्रवृद्धं‡ तं "त्वा" त्वां विष्णुम् "अतव्यान्" अतवीयान्¶ अप्रवृद्धतरोऽहं "गृणामि" स्तौमि। कीदृशम् ? "अस्य" "रजसः" लोकस्य "पराके" दूरदेशे क्षयन्तं निवसन्तम् ॥ २ ॥

---

* ऋ० वे० ५, ६, २५, ५।

† 'वयुनानि—नामानि'—इति वि०।

‡ 'तवसं—बलवन्तम्'—इति वि०।

¶ 'अतव्यान्—यः स्थापयितुं न शक्यते सोऽतव्यः'—इति वि०।

अथ तृतीया।

१ २ ३ १र २र ३
वषट्तेविष्णवासआकृणोमि
१ २ ३ २
तन्मेजुषस्वशिपिविष्टहव्यम्।
१ २ ३ २ ३ १ २
वर्द्धन्तुंत्वासुष्टुतयोगिरोमे
३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः॥ ३ *॥ ४

हे "विष्णो!" "ते" तुभ्यं "आसः" आस्यात् "आ" अभिमुखं "वषट् कृणोमि" वषट्कारेण हविर्याचयामि। हे शिपिविष्ट" शिपयो रश्मयस्तैराविष्ट! विष्णो! "तत्" वषट्कृतं "मे" मदीयं "हव्यं" हविः† "जुषस्व" सेवस्व। "सुष्टुतयः" शोभन-स्तुत्यात्मिकाः "गिरः" वाचश्च "त्वा" त्वां "वर्द्धन्तु" वर्द्धयन्तु। हे विष्णो "यूयं" [बहुवचनं पूजार्थम्। यद्वा,] भवदादयो देवाः सर्वे "स्वस्तिभिः" अविनाशिभिः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत॥ ३॥ ४

५ ३र २ ४र १
॥ गौरीवितम्॥ क्रिमित्। तेवा३यि। ष्णोपरिचा।
१ र र र १ऽ र २
क्षिनामप्रयद्ववक्षेशिपिविष्टोअस्मा२३यि। मावपाआ ३ १

* ऋ० वे० ५, ६, २४, ७।

† 'हव्यं'—चरु-पुरोडाशादि लक्षणम्'—इति वि०।

४ र १ २ ४र
२३। स्मद्रपगृहएतद्याप्र्दन्या। रूप:समा३१२३यि। थे
५ ४ ५ ५ ३र २ ४
बोवा। भूपृथोइहायि ॥(१) प्रतत्। तेआ३। द्यश्नि
५ १ र र
पिवायि। इहव्यमर्थ्यः शश्सामिवयुनानिऽविद्वा २ ३ न्।
र २ ४ र १
तान्त्वागृणा३१२३। मितवसमतव्यान्हापूयन्ताम्। आ
२ ४ ५ ४ ५
स्यरजा ३ १ २ ३। सःपोवा। रा ५ को ६ हायि॥(२)
५ ३र र ४ र ५ १ र र
वषट्। तेवा३यि। ष्यवासआ। कृणोमितन्मेजुषस्व
१ र २ र
श्निपिविष्टहव्या२३म्। वार्ड्न्तुत्वा३१२३। सुष्टुतयोगि
र र १ २ ४ २ ४
रोमेयूपूयम्या। तासुवस्ता३१२३यि। भिःसोवा। द ५
५
नो६हायि(३) ॥ ६ * ॥ [१] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तदशस्याध्यायस्य
प्रथमः खण्डः† ॥ १ ॥

* ऊ० गा० २१प्र० ३अ० ६सा०।

† 'उक्तो वाजपेयः'—इति वि०।

अथ द्वितीय-खण्डे*—

वायोशुक्रोअयामीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
वायोशुक्रोअयामितेमध्वोअग्रन्दिविष्टिषु ।
१ २ ३ १ २ ३ १ २ ३ १ २
आयाहिसोमपीतयेस्पार्हौदेवनियुत्वता ॥ १ † ॥

हे "वायो !" तुभ्यं "शुक्रः"‡ दीप्तोऽहं "मध्वः" मधुरं सोमरसं [कर्म्मणि षष्ठी (२, ३, ६५)] "अग्रम्" इतरेभ्यः पूर्वम्¶ "अयामि" प्रापयामि [अयतिरन्तर्भावित-ण्यर्थः] । किमर्थम्? "दिविष्टिषु" दिवो द्युलोकस्येषणेषु सत्सु हे "देव" वायो! "स्पार्हः" स्पृहणीयस्त्वं "नियुत्वता" नियुद् वायोः प्रतिनियतोऽश्वः§, तेन साधनेन "आयाहि" "सोमपीतये" सोमपानाय ॥१॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २
इन्द्रश्चवायवेषाᳬसोमानाम्पीतिमर्हथः ।
१ १र २र ३ १ २उ ३ १ २ ३ २
युवाᳬहियन्तीन्दवोनिम्नमापोनसाध्र्यक् ॥ २ ‖ ॥

---

* 'इदानीं राजसूयउच्यते'—इति वि० ।

† ऋ० वे० ३, ७, २३, १ ।

‡ 'शुक्रः सोमउच्यते'—इति वि० ।

¶ 'अग्रं'—प्रधानभूतम्'—इति वि० ।

§ "नियुतो वायोः"—इति निघण्टावश्वनामसु (१, १५, १०) पाठादिति भावः ।

‖ ऋ० वे० ३, ७, २३, २ ।

हे "वायो" त्वम् "इन्द्रश्च" "एषां" गृहीतानां सोमानां "पीतिं" पानम् "अर्हथः"। "युवां" "इन्दवः" वाप्युदकाः सोमाः "यन्ति" प्राप्नुवन्ति "निम्नं" खात-प्रदेशम् "आपः न सध्र्यक्" उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां "यन्ति हि" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ १ २ १ २
वायविन्द्रश्चशुष्मिणासरथꣳशवसस्पती।

३ १ २ ३ २ ३ १ २ ३ १ २
नियुत्वन्तानऊतयआयातꣳसोमपीतये ॥ ३ * ॥ ५

हे "वायो!" त्वम् "इन्द्रश्च" "शवसः" बलस्य "पती" पालयितारौ अतएव "शुष्मिणा" बलवन्तौ "नियुत्वता" नियुत्-सञ्ज्ञाश्ववन्तौ युवां "सरथं" समानमेव रथमारुह्येति शेषः। "नः" अस्माकम् "ऊतये" रक्षणाय "सोमपीतये" सोम-पानाय च "आयातम्" आगच्छतं [ यद्वा, सरथमधितिष्ठन्तमारुह्य चायातमिति वाक्य-द्वयम् ] ॥ ३ ॥ ५

अधक्षपेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १र २र
अधक्षपापरिष्कृतोवाजाꣳअभिप्रगाहसे।

१२ ३ १ २ ३ २ ३ १२ ३ २ ३ १ २
यदोविवस्वतोधियोहरिꣳहिन्वन्तियातवे ॥ १ † ॥

---

* ऋ० वे० ३, ७, २१, ३। † ऋ० वे० ७, ४, २५, १।

"क्षपा" ["सुपां सु-लुगिति (७, १, ३९) पञ्चम्या आकारः] क्षपाया रात्रेः "अथ" अनन्तरं प्रातःकाले "परिष्कृतः" [भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति करोतेः सुड़ागमः] अग्निरलङ्कृतः [यद्वा, क्षपयित्र्यां सेनायामलङ्कृतः] सन् हे सोम! त्वं "वाजान्" अन्नानि बलानि च "अभि" लक्ष्य "प्र गाहसे" प्रगच्छसि। "विवस्वतः" परिचरणवतः यजमानस्य* "धियः" कर्म्म-साधन-भूता अङ्गुलयः "हरिं" हरितवर्णं त्वामंशुं "यातवे" पात्राण्यभिगमनाय "यदि" "हिन्वन्ति" प्रेरयन्ति तर्हि सवनानि गच्छसीति॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
तमस्यमर्जयामसिमदोयइन्द्रपातमः।

१र २र३ १ १ ३ २ ३ २ ३ १ २ ३ १ २
यङ्गावआसभिर्दधुःपुरानूनञ्चसूरयः॥ २ †॥

"अस्य" सोमस्य "तं" रसं "मर्जयामसि" मर्जयामः शोधयामः अलङ्कुर्मो वा "यः" "मदः" मदकारः रसः "इन्द्रपातमः" इन्द्रेणात्यन्तं पीतो भवति। किञ्च "गावः" गन्तारः "सूरयः" स्तोतारः "पुरा च" "नूनं" इदानीं च "यं" सोम-रसम् "आसभिः" आस्यैः "दधुः" धारयन्ति च पिबन्तीति यावत् [यद्वा, 'गावः' धेनवः 'यं' सोमं तृणादिष्ववस्थितम् 'आसभिः' आस्यैः 'दधुः' धारयन्ति तृणरूपेण भक्षयन्ति॥ २॥

* 'विवस्वतः—आदित्यस्य'—इति वि०।

† ऋ० वे० ७, ४, २५, ३।

अथ तृतीया।

१२ २२ ३ १ २ ३ २ ३क २२
तङ्गाथयापुराण्यापुनानमभ्यनूषत।
३ १ २ ३ १२ ३२ ३२ ३१२
उतोकृपन्तधीतयोदेवानान्नामबिभ्रतीः॥ ३ *॥ ६

"पुनानं" पूयमानं सोमं "पुराण्या" पुरातनया "गाथया" स्तुत्या "अभि अनूषत" स्तोतारोऽभिष्टुवन्ति [नु स्तवने (अदा० प० ), लुङि रूपम् ]। "उतो" अपिच "नाम" कर्म्मार्थं नमनं "बिभ्रतीः" बिभ्राणाः "धीतयः" अङ्गुलयः "देवानां" सोम-रूप-हविः-प्रदानाय "कृपन्त" कल्पयन्ति समर्था भवन्ति॥ ३॥ ६

अश्वन्नत्वेति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२३ २३२ १ ३१२ ३१२ २२
अश्वन्नत्वावारवन्तंवन्दध्याअग्निन्नमोभिः।
३ १ २ ३ १ २
सम्राजन्तमध्वराणाम्॥ १ †॥

"अध्वराणां" यज्ञानां "सम्राजन्तं" सम्राट्-स्वरूपं स्वामिनम् "अग्निं" "नमोभिः" स्तुतिभिर्हविर्भिर्वा "वन्दध्यै" वन्दितुं प्रवृत्ता इति शेषः। अग्निर्दृष्टान्तः—"वारवन्तं" वाल-युक्तम् "अश्वं न" अश्वमिव अश्वो यथा वालेन बाधकान् मशक-मक्षिकादीन्

---

* ऋ० वे० ७, ४, २५, ४।

† छ० आ० १, १, २, ७ ( १भा० १२०पृ० )=ऋ० वे० १, २, २२, १।

परिहरति, तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः। [वारवन्तं—मतुपः पित्त्वादनुदात्तत्वम्; घञो ञित्त्वादाद्युदात्तो वार-शब्दः, "कर्षात्वतः (६, १, १५९)"—इति अन्तोदात्तत्वं व्यत्ययेन प्रवर्त्तते॥ १॥

अथ द्वितीया।

१ २ ३ १२ २र ३ १ २ ३ १ २
सघानःसूनुःशवसापृथुप्रगामासुशेवः।

३ २ ३ १ २
मीढ्वाँ अस्माकम्बभूयात्॥ २ *॥

"स घ" स एवाग्निः† "नः" अस्माकं "सुशेवः" सुमुखो भवत्विति शेषः। कीदृशः? "शवसा" बलस्य शवसः "सूनुः" पुत्रः [विभक्ति-व्यत्ययः] "पृथुप्रगामा" पृथु-प्रगमनः [प्रकर्षेण गमनं प्रगामः "हलश्च (३, ३, १२१)"—इति घञ्, पृथुः प्रगामो यस्यासौ पृथु-प्रगामः, "सुपां सु-लुक् (७, १, ३९)"—इति पूर्वसवर्णआकारः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८,२,१)] किञ्च "अस्माकं" "मीढ्वान्" [मिह सेचने (भ्वा० प०)—इत्यस्मात् क्वसु-प्रत्ययान्तो "दाश्वान् साह्वान् मीढ्वांश्च (६, १, १२)"—इति निपातितः] कामानां वर्षिता "बभूयात्" [भवतेश्छान्दसलिटः तिङां तिङो भवन्तीति तिङादेशः, यासुट्, स्थानिवद्भावात् शबभाव-द्विर्वचने "भवतेरः (७, ४, ७३)"—इत्यत्वं "तिङः (८, १, २७)"—इति निघातो भवत्वित्यर्थः॥ २॥

---

* ऋ० वे० १, २, २२, २।

† 'घ-इति पादपूरणः'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ १ ३
सनोदूराच्चासाच्चनिमर्त्यादघायोः ।
३ १२ ३ २ ३ १ १
पाहिसदमिद्विश्वायुः ॥ ३ * ॥ ७

हे अग्ने ! "विश्वायुः" [ इण् गतावित्यस्माद् भावे एतेर्णि-जन्तात् पुंसि, विश्वमयनं गमनं यस्येति बहुव्रीहिः, बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, १०६)—इति पूर्वोदात्तत्वं व्याप्त-गमन इत्यर्थः ] स त्वं "दूराच्च" दूरेऽपि आराच्च आसन्नाद् "मर्त्यात्" मनुष्याद् वैरिणः "नः" अस्मान् "सदमित्" सर्वदैव† "नि पाहि" नितरां पालय ॥ ३ ॥ ७

२ र र १ र
॥ वारवन्तीयोत्तरम् ॥ अश्वन्नत्वा । औहोहायि ।
३ ५ २ १ ५ १
वारावा२३४न्ताम् । वन्दाध्या२३४हायि । अग्नायिन्न
२ ३र ४र ५ १ २ ५ २ ३
मा३४ । औहोवा । इहा२३४हायि । उक्रवा २ ३ ४
५ २ १र २ १ ० २ ३र ४र ५ १ २
भीः । सम्राज । तामध्वरा३४ । औहोवा । इहा२३
५ ३र २ ५र ५
४हायि । औहो३१२३४ । णाम् । एहियाइहा ॥(१)

---

* ऋ० वे० १, १, २१, ३ ।

† 'इत्—इति पद-पूरणः'—इति वि० ।

२ र र र १ २ ३ ५ २ १
सघानःसाऔह्वोहायि। नूःश्रावा२३४सा। पृथूप्रा२३४

५ १र र २ ३र ४र ५ १ ३ ५
हा। गामासुश्रा३४। औह्वोवा। इहा२ ३ ४ह्वायि।

२ ३ ५ २र१र २ १ ७ ० ३र ४र ५
उक्रुवा२३४वाः। मीढा९श्र। स्नाकबभू३४। औह्वोवा।

१ ३ ५ ३र २ ५र
इहा२ ३ ४ह्वायि। औह्वो३१२३४। यात्। एह्विया६

५ २ र र र र १ २ ३ ५
हा॥(२) सनोदूराऔह्वोह्वायि। चाश्रसा२ ३ ४ह्वा।

२ १ ५ १र २ ३र ४र ५ १ ३
निमार्त्ता२३४ह्वायि। याद्ध्वा३४। औह्वोवा। इह्वा२

५ २ ३ ५ २र १ २ १ ३ २
३४हायि। उक्रुवा२३४योः। पाहिस। दामिदिश्वा३४।

३र ४र ५ १ ३ ५ ३र २
औह्वोवा। इह्वा२३४हायि। औह्वो३१ २ ३ ४। यूः।

५र ५ ४
एहिया६ह्वा। ह्वा५ई। डा(३)॥१७*॥[१]

१ २ ३र ५ १
॥वारवन्तीयाद्यम्॥ आश्वा। औहो२३४वा। ना

२ ३र ५ १र २ १ २ ३र
त्वा। औह्वो२३४वा। वारवन्तंवन्दध्या। आग्ना। औ

५ १ २र १र २ १ २र १
ह्वो२३४वा। नमोभिःसम्राजन्ताम्। आध्वराणाम्।

---

* ऊ० गा० १२प्र० १ख० १७सा०।

४ ५ १ २ ३र ५ १ २
औ२३होवा ॥(१) साधा। औहो२३४वा। नाःसा।
३र ५ १ २ र १ २र ३र
औहो२३४वा। नुःश्रवसापृथुप्रा। गामा। औहो२
५ १ र २र र १र २ १ २र १
३४वा। सुश्रवोमीढ्वाऽस्मा। काम्बभूयात्। औ२३
४ ५ १ २ ३र ५ १ १र ३र
होवा ॥(२) साना। औहो२३४वा। दूरा। औहो
२र १र २ १ २ ३र ५
२३४वा। चासाद्मनिमा। तौया। औहो२३४वा।
२र १र २र १ २ १ २र १ ४ ५
घायोःपाहिसदाम्। आयिदिश्वायूः। औ२३होवा।
४
होपृइ। डा(३) ॥ १५ * ॥ [२] ७

त्वमिन्द्रप्रतूर्त्तिष्विति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १र २र ३ १ २
त्वमिन्द्रप्रतूर्त्तिष्वभिविश्वाअसिस्पृधः।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १
अशस्तिहाजनितावृत्रतूरसित्वन्तूर्यतरुष्यतः ॥ १ ॥

हे "इन्द्र!" "त्वं" "प्रतूर्त्तिषु" सङ्ग्रामेषु "विश्वाः" सर्वाः "स्पृधः" युद्धकारिणीः शत्रु-सेनाः "अभि असि" अभिभवसि।

---

* ऊ० गा० २३प्र० १ख० १५गा०।

५९ छ० आ० ४, १, २, ९ (१भा०६२३पृ०)=ऋ० वे० ६, ७, ३, ५।

किञ्च, हे "तूर्य्य!" शत्रूणां बाधकेन्द्र! "अशस्तिहा" दैव्याना मशस्तीनां हन्तासि। "जनिता" असुरेभ्यः अशस्तीनां जनयिता चासि। अतएव "विश्वतूः" सर्वस्य दात्-वर्गस्य सर्वप्रकारेण वा हिंसिता "असि" "तरुष्यतः" बाधकांश्च बाधमानोऽसि ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
अनुते शुष्मन्तुरयन्तमीयतुः

३ १उ ३ १२ ३ १ २
चोणीशिशुन्नमातरा।

१ २ ३ १ २ ३ १ २
विश्वास्तेस्पृधःश्नथयन्तमन्यवे

३ १र २ ३ १ २
वृत्रंयदिन्द्रतूर्वसि ॥ २ * ॥ ८

हे इन्द्र! "ते" तव "शुष्म" बलं "तुरयन्तं" शत्रुं हिंसन्तं† "चोणी" द्यावापृथिव्यौ "मातरा" मातरौ "शिशुं न" शिशुमिव "अनु ईयतुः" अगच्छतः, गमन-मात्रे दृष्टान्तः। किञ्च, हे इन्द्र! त्वं "यद्" यस्मात् "वृत्रं" वृत्र-नामानं शत्रुं "तूर्वसि" हंसि। अतः "ते" तव "मन्यवे" क्रोधाय "विश्वाः" सर्वाः "स्पृधः" सङ्ग्राम-कारिण्यः सेनाः "श्नथयन्त" श्नथयिता श्लिष्टा भवन्ति ॥ २ ॥ ८

* ऋ० वे० ६, ७, ३, ६।

† 'तुरयन्तं'—शीघ्र-गन्तारम्'—इति वि०।

५ ४ २ ४ ५र ४ ५ १
॥ अभीवर्त्तम्॥ तुवा ३ मा३यिन्द्रप्रतूर्त्तिषोवा। आ
२ र १ २ १ २
भिविश्वाः। असायिस्या१ह्वा २ः। आशस्तिहा३१२३४।
३ ४र५ २ १ २ १ २ ३ २
जनितावृ। त्रतूरा१सा२यि। तुवान्तू१र्य्या२। तरु३।
१ २ १ १ १ १ ५ ४ ० ४ ५ ४ ५
ष्या२३४५। ता२३४५ः॥(१) तुवा३तू३र्य्यन्तरुष्यतोवा।
१ २र १ २ १ र २ २
तूवंतूर्य्य। तरुष्या१ता२ः। आनुतेशू३१२३४। म्मन्तु
४ ५ २ १ २ र १ २ ३ २
रय। तमायिया१तू२ः। क्षोणायिशा१यिशू२रम्। नमा
१ २ १ १ १ १ ५र ४ २
३। ता २ ३ ४ ५। रा २ ३ ४ ५॥(२) क्षोणा ३ यिशा
४ ५र ४ ५ १ र २ १ २
३ यिशूनमातरोवा। क्षोणीशिशुम्। नमाता १ रा
१ र २ २ ४ ५ २ १ २
२। वायिश्वास्ता३१२३४यि। स्पृधश्नथय। तमान्या१
१ २ ३ २ १ ३ ११
वा२यि। वृत्रांया१दा२। द्रतू३। वा२३४५। सा२३
११
४५यि(३)॥१८*॥[१]८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यसप्तदशस्याध्यायस्य

द्वितीयः खण्डः॥२॥

* ऊ० गा० ११प्र० २श्व० १८गा०।

अथ तृतीय-खण्डे—

यज्ञइन्द्रमिति तृचं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ १र २र ३ २उ ३ १ २
यज्ञइन्द्रमवर्द्धयद्यद्भूमिंव्यवर्त्तयत् ।

३ १ १ ३ २ ३ १
चक्राणओपशन्दिवि ॥ १ * ॥

"यज्ञः" यजमानैरनुष्ठीयमानो यागः "इन्द्र" देवम् "अवर्द्धयत्" [ श्रूयते हि—"इन्द्र इदं हविरजुषतावीवृधतमहो ज्यायो कृतः"—इति ] "यद्" यस्मात् "भूमिं" पृथिवीं "व्यवर्त्तयत्" वृष्ट्यादि-प्रदानेन विशेषेण वर्त्तमानमकरोत् । किङ्कुर्वन्? "दिवि" अन्तरिक्षे मेघम् "ओपशम्" उपेत्य शयानं "चक्राणः" कुर्वन् [यद्वा, आत्मनि समवेतो वीर्य-विशेष ओपशः, तमन्तरिक्षे कुर्वन् ] ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ २ ३ १ २ ३ २
व्या३न्तरिक्षमतिरन्मदे सोमस्य रोचना ।

२ ३ १ २र ३ २
इन्द्रोयदभिनद्वलम् ॥ २† ॥

---

* ऋ० आ० २, १, ३, ७ ( १भा० २०१ पृ० ) = ऋ० वे० ६, १, १४, ५

† ऋ० वे० ६, १, १५, २ ।

"सोमस्य" पानेन "मदे" हर्षे सति* "रोचना" रोचमानम् "अन्तरिक्षम्" अयम् "इन्द्रः" "वि अतिरत्" व्यवर्धयत्† "यद्" यस्मात् कारणात् "वलम्" आवृत्य-स्थितमसुरं मेघं वा "अभिनत्" व्यदारयत् ॥ २ ॥

अथ तृतीया।

१र २र ३ १ २ ३ १ २ १र १र २ २
उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहासतीः।
३ १ २ ३ २
अर्वाञ्चं नुनुदे वलम् ॥ ३ ‡ ॥ ९

"अङ्गिरोभ्यः" ऋषिभ्यः¶ वलानुचरैः पणिभिरपहृता गाः "उदाजत्" उदगमयत्। किङ्कुर्वन्? "गुहा" गुहायां विले "सतीः" विद्यमाना यथा न दृश्यन्ते तथा पणिभिर्निगूढास्ता गाः "आविष्कृण्वन्" प्रकाशयन्। अपिच पणीनामधिपतिं "वलम्" असुरमपि "अर्वाञ्चम्" अधोमुखं "नुनुदे" प्रेरितवान् ॥ ३ ॥ ९

अथ तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २ ३ १ २
त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम्।
१ २ ३ १ २
आच्यावयस्यूतये ॥ १ § ॥

---

* 'मदे—सोमस्य भक्षणार्थम्'—इति वि०।

† 'वि—अन्तरिक्षम्, अतिरत्—विविधेन प्रकारेण अन्तरिक्षं व्यापयति'—इति वि०। ‡ ऋ० वे० ८, १, १५ ३।

¶ 'अङ्गिरोभ्यः—अङ्गिरो नाम देवाः'—इत्यादि वि०।

§ छ० आ० १, ९, ३, ६ (१भा० २८६पृ०) = ऋ० वे० ८, ६, १६, १।

यजमानः स्तोतारं सम्बोध्याह— हे स्तोतः! "सत्रासाहं" [ सत्रा-शब्दो बहु-वाची ] बहूनामभिभवितारं [ यद्वा, शत्रून् स्व-बलेन सङ्गत्य जेतारं ] "वः" युष्मदीयासु "विश्वासु" "गीर्षु" सर्व्वेषु स्तोत्रेषु "आयतम्" विस्तृतं सर्वत्रेन्द्र एव स्तूयते, तस्मात् तेषु "त्वं" तम् "उ" [—इत्यवधारणे] तमेवेन्द्रम् "ऊतये" अस्मद्रक्षणाय "आ च्यावयसि" [च्युङ् प्रुङ् गतौ (भ्वा० आ०)] त्वदीयैः स्तोत्रैर्यज्ञं प्रत्याभिमुख्येनागमय ॥ १ ॥

अथ द्वितीया।

३ १र    २र  ३ १ १    ३ १र  २र
युध्मꣳसन्तमनर्वाणꣳसोमपामनपच्युतम्।
१ २  ३ १ १
नरमवार्य्यक्रतुम् ॥ २ * ॥

एवं गुणोपेतमिन्द्रमागमय्याह—"युध्मं" शत्रूणां सम्प्रहारकं "सन्तम्" अतएव "अनर्वाणम्" अन्यैरप्रहृत-गमनं, तस्मात् "अनपच्युतं" सङ्ग्रामेषु शत्रुभिरहिंसितं, "सोमपां" सोमस्य पातारम्, अस्य सोमस्य मदे सति "अवार्य्यक्रतुं" भटैरनिर्वा-णीय-कर्म्माणं, "नरं" सर्वस्य नेतारम्। एतादृग्गुणोपेतं तमिन्द्र मागमयेति पूर्व्वेण सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ६, ६, १६, २।

अथ तृतीया ।

१ ३ २उ ३ २ ३ १ २
शिक्षाणइन्द्रायआपुरुविद्वाँऋचीषम ।
१ २ ३ २ ३ १ २
अवानःपार्य्येधने ॥ ३ * ॥ १०

हे "ऋचीषम" स्तुत्या समा† [यद्वा, ऋष गति-हिंसादानेषु (भ्वा० प०), अस्मादमः प्रत्ययः, सर्वैर्गन्तव्य ! दर्शनीय ! वा] उक्त-गुणोपेत ! हे इन्द्र ! "विद्वान्" सर्व-विषय-ज्ञानवान् त्वम् "आ" शत्रुभ्यः आहृत्य "रायः" धनानि "नः" अस्मभ्यं‡ "पुरु" बहुवारं "शिक्ष"¶ प्रयच्छ [यद्वा, पुरु इति रायो विशेषणम्, बहूनि धनानि प्रयच्छ । किञ्च, "पार्य्ये" पराः शत्रवः तत्र§ "धने" आजिहीर्षिते शत्रु-धने "नः" अस्मान् "अव" रक्ष; शत्रून् हत्वा तद्धनेनास्मान् पालयेत्यर्थः ॥ ३ ॥ १०

२ ५ र ४र ५
॥ सत्रासाहीयम् ॥ त्या३४म् । उवःसत्रासाहम् ।
५ १ र र र १ १
ओ६वा । विश्वासुगीर्षीया२ताम् । आ२च्या । वार

---

* ऋ० वे० ६, ६, १६, ४।

† 'ऋचीषम—ऋचीष इति कर्म्मनाम, कर्मणा सम्भजनीयः'—इति वि० ।

‡ संहिता-पाठे तु "शिक्षा णः"—इति मूर्द्धण्य-श्रुतिः तत्र "पूर्वपदात् (८, ३, १०६)"—इति मूर्द्धण्यः ।

¶ संहिता-पाठे तु "शिक्षा"—इति दीर्घान्तः श्रूयते "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति दीर्घः ।

§ 'पार्य्ये—वरणीये धने—इति वि० ।

२ १ ऽ २र ३र १ १ ५ ५
३या। सियौ३हो। वाद्दा३४३यि। ता२ ३ ४यो६द्दा

३ १ र ६ ५
यि ॥(१) युष्मा ३ ४म्। सन्तमनर्वाणम्। ओ ६ वा।

१र र १ १ २ १
सोमपामनपच्यु२ताम्। ना२राम्। आ२३वा। रि

ऽ २र ३र १ १ ५ ५ १
यौ३हो। वाद्दा३४३यि। क्रा२३४तो६द्दायि ॥(२) शि

२ र र ५ ५ १ र र
क्षा३४। णइन्द्ररायआ। ओ६वा। पुरुविद्वा७ऋचौ

१ १ २ १ ऽ २र ३र २
षा२मा। आ२वा। ना२३:पा। रियौहो। वाहा३४

१ ५ ५
३यि। धा२३४नो६द्दायि(३) ॥ ४ * ॥ [१] १०

तवत्यदिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३ १ ३ २उ ३ १ २ ३ १र २र
तवत्यदिन्द्रियम्बृहत्तवदक्षमुतक्रतुम्।

१ १ ३ २ ३ १ २
वज्रं७शिशातिधिषणावरेण्यम् ॥ १ † ॥

हे इन्द्र! "त्यत्" प्रसिद्धम् "इन्द्रियम्" इन्द्रस्य लिङ्गं‡
"बृहत्" प्रभूतं वीर्य्यं "धिषणा" स्तुतिः "शिशाति" शिश्नति

* ऊ० गा० १३प्र० २ख० ४सा०।
† ऋ० वे० ६, १, १८, २।
‡ 'इन्द्रियं—वीर्यम्'—इति वि०।

तिच्णीकरोति। तथा "तव" त्वदीयं "दच" शोषकं बलम् "उत" अपिच "क्रतु" प्रज्ञानं बलं कर्म वा "वरेण्य" वरणीयं "वज्रम्" आयुधञ्च शिशाति तीच्णीकरोति ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तवद्यौरिन्द्रपौꣳस्यम्पृथिवीवर्द्धतिश्रवः।
२उ ३ १ २
त्वामापःपर्व्वतासश्चहिन्विरे ॥ २ * ॥

हे "इन्द्र!" "द्यौः" द्युलोकः "तव" "पौंस्य" बलं "वर्द्धति" वर्द्धयति "श्रवः" त्वदीयं यशः "पृथिवी" वर्द्धयति [वृधेर्ण्यन्ता-ल्लेटि अपि "छन्दस्युभयथा (३, ४, ११७)"—इति आर्द्धधातुक-त्वात् "णेरनिटि (६, ४, ५१)"—इति टि-लोपः] तं "त्वाम्" "आपः" उदकान्यान्तरिच्चाणि "पर्वतास: च" पर्ववन्तो मेघाश्च गिरयश्च वा "हिन्विरे" प्रीणयन्ति स्वामित्वेन प्राप्नुवन्तीति वा ॥ २ ॥

अथ तृतीया।

१२ १२ ३ १२ १२ ३ १ २ ३ १ २
त्वांविष्णुर्बृहन्चयोमित्रोगृणातिवरुणः।
१२ २१ ३ १ २ ३ १ २
त्वाꣳशर्द्धोमदत्यनुमारुतम् ॥ ३ † ॥ ११

हे इन्द्र! "बृहन्" महान् "चयः" निवास-हेतुः "विष्णुः" "मित्रः" "वरुणः" च "त्वां" "गृणाति"-स्तौति। तथा "मारुतं"

* ऋ० वे० ६, १, १८, ३। † ऋ० वे० ६, १, १८, ४।

मरुत्सम्बन्धि "शर्द्धः" बलं "त्वाम्" "अनु मदति" तव मदमनुलक्ष्य पश्चात् माद्यति त्वामनुमादयति वा ॥ ३ ॥ ११

॥ सौभरम् ॥ तवा३त्या३दिन्द्रियम्बृहोवा। तवद्दक्षमुतक्रा२तूं वज्रा२३म्। होयि। शा२३४यिशा। तिधिषणा। वरा३हा३यि। णा२या२ ३ ४औहोवा ॥(१) तवा३द्यौ३रिन्द्रपौंᳲसियोवा। पृथिवीवर्द्धतिश्रा२वास्तुवा२३म्। होयि। आ२३४पाः। पर्वतासः। वहा३यिहा३यिहा३यि। न्वा२यिरा२३४औहोवा ॥(२) नुवा३वा३यिष्णुर्बृंहन्क्षयोवा। मित्रोगृणातिवरु२णास्तुवा२३म्। होयि। शा२३४र्द्धाः। मदत्य। नुमा३हा३। रुरता२३४औहोवा। ऊ२३४५(३) ॥ ५* ॥ [१] ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तदशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऊ० गा० १३प्र० २ख० ५सा०।

अथ चतुर्थे खण्डे—

नमस्तेअग्नइति ऋचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३१ २ ३१ २ ३ १ २
नमस्तेअग्नओजसेगृणन्तिदेवकृष्टयः।
१ २ ३ १ २
अमैरमित्रमर्दय॥ १ *॥

"देव" द्योतमान! हे "अग्ने!" "ते" तुभ्यं "नमः गृणन्ति" नमस्कार-शब्दमुच्चारयन्ति। किमर्थम्? "ओजसे" बलाय "कृष्टयः" मनुष्याः यजमानाः अतोऽहमपि गृणामीत्यर्थः। त्वञ्च "अमैः" बलैः "अमित्र" शत्रुम् "अर्दय" नाशय॥ १॥

अथ द्वितीया।

३ १२ ३ १ २ ३ १ २ ३ १ २ २ १
कुवित्सुनोगविष्टयेग्नेसंवेषिषोरयिम्।
१ २ ३ १ २
उरुकृदुरुणस्कृधि॥ २ †॥

हे "अग्ने!" त्वं "नः" अस्माकं "गविष्टये" गवामिच्छणाय "कुवित्सु" बहु "रयिं" धनं "संवेषिषः" सम्प्रापय "उरुकृत्" त्वं "नः" अस्मान् "उरु कृधि"॥ २॥

---

* छ० आ० १, १, २, १ (१भा० १११ पृ०) = ऋ० वे० ६, ५, २५, ५ = य० वे० ५, ३८।

† ऋ० वे० ६, ५, २६, १ = य० वे० ५, ४१।

अथ तृतीया।

१ २ ३ १र २र ३ १ २
मानोअग्नेमहाधनेपरावर्ग्भारभृद्यथा।
३ १ ३ २ ३ १ २
संवर्गꣳसꣳरयिञ्जय॥ ३ *॥ १२

हे "अग्ने!" "नः" अस्मान्, अस्मिन् "महाधने" सङ्ग्रामे "मा परावर्क्" मा परित्याक्षीः "भारभृद् यथा" भारवाही यथा भारमन्ते परित्यजति तद्वत् "संवर्गं" शत्रुभ्यः सहृच्छाद्यमानं† "रयिं" धनं "सं जय" अस्मदर्थम्॥ ३॥ १२

२ १ २ १ र २ १
॥ जराबोधीयम्॥ नमस्तओवा। ग्नाओजसायि।
२ १ २ १ २
गृणान्ता२३यिदे। वक्रष्टायाः। अमायिरा१मा२३यि
४ ५ ३ २ २ १ १ १
त्राम्। अ। दयो३४५ई। डा॥(१) कुवित्सनोवा। गा
२ १ २ १ ० २ र १
विष्ट्यायि। अग्नायिसार२३वे। पिषोरायायिम्। उरु
२ ४ऽ ५ ३ २ २र र १
कृ१दू२३रु। णः। कृधो३४५ई। डा॥(२) मानोअग्नो
२ १ र २ १ २ १ २ १
वा। माहाधनायि। परावा २ ३ र्ग्भा। रभृद्याथा।

* ऋ० वे० ६, ४, २६, २।

† 'संवर्गं'—सम्यग् गवां वर्गम्'—इति वि०।

२ ४ऽ ५ ३ १
संवार्गाऽ१ साऽ२३रा। यिम्। अयो३४५ई।

डा(३) ॥ १६ * ॥ [१] १२

अथ समस्यमन्यवइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ १ ३ १ ३ १ ३ १ २ ३ १ १
समस्यमन्यवेविशो विश्वानमन्तकृष्टयः।

३ १ २ ३ १ २
समुद्रायेवसिन्धवः॥ १ † ॥

"विशः" विशन्त्यः "विश्वाः" सर्वाः "कृष्टयः" प्रजाः "अस्य" इन्द्रस्य "मन्यवे" क्रोधाय [यद्वा, मन्युर्मनन-साधनं स्तोत्रं तदर्थं "सं नमन्त" सम्यक् स्वतएव प्रह्वीभवन्ति उच्चारयन्ति वा। तत्र दृष्टान्तः— "समुद्राय इव" यथा समुद्रमुदधिं प्रति "सिन्धवः" स्यन्दन-शीला नद्यः स्वयमेव नमन्ते, तद्वत् ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ १ ३ १ २
विचिद्वृत्रस्यदोधतःशिरोबिभेदवृष्णिना।

१ २ ३ १ २
वज्रेणशतपर्वणा॥ २ ‡ ॥

---

* ऊ० गा० १६प्र० १अ० १६सा०।

† छ० आ० २, १, ५, १ (१भा० ३९६पृ०) = ऋ० वे० ५, २, ९, ४।

‡ ऋ० वे० ५, ८, १०, १।

"चित्" [—शब्दोऽप्यर्थः सच भिन्नक्रमः] "वृत्रस्य" आवरक-स्यापि "दोधतः" अत्यर्थं भृशं वा जगत् कम्पयतः सुरस्य "शिरः" मूर्द्धानं "शतपर्वणा" शत-सङ्ख्या-पर्वाणि धारा यस्य तादृशेन "वृष्णिना" सेचन-समर्थेन वीर्यवता वज्रेण इन्द्रः "वि बिभेद" विचिच्छेद ॥ २ ॥

अथ तृतीया ।

२ ३ १ २　　३ २उ ३ १ २
ओजस्तदस्यतित्विषउभेयत्समवर्त्तयत् ।
१ ३ १ २ ३ १ २
इन्द्रश्चर्म्मेवरोदसी ॥ ३ * ॥ १३

"अस्य" इन्द्रस्य "तत्" "ओजः" बलं "तित्विषे" दीदिपे [त्विष दीप्तौ (भ्वा० उ०) ] "यत्" येन ओजसा अयम् "इन्द्रः" "उभे" "रोदसी" द्यावापृथिव्यौ "चर्म्म इव" "समवर्त्तयत्" सम्यग् वर्त्तयति [यथा कश्चित् किञ्चित् चर्म कदाचिद् विस्तारयति कदाचित् सङ्कोचयति एवं तदधीने अभूतामित्यर्थः॥३॥ १३

अथ सुमन्मावस्वीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१२ ३ २३ १ २ ३१२
सुमन्मावस्वीरन्तीसूनरी ॥ १ † ॥

* ऋ० वे० ५, ८, ९, ५ ।

† नान्यत्र क्वाप्येषा ऋग् दृश्यते ।

हे इन्द्र ! तव अश्वौ "सुमन्मा" शोभन-ज्ञानौ* "वस्वी" धन-वन्तौ "रन्ती" रमणीयौ "सूनरी" सुष्ठु नेतौ [ यद्वा, सुमन्मा शोभन-मननीया मम स्तुतिः प्रवृत्तेति शेषः । अन्यत् समानम् ] ॥ १ ॥

अथ द्वितीया ।

१२ ३१ २३ २३१२ २२३२
सरूपवृषन्नागहीमौभद्रौधुर्यावभि ।
२ ३ १२ २२
ताविमाउपसर्पतः ॥ २ † ॥

हे "सरूप !" हे "वृषन्" कामानां वर्षकेन्द्र ! "भद्रौ कल्याणौ "इमौ" रथे युज्यमानौ "धुर्यौ" वहन-योग्यावश्वौ "अभि आ गहि" आगच्छ अस्मद् यज्ञं प्रति शीघ्रं गच्छ "तौ" "इमौ" अश्वौ "उप सर्पतः" त्वां सम्यक् सेवेते ॥ २ ॥

अथ तृतीया ।

१२२३ १ २ ३२३ १ २
नीवशीर्षाणिमृढ्वम्मध्यआपस्यतिष्ठति ।
१ २ ३१२ ३२
शृङ्गेभिर्दशभिर्दिशन् ॥ ३ ‡ ॥ १४

---

* 'सुमन्मा—सुवला'—इति वि० ।

† नाम्प्येषा क्वचिदन्यत्र दृश्यते ।

‡ नैषाप्यन्यत्र दृश्यते क्वचित् ।

हे ऋत्विग्जनाः! "मध्ये" "आपस्य" रसस्य इन्द्रः "तिष्ठति"। किं कुर्वन्? "दशभिः" दश-सङ्ख्याकैः "शृङ्गेभिः" अङ्गुलिभिः हस्ताग्रैः उभाभ्यां "दिशन्" अस्मदभीष्टमर्थं प्रयच्छन् यज्ञे तिष्ठति। हे ऋत्विग्यजमानाः! तं पश्यत "शीर्षाणि नि मृढ्व"* यूयमिन्द्रगमन-विषय-श्रेयांसि शिरसा धारयध्वमित्यर्थः॥ ३॥ १४

॥ वारवन्तीयोत्तरम्॥ साऔचोचायि। मा२३४ न्मा। वा२३४चायि। स्वायिरा३४। औचोवा। इहा २३४चायि। उङ्क्वा२३४न्तो। ह्वना३४। औचोवा। इहा२३४चायि। औहो३१२३४। रायि। एचिया६ हा॥(१) सङ्घपवाऔहोचायि। पानागा२३४चो। इमौभा२३४चा। द्रौधुर्य्यावा३४। औचोवा। इहा२ ३४चायि। उङ्क्वा२३४भो। ताविमौ। ऊपसर्प्या३४। औचोवा। इहा२३४चायि। औहो३१२३४। ताः। एचिया६हा॥(२) नीवशीर्षाऔचोचायि। णायिमाढ्

* 'निमृढ्व'—निमार्जनं कुरु'—इति, वि०।

५ २१ ५ १ २ ३र ४र
२३४वाम् । मध्याआ२३४हा । पश्यतिष्ठा३४ । औहो
५ १२ ५ २ ३ ५ २ १र २
वा । इहा२३४हायि । उऊवा२३४तायि । ऋटङ्क भिः ।
१ ० २ ३र ४र ५ १ २ ५ ३र २
दाशभिर्हा३४ । औहोवा । इहा२३४हायि । औहोइ
५र ५ ४
१२३४ । शान् । एहियाइहा । होऽ५इ । डा(३)॥१४*॥[१]१४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तदशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १७ ॥

॥ इति अष्टमप्रपाठकस्य प्रथमार्द्धः† ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे
उत्तराग्रन्थे सप्तदशोऽध्यायः
समाप्तः ॥ १७ ॥

———000@000———

---

* ऊ० गा० १३प्र० २अ० १४सा० ।

† 'अष्टमस्य प्रथमोऽध्यायः,' समाप्तश्चैकाहाः'—इत्यादि वि० ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १८ ॥

॥ अथाष्टादशोऽध्याय आरभ्यते* ॥

तत्र,

प्रथमे खण्डे—

पन्यम्पन्यमिति त्र्यचात्मकं प्रथमं सूक्तं,

तत्र प्रथमा ।

१२ ३ १ २ ३ १ २ ३ १ २
पन्यम्पन्यमित्सोतार आधावतमंद्याय ।
१ २ ३ १ ३ १ २
सोमंवीरायशूराय ॥ १ † ॥

हे "सोतारः" अभिषोतारोऽध्वर्यवः ! "मद्याय" मादयितव्याय "वीराय" विक्रान्ताय "शूराय" शौर्यवते इन्द्राय "पन्यम् पन्यम् इत्" सर्वत्र स्तुत्यमेव "सोमम्" "आ धावत" अभिगमयत प्रयच्छतेत्यर्थः ॥ १ ॥

---

* 'इदानीमहीना उच्यन्ते । द्विरात्र-प्रभृतयश्चाहर्गणाः एकादशरात्र-पौण्डरीक-पर्यन्ताः'—इति वि० ।

† छ० आ० २, १, ९, ९ (१भा० ३०४पृ०)=ऋ० वे० ५, ९, २१, ४ ।

अथ द्वितीया ।

१ १र ३१र२३१२ ३१२
एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् ।
१ २३ १र २र
इन्द्रं गीर्भिर्गिर्वणसम् ॥ २ * ॥

"ब्रह्मयुजा" ब्रह्मणा मन्त्रेण स्तोत्रेण हविषा वा युज्यमानौ "शग्मा" शग्मौ सुखकरौ शक्तौ वा "हरी" अश्वौ "इह" अस्मिन् यज्ञे "सखायं" समान-ख्यानं मित्रभूतम् "इन्द्रम्" "आ वक्षत" आवहताम् । कीदृशमिन्द्रम् ? "गीर्भिः" स्तुतिभिः प्रख्यापित-माहात्म्यं "गिर्वणसं" गिरा सम्भक्तारं स्तुतिभिः सम्भजनीयं वा ॥ २ ॥

अथ तृतीया ।

१ २ ३२ ३१र २र ३२र ३२
पाता वृत्रहा सुतमाघा गमन्नारे अस्मत् ।
१ २ ३१२
नियमते शतमूतिः ॥ ३ † ॥

"सुतम्" अभिषुतं "पाता" पानशीलः [ताच्छीलिकस्तृन् (३, २, १३५), "न लोकाव्यय (२, ३, ६९)"—इति कर्मणि षष्ठ्याः प्रतिषेधः] "वृत्रहा" वृत्रस्यासुरस्य हन्ता इन्द्रः "आगमत्" "घ" ‡ [—इत्यवधारणे] आगच्छतेव, "अस्मत्" अस्मत्तः

* ऋ० वे० ५, ७, २२, १ ।

† ऋ० वे० ५, ७, २२ १ ।

‡ 'आ घ एतावुपसर्गौ'—इति वि० ।

"आरे" दूरे देशे मा भवतु। आगत्य च "शतमूतिः" बहुविधरक्षणः इन्द्रः "नि यमते" अस्मदीयान् शत्रून् नियच्छतु तिरस्करोतु [यद्वा, धनान्यस्मभ्यं नियच्छतु ददातु] ॥ ३ ॥ १

॥ श्रौतकक्षम् ॥ पन्यम्पन्यमित्सोतारः। पन्यम्पन्योवा। आ३यित्सोता३राः। आधाव। ता२३। हा३हा३। मादीर२या२३४या। सोमंवीरा३। हा३हा। यशूरा२३या३४३ ॥(१) एहहरीब्रह्मयुजै। हहरोवा। ब्रा३ह्माय्२जा। शग्माव। ता२३। हा३हा३। ताःमा२खा२३४याम्। आगिन्द्रङ्गीर्भा३यिः। हा३हायि। गिर्वणा२३सा३४३म् ॥(२) पातावृत्रहासुतम्। पातावोवा। चा३हा२३ताम्। आघाग। मा२३त्। हा३हा३यि। ना२रे२आ२३४स्मात्। नायियमुता३यि। हा

२ १ २ १
३ चायि। शतम् २ ३ तौ ३ ४ ३:। ओ २ ३ ४ ५ ई।
डा(३) ॥ १ * ॥ [१] १

अथ आत्वाविशन्त्विति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
आत्वाविशन्त्विन्दवःसमुद्रमिवसिन्धवः।
२उ ३ १ २
नत्वामिन्द्रातिरिच्यते ॥ १ † ॥

हे "इन्द्र!" "इन्दवः" स्रवन्तः सोमाः "त्वा" त्वाम् "आ विशन्तु" सर्वतः प्रविशन्तु। तत्र दृष्टान्तः—"समुद्रमिव सिन्धवः" स्यन्दन-शीला नद्यः यथा समुद्रं जलाशयं सर्वतः प्रविशन्ति तद्वत्। यतएवं तस्मात् हे "इन्द्र!" "त्वां" कश्चिदपि देवो बलेन धनेन वा "नातिरिच्यते" नातिरिक्तो भवति सामर्थ्यवान् त्वत्तोऽधिको नास्तीत्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३१र २र
विव्यक्थमहिनावृषन्भक्षंसोमस्यजागृवे।
१ २ ३ १ २
यइन्द्रजठरेषुते ॥ २ ‡ ॥

---

* ऊ० गा० १४प्र० १अ० १सा०।

† छ० आ० ३, १, ४ (१भा० ४९६ प०)=ऋ० वे० ६, ६, १९, २।

‡ ऋ० वे० ६, ६, १९, ३।

"भच" पानं प्रति "महिना" महिम्ना "विव्यक्थ" सर्वतो व्याप्तवानसि [व्यचतेर्लिटि थलि "लिट्यभ्यासस्योभयेषाम् (६,१,१७)"—इति सम्प्रसारणम्] हे "इन्द्र!" "यः" सोमः "ते" तव "जठरेषु" उदरेषु प्रविशति, तस्य पानं व्याप्तवानसीति शेषः॥ २॥

अथ तृतीया।

१ २ ३ २ १ १ २ ३ १ २
अरन्तइन्द्रकुक्षयेसोमोभवतुवृत्रहन्।
२ ३ १ २ ३ १ २
अरन्धामभ्यइन्दवः॥ ३ *॥ २

हे "वृत्रहन्" वृत्रस्यापामावरकस्यासुरस्य मेघस्य पापस्य वा हन्तः! "इन्द्र!" सोऽस्माभिर्दीयमानः 'ते' तव "कुक्षये" "अरम्" अलं पर्य्याप्तो भवतु! किञ्च, "इन्दवः" सर्वतः क्षरणशीलाः सोमाः भवन्तु। "धामभ्यः" नानाविधेभ्यः शरीरेभ्यः तव तेजोभ्यो वा अरमलं पर्य्याप्ता भवन्तु [अनेन तेजसा हविर्भाक्त्वमस्तीति सूचितम्। अस्मदीयाः सोमा एव तव शरीरभूतेभ्यो देवेभ्य इति पर्य्याप्ता भवन्तु नान्यदीया इति भावः॥ ३॥ २

१र २ २ १ २ १ २
॥ आष्टादशम्॥ आत्वाविशन्त्विन्दवः। ऐयाहा

* ऋ० वे० ६, ६, १८, ४।

यि। समुद्रा१मा२यि। वसायिन्धा१वा२३:। ऐया२३
हायि। नत्वामा१यिन्द्रा२। तिरायिव्या१ता २ ३ यि।
ऐया२३हायि। नत्वामा१यिन्द्रा२। तिरायिच्या१ता
२३यि। ऐया२३हा३४३यि ॥(१) विव्यक्थमहिनावृषन्।
ऐयाहायि। भक्षा९सो१मा२। स्यजाग१वा २ ३ यि।
ऐया२३हायि। यआयिन्द्रा१जा२। ठरायिषू१ता२३
यि। ऐया२३हायि। यआयिन्द्रा१जा२। ठरायिषू१
ता२३यि। ऐया२३हा३४३यि ॥(२) अरन्तइन्द्रकुक्षये।
ऐयाहायि। सोमोभा१वा२। तुवार्त्री १ हा २ ३न्।
ऐया२३हायि। अरान्धा१मा२। भ्यआयिन्दा१वा२३:।
ऐया२३हायि। अरान्धा१मा२। भ्यआयिन्दा१वा२३:।
ऐया२३हा३४३यि। ओ२३४५ई। डा(३) ॥ २ * ॥ [१]

* ऊ० गा० १४प्र० १अ० २मा०।

१र र २ १ २ १र

॥ उद्वंशीयम् ॥ आत्वाविशन्त्विन्दवआ । समुद्राः ।

२ १ २

मिवसिन्धार२३वाः । नत्वार२ंहो१यि । आर३यिन्द्रा ।

१ २ २ २ २ ३ ५ १ २ऽ

तिरा१यिच्या३तायि । नत्वामार२३४यिन्द्रा । तायिरा३

२ २ १ २ २ १ २

उवा३ । उप् । च्याऽ२तो३५हायि ॥(१) विव्यच्युमहि

१र २ १ र र २ १

नावृषन्ना । भत्तं सोमस्यजाग२३वायि । यआ२हो१यि ।

२ १ २ २ २ ३ ५ १ ऽ

द्रा२३जा । ठरा१यिषू३तायि । यइन्द्रा२३५जा । ठारा

२ २ १ २ १ २

३उवा३ । उप् । षूऽ२तो३५हायि ॥(२) अरन्तइन्द्रकु

१ २ १ र र २ १

क्षयआ । सोमोभवतुवृत्रा२३हान् । अरा२ंहो१यि ।

२ १ २ २ २ ३ ५ १

धार३मा । भ्यआ१यिन्दा३वाः । अरन्धा२३४मा । भ्य

ऽ २ २ १ २

आ३उवा३ । उप् । दाऽ२वो३५हायि(३) ॥१*॥[२]२

---

* ऊ० गा० १८प्र० १अ० १धा० ।

अथ जराबोधेति तृचात्मकं तृतीयं सूक्तम्

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ १ २ १ २
जराबोधतद्विविड्ढिविशेविशेयज्ञियाय।
१ २ ३ १ २ ३ २
स्तोमꣳरुद्रायदृशीकम्॥ १ *॥

हे "जराबोध" जरया स्तुत्या बोध्यमान! हे अग्ने! "विशे विशे" तत्तद्यजमान-रूप-प्रजानुग्रहार्थं "यज्ञियाय" यज्ञ-सम्बन्ध्यनुष्ठान-सिध्यर्थं "तद्" देवयजनं "विविड्ढि" प्रविश। यजमानोऽपि "रुद्राय" क्रूरायाग्नये तुभ्यम्। कीदृशम्? "दृशीकम्" दर्शनीयं समीचीनं स्तोत्रं करोतीति शेषः [ अत्र यास्क एवं व्याख्यातवान्—"जरा स्तुतिः जरतेः स्तुति-कर्मणस्तां बोध, तया बोधयितरिति वा; तद्विविड्ढि तत् कुरु, मनुष्यस्य मनुष्यस्य यजनाय। स्तोमं रुद्राय दर्शनीयम् (निरु०दै०४८)"—इति ॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ १
सनोमहाꣳअनिमानोधूमकेतुःपुरुश्चन्द्रः।
३ १र २र
धियेवाजायहिन्वतु॥ २ †॥

---

* छ० आ० १, १, १, ५ ( १भा० ११६ पृ०=ऋ० वे० १, २, १३, ५।

† ऋ० वे० १, २, २४, १।

"सः" अग्निः "नः" अस्मान् "धिये" कर्मणे "वाजाय" अन्नाय च "हिन्वतु" प्रीणयतु । कीदृशः ? "महान्" [संहितायां नकारस्य रुत्वानुनासिकावुक्तौ ] गुणाधिकः "अनिमानः" [न-विद्यते निमानोऽस्येति बहुव्रीहौ "नञ्सुभ्याम् (६,२, १७२)"—इत्युत्तर-पदान्तोदात्तत्वम् ] निमान-वर्जितः अपरिच्छिन्नइत्यर्थः, "धूमकेतुः" [बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १ ) धूमेन ज्ञाप्यमानः* "पुरुश्चन्द्रः" [चदि आह्लादने दीप्तौ च (भ्वा० प० ) अस्मात् "स्फायि-तञ्चि (उ० २, १३)"—इत्यादिना कर्त्तरि रक्, पुरुश्चासौ चन्द्रश्च समासान्तोदात्तत्वम् "ह्रस्वाचन्द्रोत्तरपदे मन्त्रे (६, १, १५१ )"—इति सुट्, तस्य श्चुत्वेन शकारः] बहु-दीप्तिरित्यर्थः [धिये—"सावेकाचः (६, १, १६८)"—इति चतुर्थ्या उदात्तत्वम् । हिन्वतु—हविः-प्रीणनार्थम् "इदितो नुम् धातोः (७, १, ५८ )"—इति नुम् ] ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ ३ २ २ ३ १ २
सरेवाँइवविश्पतिर्दैव्यःकेतुःशृणोतुनः ।

३ २ ३ २ ३ १ २
उक्थैरग्निर्बृहद्भानुः ॥ ३ † ॥ ३

---

* 'धूमकेतुः—धूमध्वजः'—इति वि० ।

† ऋ० वे० १, २, २४, ३ ।

"सः" "अग्निः" "उक्थेभिः" स्तोत्रैर्युक्तान् "नः" अस्मदीयान् "शृणोतु"। तत्र दृष्टान्तः—"रेवान् इव" यथा धनवान् वन्दिनां स्तोत्रं शृणोति, तद्वत् [एतत्तदोः (६, १, १३२)"—इति सोर्लोपः) "रयेर्मतौ बहुलम् (६, १, ३४ वा०)"—इति सम्प्रसारणं परपूर्वत्वम्, "आद्गुणः (६, १, ८७)", "छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम् "रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् (६, १, १७६ वा०)"—इति मतुप उदात्तत्वम् ]। कीदृशः ? "विश्पतिः" [ "परादिश्छन्दसि बहुलम् (६,२, १९९)"—इत्युत्तरपदाद्युदात्तत्वम् ] प्रजा-पालकः "दैव्यः" देवानां सम्बन्धी ["अग्निर्वै देवानां होता"—इति श्रुत्यन्तरात् ] "केतुः" दूतवत् ज्ञापकः।"अग्निर्वै देवानां दूत आसीत्"—इति श्रुतिः] "बृहद्भानुः" [ बहुव्रीहौ प्रकृतिस्वरत्वम् (८, २, १ ) ] प्रौढरश्मिः ॥ ३ ॥ ३

२ र र १ २ १ २ १
॥ जराबोधीयम् ॥ जरावोधोवा। ताद्विविड्ढायि।
२ १ २ १र र ७ ४
विशायिवा२३यिशे। यज्ञियाया। स्तोमा७रुद्रा२३या।
५ ३र २ २ र १ २ १ २र १
हशीको३४३ई। डा ॥ (१) सनोमहोवा। आनिमानाः।
२र १ २ १ २ ४
धूमाका२३यितूः। पुरुश्चान्द्राः। धियेवा१जा२ ३ या।

५ १ १ १ २ २ १ २ १ १ १ २ १
चि। न्वतो३४५ई ॥(२) सरेवा ऽ ओवा। वाविश्वता

२२ १ १ २ १ २
यिः । दैव्याःकार३यितूः । भूषणोतूनाः । उक्थायिराः

४ ५ १२ २
ग्रार३यिवूँ । चत् । भानो३४५ई । डा(३) ॥ ५ * ॥ [१] ३

अथ तद्वोगायेति तृचात्मकं चतुर्थं सूक्तम्, †

तत्र प्रथमा ।

१ २ ३ १२ १२ ३ १ ३ १ २
तद्वोगायसुतेसचापुरुहूताय सत्वने ।

२उ ३ १ २ ३ १ २
शंयद्गवेनशाकिने ॥ १ ‡ ॥

हे स्तोतारः ! "वः" यूयं "सुते" अभिषुते सोमे सति "पुरुहूताय" बहुभिर्यजमानैराहूताय "सत्वने" शत्रूणां सादयित्रे [यद्वा, धनानां सनित्रे दात्रे इन्द्राय "तत्" स्तोत्रं "सचा" सह संहता भूत्वा "गाय" गायत "यत्" स्तोत्रं "शाकिने" शक्तिमते इन्द्राय "शं" सुखकरं तद्वदित्यर्थः ॥ १ ॥

---

* ऊ० गा० १४प्र० १ख० ५सा० ।

† 'द्वितीयमतिरिक्तस्तोत्रं यवावाद्यौयम्, तृतीयं भार्गो यवम्'—इति वि० ।

‡ छ० आ० २, १, ३, १ (१भा० २८८ पृ०) = ऋ० वे० ४, ७, २५, १ ।

अथ द्वितीया।

१ २ २ ३ १२ ३ १र १र ३ १ ३
नघावसुर्नियमतेदानंवाजस्यगोमतः।

२ १ २ ३ १ ३ १ २
यत्सीमुपश्रवद्गिरः॥ २ *॥

"वसुः" वासयिता † स इन्द्रः "गोमतः" बहुभिर्गोभिर्युक्तस्य "वाजस्य" अन्नस्य बलस्य वा "दानं" प्रदानं "न घ" न खलु ‡ "नियमते" नियच्छति उपरतं करोति. "यद्" यदि "सीं" ¶ "गिरः" अस्मदीयाः स्तुतीः "उपश्रवत्" उपशृणुयात् स्तोत्र-श्रवणे सति सर्वदा ददातीत्यर्थः॥ २॥

अथ तृतीया।

३ १२ ३२उ ३ १र १र ३ १र २र
कुवित्सस्यप्रहिव्रजङ्गोमन्तन्दस्युहागमत्।

१ २ ३ १ २
शचीभिरपनोवरत्॥ ३ §॥ ४

"कुवित्सस्य" [कुवित् बहु सस्यति हिनस्तीति] कुवित्सो नाम कश्चित् तस्य स्वभूतं "गोमन्तं" बहुभिर्गोभिर्युक्तं "व्रजः" गोष्ठं "दस्युहा" दस्यूनामुपक्षपयितॄणां हन्ता इन्द्रः "प्रागमत्" प्रकर्षेण गच्छति "हि" यस्मात् "शचीभिः" आत्मीयैः कर्मभिः प्रजा-

* ऋ० वे० ४, ७, २५, २।

† 'वसुः—प्रशस्त-धनः'—इति वि०।

‡ 'न घ—नकारः प्रतिषेधार्थः, घकारः पद पूरणः' इति वि०।

¶ 'सीम्—इति पद पूरणः'—इत्यपि वि०।

§ ऋ० वे० ४, ७, २५, ४।

भिर्वा "नः" अस्माकं ता गाः "अप वरत्" निगूढ़ास्ता अपा-
वृणोत् ॥ ३ ॥ ४

॥ मार्गीयवाद्यम् ॥ तद्वौद्दोवा। गायार। सुता
यिसार३४चा। पुरुहूता। यसात्वा१ना२यि। शंयत्।
द्दा। औ३होयि। गा२३४वायि। ना२शा२३४औद्दो
वा। ए३। किने२३४५ ॥(१) नघौद्दोवा। वासू२ः।
नियामा२३४तायि। दानंवाज। स्यगोमा१ता२ः। य
त्सोम्। हा। औ३होयि। ऊ२३४पा। आ२वा२३४
औद्दोवा। ए३गिरा२३४५ः ॥(२) कुवौद्दोवा। सास्या
२। प्रचित्रा२३४जाम्। गोमन्तन्द। स्युद्दागा१मा२त्।
प्राचो। द्दा। औ३होयि। भा२३४यिरा। पा२ना२३
४औद्दोवा। ए३। वरा२३४५त्(३) ॥ ६ * ॥ [१] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० १४प्र० १अ० ६गा०।

अथ द्वितीय-खण्डे—

अथेदंविष्णुरिति षडृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २उ ३ १ २ ३ १र २र ३ २
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्।

१ २ ३ २
समूढमस्यपांसुले॥ १ *॥

"विष्णुः" त्रिविक्रमावतारधारी "इदं" प्रतीयमानं सर्वं जगदुद्दिश्य "त्रेधा" त्रिभिः प्रकारैः "पदं नि दधे" स्वकीयं पादं प्रक्षिप्तवान्। "अस्य" विष्णोः "पांसुले" धूलि-युक्ते पाद-स्थाने" "समूढम्" इदं सर्वं जगत् सम्यगन्तर्भूतम् [सेयमृग्यास्केनैवं व्याख्याता—"विष्णुः विशतेर्वा व्यश्नोतेर्वा॥ * * *॥ यदिदं तद् विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूढमस्य पांसुलेप्यायनेऽन्तरिक्षे पदं न दृश्यते अपि वोपमार्थे स्यात् समूढमस्य पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा (निरु० दै० ६, १९)"—इति॥ १॥

---

* ऋ० आ० ३, १, ३, ९ (१भा० ४६१ पृ०)=आ० वे० १, २, ७, १=य० वे० ५, १६।

अथ द्वितीया ।

१ २३१र २र ३ १ २ ३१र २र
त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ।
२ ३ १ २ ३ १ २
अतोधर्म्माणिधारयन् ॥ २ * ॥

"अदाभ्यः" [दभेः "ऋ-हलो ण्यत् (३, १, १२४)"—इति ण्यत्, नञ्-समासः अव्यय-पूर्वपद-प्रकृतिस्वरत्वम् ( ८,२,२ )] केनापि हिंसितुमशक्यः "गोपाः" सर्वस्य जगतः रक्षकः "विष्णुः" पृथिव्यादि-स्थानेषु अत एतेषु "त्रीणि" "पदा" पदानि "वि चक्रमे" । किङ्कुर्वन् ? "धर्म्माणि" अग्निहोत्रादीनि "धारयन्" [शपः पित्त्वादनुदात्तत्वम् (३, १, ४) शतुश्च ल-सार्वधातुक-स्वरेण ( ६, १, १८६ ) स एव शिष्यते ] पोषयन् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३१
विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ।
१ २ ३१ २ १ २
इन्द्रस्ययुज्यःसखा ॥ ३ † ॥

हे ऋत्विगादयः ! "विष्णोः" "कर्माणि" वीर्याणि "पश्यत" "यतः" यैः कर्मभिः "व्रतानि" अग्निहोत्रादीनि "पस्पशे" सर्वो यजमानः स्पृष्टवान् [ स्पश बाधन-स्पर्शनयोः (भ्वा० ७०),

* ऋ० वे० १, २, ७, ३=य० वे० ३४, ४३ ।

† ऋ० वेद १, २, ७, ४—य० वे० ६, ४—८, ३३ ।

लिटि द्विर्भावे, "शर्पूर्वाः खयः (७, ४, ६१)"—इति पकारः शिष्यते सकारो लुप्यते, यद्वृत्तयोगादनिघातः (८, १, ६६)] विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः। तादृशः विष्णुः "इन्द्रस्य" "युज्यः" योग्यः [युजेर्बाहुलकात् क्यप् (३, १, १२१), कित्त्वाद् गुणाभावः (१, १, ५), क्यपः पित्त्वात् अनुदात्तत्वम् (३, १, ४), धातु-स्वरः (६, १, १६२)] अनुकूलः सखा भवति विष्णोरिन्द्रानुकूल्यं च "त्वष्टाहत पुत्र इत्यनुवाके "अथवैतर्हि विष्णुरित्यादि बहुना प्रपञ्चेन तैत्तिरीया आमनन्ति] ॥ ३ ॥

अथ चतुर्थी।

१र २र ३ १ ३ १र २र ३ १ २
तद्विष्णोःपरमम्पदᳯसदापश्यन्तिसूरयः।

३ २ ३ १ ३ १ २
दिवीवचक्षुराततम् ॥ ४ * ॥

"सूरयः" विद्वांसः ऋत्विगादयः "विष्णोः" सम्बन्धि "परमम्" उत्कृष्टं तच्छास्त्र-प्रसिद्धं "पदं" स्थानं शास्त्र-दृष्ट्या "सदा" ["सर्वैकान्य (५, ३, १५)"—इति दा-प्रत्ययः, "सर्वस्य सोऽन्यतरस्यान्दि (५, ३, ६)"—इति सर्व-शब्दस्य स-भावः व्यत्ययेनाद्युदात्तत्वम्]. सर्वदेत्यर्थः "पश्यन्ति"। तत्र दृष्टान्तः—"दिवि इव" ["ऊङि दम्य (६, १, १७१)"—इत्यादिना विभक्तेरुदात्तत्वम्, इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वञ्च (२, ४, ७१वा०)"—इति, तदेव शिष्यते] आकाशे यथा "आततम्" [तनोतेः कर्मणि क्तः, "यस्य विभाषा (७, २, १५)"—इति इट्-प्रतिषेधः, "अनु-

* ऋ० वे० १, २, ७, २ = य० वे० ६, ५।

द्वात्तोपदेश (६, ४, ३७)"—इत्यादिना न-लोपः, तदुत्तरपद-प्रकृतिस्वरत्वे (६, २, १३९) प्राप्ते "गतिरनन्तरः (६, २,४९)" —इति गतेरुदात्तत्वम्] सर्व्वतः प्रसृतं चक्षुर्विरोधाभावेन विशदं पश्यति तद्वत् ॥ ४ ॥

अथ पञ्चमी।

१र २र ३ १ २ ३ २ ३ १ २
तद्विप्रासोविपन्युवोजागृवाꣳसःसमिन्धते।

२ ३ १ २ ३ २ ३ १
विष्णोर्य्यत्परमम्पदम्॥ ५ * ॥

पूर्व्वोक्तं "विष्णोः" "यत्" "परमं पदम्" अस्ति, "तत्" पदं विप्रासः ["आज्जसेरसुक् (७, १, ५०) } मेधाविनः "समिन्धते" सम्यग् दीपयन्ति। कीदृशाः? "विपन्यवः" [स्तुत्यर्थस्य-पनेर्बाहुलक औणादिको युप्रत्ययः, तत्र प्रत्ययस्वरः (३, १, ३)] विशेषेण स्तोतारः "जागृवांसः" [जागृ निद्राक्षये (अदा० प०), लिटः क्वसुः, क्रादि-नियमात् प्राप्तस्येटो "वस्वेकाजाद् घसाम् (७, २, ६७)"—इति नियमान्निवृत्तिः] शब्दार्थयोः प्रमाद-राहित्येन जागरूका इत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १ २ ३ २ ३ १ १ ३ २
अतोदेवाअवन्तुनोयतोविष्णुर्व्विचक्रमे।

३ २उ ३ १ २
पृथिव्याअधिसानवि॥ ६ † ॥ ५

* ऋ० वे० १, १, ७, ६ = य० वे० २४, ४४।

† ऋ० वे० १, २, ७, १।

"विष्णुः" परमेश्वरः पृथिव्याः यस्मात् भूप्र-देशात् "अधिसानवि" समुच्छ्रिते अधिके देशे स्वर्गादि-लोके "विचक्रमे" विविधं पाद-क्रमणं कृतवान् विशेषेण वर्त्तते यस्मात् पृथिवी-देशात् "नः" अस्मान् "देवाः" विष्णुमुखाः "अवन्तु" पापाच्छत्रो वाँ रचन्तु इत्यर्थः ॥ ६ ॥ ५

॥ मार्गीयवोत्तरम् ॥ इदंविष्णाऔहोहायि। वायि चक्रा२३४मायि। त्रेधाना२३४यिहायि। दधेपा ३ ४। औहोवा। इहा२३४हायि। उडुवा२३४दाम्। समूढम्। आस्यपा ७ ह३४। औहोवा। इहा२३४हायि। औहो३१ २३४। हायि। एहियाइ हा ॥(१) त्रीणिपदाऔहोहा यि। वायिचक्रा२३४मायि। विष्णुर्गो२३४हा। पाअदा भा३४। औहोवा। इहा२३४हायि। उडुवा२३४याः। अतोध। मीणिधारा३४। औहोवा। इहा२३४हायि। औहो३१२३४। यान्। एहियाइ हा ॥(२) विष्णोःक र्म्माऔहोहायि। णायिपश्या२३४ता। यतोव्रा२३४हा।

१र  २  ३र ४र ५  १ २  ५  २ ३
तानिपस्या३४। औहोवा। इहा२३४चायि। उऊवा२
५  २ १ २  १ ७ २  ३र ४र ५  १ २
३४हायि। इन्द्रस्य। यज्ञियःसा३४। औहोवा। इहा
५  ३र २  ५र  ५ ४
२३४चायि। औहो३१२३४। वा। एचियाईहा। हो
५ई। डा(३)॥ ७ *॥ [१] ५

अथ मोषुत्वेति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१  ३र ३ १ २ ३२उ ३ १र २र
मोषुत्वावाघतश्चनारेअस्मन्निरीरमन्।
३ १ २  ३ १ २ ३ १ २ ३ २ ३ १र २र
आरात्ताद्वासधमादन्नआगहीहवासन्नुपश्रुधि॥१†॥

हे इन्द्र! "त्वा" त्वां "वाघतश्च न" ऋत्विजोऽप्येते "अस्मद्" अस्मत्तः "आरे" दूरे "मा निरीरमन्" न नितरां रमयन्तु। अतस्त्वम् "आरात्ताद्वा" दूरेऽपि वर्त्तमानः "नः" अस्मदीयं "सधमाद" यज्ञम् "आ गहि" आगच्छ "इह वा" अत्रापि वा "सन्" विद्यमानः "उप श्रुधि" अस्मदीयं स्तोत्रम् उपशृणु॥ १॥

---

* ऊ० गा० १४प्र० १ख० ७गा०।

† छ० आ० ३, ९, ५, २ (१भा० ५८१पृ०) = ऋ० वे० ५, ३, १०, १।

अथ द्वितीया।

२ १र २र ३ १ २ ३२उ ३ १ ३२उ ३ १ २
इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते।
२ ३ १ २ ३ १ २ ३ २ ३ १ ३२उ ३ १ २
इन्द्रे कामञ्जरितारो वसूयवो रथे न पादमादधुः॥ २ * ॥ ६

हे इन्द्र! "ते" त्वदर्थं "सुते" अभिषुते सोमे "ब्रह्मकृतः" स्तोत्रकृतः† ऋत्विजः "मधौ न" मधुनीव "मक्षः" मक्षिकाः "सचा" सह "आसते" उपविशन्ति। अथ परोक्षस्तुतिः— "वसूयवः" धनकामाः "जरितारः" स्तोतारः "कामम्" इष्टम् "इन्द्रे" "रथे न पादं" रथे पादमिव "आ दधुः" समर्पयन्तीत्यर्थः॥ २॥ ६

अथास्तावीति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३१ २ ३ १र २र
अस्तावि मन्म पूर्व्यम्ब्रह्मेन्द्राय वोचत।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
पूर्व्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत॥ १ ¶॥

---

* ऋ० सं० ५, ७, १७, २।

† 'ब्रह्मकृतः—अन्नस्य कर्त्तारः। अथवा ब्रह्म-त्रैविद्यलक्षणं, तस्य कर्त्तारः'—इति वि०।

‡ 'यथा रथवाहिनः पुरुषाः रथस्य पादं चक्रमक्षे आदधुः, अथवा सुयुक्ते रथे आत्मीयं पादं कुर्व्वन् रथमारोहति'—इति वि०।

¶ ऋ० ०६, ४, ३१, ४।

स "इन्द्रः" "अस्तावि" अस्मदीयैः स्तोत्रैः ऋत्विग्भिर्वा स्तूयते "इन्द्राय" "पूर्व्यम्" अनादित्वात् पूर्वस्मिन् भवं "मन्म" मननीयं "ब्रह्म" स्तोत्रं वेदं वा "वोचत"। हे ऋत्विजः! यूयं पठत* किञ्च "पूर्वीः" पूर्वकालीनाः "ऋतस्य" यज्ञस्य सम्बन्धिन्यः "बृहतीः" बृहतीच्छन्दका बृहत्सामानि वा "अनूषत" स्तुवत पठतेत्यर्थः। "स्तोतुः" मम "मेधाः" एवंविधाः प्रज्ञाविशेषाः "असृचत" ऋत्विग्भिः विसृज्यताम् [यद्वा, ईश्वरेण]॥१॥

अथ द्वितीया।

२उ ३१२ ३१२ २ २३ २उ ३१२
समिन्द्रोरायोबृहतीरधूनुत†सङ्क्षोणीसमुसूर्य्यम्।
२ ३ २ ३ १ २ ३ १ २ २र ३ २ ३१२
सꣳशुक्रासःशुचयःसङ्गवाशिरःसोमाइन्द्रममन्दिषुः॥२‡॥७

स "इन्द्रः" "बृहतीः" महान्ति "रायः" धनानि अन्नानि वा "समधूनुत" मां प्रापयत्वित्यर्थः [धूञ् कम्पने (क्र्या० उ०) धातूनामनेकार्थत्वात्]। किञ्च "क्षोणीः" भूमीः "सम्" अधूनुत मां सम्यक् प्रापयन्तु। अपिच "सूर्यम्" सूर्य-सदृशीं दीप्तिं "सम्" अधूनुत। "शुचयः" निर्मलाः "शुक्रासः" शुक्रवर्णाः इन्द्रं "सम् अमन्दिषुः" हर्षयन्ति। किञ्च "गवाशिरः" गोश्रयणाः सहिताः¶ इन्द्रं सममन्दिषु हृष्टवन्त इत्यर्थः॥२॥७

* 'पूर्व्यम्—अग्रे भवम्, मन्म—अन्नम्, इन्द्राय वोचत। अथवा'—इत्यादि वि०।

† "अधूनुत"—इति ऋ० पाठः।

‡ ऋ० वे० ६, ४, २१, ५।

¶ 'गवाशिरः—गो-क्षीरेण संयुक्ताः'—इति वि०।

१ २ १ २ १
॥ सन्तनि ॥ अस्ताहाउ। वायिमन्मपू३आउवा२३।
५ १ २ २ २ २ २ १२ २१ २ १२ २२ ३
वी२३४याम्। ब्रह्मेन्द्रायवोचतपूर्व्वोक्टतस्यबृहतीरनूषता
१ १ १ १ १२ १ १ २ २
२३४५। स्तोतुर्हाउ। मायिधाअसा३१उवा२३। च्चा
५ २२ १ २२ १२ २ १ २२ १२ २ २ १२ २२
२३४ता। स्तोतुर्म्मेधाअसृक्षतसमिन्द्रोरायोबृहतीरधूनु
३ १ १ १ १ १ २ १ २ १
ता२३४५। सङ्गोहाउ। णायिसमुद्र३आउवा २ ३।
५ १ २२ १२ २ २ १२ १ २ १२ २ १ २
वी२३४याम्॥(२) सङ्गोणीसमुद्र्यंसञ्शुक्रासःशुचयः
१ २ २ २ १ १ १ १ १२ २ १ २
सङ्गवाशिरा२३४५ः। सोमाहाउ। आयिन्द्रममा३१उ
५
वा२३। दे२३४षूः(३) ॥ १० * ॥ [१] ७

अथेन्द्रायसोमपातवेइति त्र्यृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ १ ३ १ २ १ ३ १२ २२
इन्द्रायसोमपातवेवृत्रघ्ने परिषिच्यसे।
१ २ ३ १ २ ३ १ २ ३ १ २
नरे चदक्षिणावतेवीरायसदनासदे ॥ १ † ॥

---

* ऊ० गा० १४प्र० २ख० १०गा०।

† पर्वत ५, २, १८, ३ ( ४भा० ३५१पृ० ) = ऋ० वे० ७, ४, २४, ४।

हे "सोम !" "वृत्रघ्ने" वृत्रस्य हन्त्रे इन्द्राय [षष्ठ्यर्थे चतुर्थी (२, ३, ६२वा०)] इन्द्रस्य "पातवे" पानार्थं* "परि षिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन तद्वते, "वीराय" वीर्य्य-युक्तायेन्द्रार्थं हवींषि दातुं "सदनासदे" यज्ञ-गृहे सीदते, "नरे" मनुष्याय† यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

तꣳ सखायः पुरूरुचं वयं यूयञ्च‡ सूरयः ।

३ २ ३ १ २ ३ ० ३ १ २

अश्याम वाजगन्ध्यꣳ सनेम वाजपस्त्यम् ॥ २ ¶ ॥

हे "सखायः" स्तोतारः "सूरयः" प्रज्ञावन्तः "यूयं वयञ्च" यजमानाः "पुरूरुचं" बहु-दीप्तिं "वाजगन्ध्यं" बल-कर-साधु-गन्धोपेतं तत्र भवं सोमम् "अश्याम" अश्नीम पिबेम। किञ्च "वाजपस्त्यम्"§ अन्न-युक्त-गृह-सहितम्" [यद्वा, बलकरं सोमं "सनेम" सम्भजेमहि सोमेन बलान्न-गृहादीनि भवन्तीत्यर्थः ॥२॥

---

* विवरण-मते तु 'सोमपातवे'—इति समास-निष्पन्नमेकं पदं मत एवोक्तम् 'सोमपातवे—सोम-पानार्थम्' - इति ।

† विवरण-मते नरे इत्यपि इन्द्रायेत्यस्य विशेषणम् तत एवाह—'नरे—नराकाराय'—इति ।

‡ "पुरोरुचं यूयं वयञ्च"—इति ऋ० पाठः ।

¶ ऋ० वे० ७, ४, १४, ४ ।

§ 'वाजपस्त्यम्—पान-संयुक्तं गृहम्' —इति वि० ।

अथ तृतीया ।

१ ३ १ १ ३ १र २र
परित्यꣳ हर्यतꣳ हरिम्० ॥ ३ * ॥ ८

—इतीयमृक् पूर्वमेव [ छ० आ० ६, २, १, ८ (२ भा० १६७ पृ०) = उ० आ० ५, २, १८, १ (२भा० २५०पृ०)] व्याख्याता ॥ ३ ॥ ८

॥ यज्ञायज्ञीये द्वे ॥ इन्द्राऽ५य । सो३मा३पातावायि । वा३र्भ्रंपा । रो३षायिच्या३सायि । नरे२च । दक्षा२३यिणा । ऊम्मायि । वा३तायि । वायिरायसद्ना२सदाउ ॥(१) दायिताम् । सखायःपुरूरुचंवयंयूयाम् । चा३हरा३याः । अग्या२म । वाजा२३गा । ऊम्मायि । धा३याम् । सानेमवाजपा२स्त्रियाउ ॥ (२) याम्पा । रित्यꣳहर्यतꣳहरिम्बभ्रुम्पुना । ती३वारे३णा । योदे२वान् । विश्वाꣳ२३आ । ऊम्मायि । पा३रायि । मादेनसचगा२च्छताउ(३) ॥ २१ † ॥ [१] ८

* छ० आ० ६, २, १, ८ ( १भा० १६७पृ० ) = उ० आ० ५, २, १८, १ ( २ भा० २५० पृ० ) = ऋ० वे० ७, ४, २४, १।

† ऊ० गा० १४प्र० २अ० २१गा०।

अथ कस्तमिन्द्रेति प्रगाथात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा ।

१र   २र
कस्तमिन्द्रत्वावसो० ॥ १ * ॥

—इत्यृचः प्रतीकम्, तस्यादितो व्याख्यानमन्यत्र द्रष्टव्यम् ॥१॥

अथ द्वितीया ।

२ १ २   ३ १ २   ३ १र २र   ३ १र २र
मघोनस्मवृत्रहत्येषुचोदयये ददतिप्रियावसु ।

२ ३ १ २   ३ २ ३ १ २   १ २
तवप्रणीतीहर्यश्वसूरिभिर्विश्वातरेमदुरिता ॥ २ † ॥ ९

हे इन्द्र ! "मघोनः" धनवतः "तव" त्वदर्थं "प्रिया" प्रियाणि "वसु" वसूनि हविर्लक्षणानि धनानि "ये" जनाः "ददति" प्रयच्छन्ति तान् जनान् "वृत्रहत्येषु" यज्ञेषु सङ्ग्रामेषु वा‡ "चोदय" प्रेरय । हे "हर्यश्व" हरि-नामकाश्ववन्निन्द्र ! तव "प्रणीती" प्रणीत्या प्रणयनेन¶ "सूरिभिः" स्तोतृभिः पुत्रादिभिः सार्द्धम् "विश्वा" विश्वानि "दुरिता" दुरितानि "तरेम" तीर्णा भवेम ॥ २ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशस्याध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

---

* छ० आ० ३, २, ४, ८ (१भा० ५७४पृ० )=ऋ० वे० ५, ३, १९, ३ ।

† ऋ० वे० ५, ३, १९, ४ ।

‡ 'वृत्रहत्येषु—शत्रुवधेषु'—इति वि० ।

¶ 'प्रणीती—प्रकर्षेण कर्मणां नेता'—इति वि० ।

अथ तृतीय-खण्डे —

एदुमधोरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ १
एदुमधोर्मदिन्तरꣳसिञ्चाध्वर्यो अन्धसः।
१ २३ ३१र २र ३ १ २
एवाहिवीरस्तवतेसदावृधः॥ १ *॥

हे "अध्वर्यो" अध्वरस्य नेतः! ऋत्विक्! "मधोः" मदकरस्य "अन्धसः" सोम-लक्षणस्यान्नस्य "मदिन्तरम्" अत्यर्थं मादयितृतमं सोमरसमेव "आ सिञ्च" इन्द्रार्थमाभिमुख्येन क्षर। "इत्" "उ" [—इत्यवधारणे]। "वीरः" "समर्थः सदावृधः" सर्वदा हविर्भिर्वर्द्धनीयः [यद्वा, सर्वदा स्व-बलस्य वर्द्धकः] अयम् "एव" इन्द्रः "स्तवते हि" स्तोतृ-शस्त्रादिभिः स्तूयते खलु। अतः कारणात् स्तुतायेन्द्राय सोमो दातव्य इति शेषः। तस्मादासिञ्चेति पूर्वेण सम्बन्धः॥ १॥ ।५।२

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
इन्द्रस्थातर्हरीणान्नकिष्टे पूर्व्यस्तुतिम्।
१ २ ३ १ २ ३ २ ३ १ २
उदानꣳशशवसानभन्दना॥ २ †॥

---

* ऋ० आ० ४, २, ५, ५ (१भा० ७६२पृ०)=ऋ० वे० ६, २, १८, १।
† ऋ० वे० ६, २, १८, २।

हे "हरीणां स्थातः" हरि-नामकानामश्वानामधिष्ठातः ! [यद्वा, हरि-नामकैरश्वैः प्रापयितः ! ] "इन्द्र ! " "ते" त्वदीयां "पूर्व्यस्तुतिं" पूर्व्यैश्चिरन्तनैर्ऋषिभिः कृतां स्तुतिम् [उपलक्षणम्] इदानीन्तनैः क्रियमाणामपि स्तुतिं "न किः" न कश्चित् "शवसा" बलेन "उदानंश" सम्यग् व्याप्नोति [अशू व्याप्तौ ( स्वा० आ० ) अस्मात् लिटि "अश्नोतेश्च (७, ४, ७२)"—इति नुट्, छान्दसो द्वितीयो नुड़ागमः] कश्चिन्नातिक्रामतीत्यर्थः । किञ्च "भन्दना" सर्वैः प्रार्थनीयत्वात् पूजनीयेन धनेन स्तुत्या वा* त्वदीयां स्तुतिं न कश्चिदतिक्रामति, त्वत्तो बलवान् धनी स्तुत्यो वा अन्यो नास्तीत्यर्थः ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ ३ १ २   ३ १ २
तंवोवाजानाम्पतिमहूमहिश्रवस्यवः ।

१ २   ३ १ २ ३ १ २
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ ३ † ॥ १०

"अप्रायुभिः" कर्म्मसु अप्रमाद्यद्भिर्मनुष्ययुक्तैः अथवा अप्रमत्ता एकत्र स्थित्वैव कर्म्म कुर्वन्ति कर्म प्रारभ्य नान्यं देशं गच्छन्तीत्यर्थः‡ । एवंविध-मनुष्य-युक्तैः "यज्ञेभिः" यज्ञैः एतादृश-मनुष्यैर्यज्ञैश्च "वावृधेन्यम्" वर्द्धनीयं "वाजानाम्" अन्नानां "पतिं" स्वामिनं "वः" यष्टृ-यष्टव्य-सम्बन्धेन युष्मदीयं "तं" तादृशम्

* 'भन्दना—वीर्य्येण'—इति वि० ।

† ऋ० वे० ६, २, १८, १ ।

‡ 'अप्रायुभिः—अप्रयुक्त-पूर्वैभिः'—इति वि० ।

इन्द्रम् "अवस्यवः" वयमन्नकामाः सन्तः "अह्नमहि" आह्वयामः [ह्वयतेर्लुङि बहुलञ्छन्दसि (६, १, ३४)—इति सम्प्रसारणम् ॥ ३ ॥ १०

३ ४ १ ४ १
॥ वामदेव्यम् ॥ एऽ५दु । मधोः३ म्मा ३ दिन्तराम् ।
१ र र र२र १ १ र
म । सायि । चाध्वर्य्योअन्धसएवाहि । वा । औ३हो
२ १ २ ३ र २ १ १
हायि रस्ता२३वतायि । सदौहो३ । ऊम्मा २ । वाऽ२
२ ३ र ४ २ ४र ५
र्हौ३५हायि ॥(१) आऽ५यिन्द्र । स्याता३र्हा३रीणाम् ।
१ र र २र १ २ र २ १
ना । किष्टेपूर्व्यस्तुतिमुदा । ना । औ३होहायि । श्र
२ ३ र २ १ १ २
श्रा२३वसा । नभौहो३ । ऊम्मा २ । दाऽ२नौ ३ ५ हा
३ ० र ४ २ ४ ५ १ र
यि ॥(२) ताऽ५वः । वाजा३ना३म्पतायिम् । आ । हुम
र २र १ र २ १
हिश्रवस्यवोप्रायु । भायिः । औ२३होहायि । यज्ञा२३
२ ३ र २ १ १ २
यिभिर्वा । वृधौहो३ । ऊम्मा २ । न्याऽ२मो ५ हा
यि(३) ॥ ६ * ॥ [१] १०

---

* ऊ० गा० १३प्र० २भा० ६सा० ।

अथ तङ्गूर्धयेति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ २क २र ३१ २३१२३१२
तङ्गूर्धयास्वर्णरन्देवासोदेवमरतिन्दधन्विरे ।
३ २३१२
देवत्राँहव्यमूहिषे ॥ १ * ॥

हे स्तोतः! "तं" प्रसिद्धमग्निं "गूर्धय" स्तुहि [गूर्धयतिः स्तुतिकर्मा (निघ० ३,१४,५) कीदृशम्? "स्वर्णरं" सर्वस्य नेतारं [सर्वैर्यजमानैः नेतव्यं वा, अथवा स्वर्गं प्रति हविषां नेतारं] "देवासः" दीव्यन्ति स्तुवन्तीति देवा ऋत्विजः "देवं" दानादि-गुण-युक्तम् "अरतिम्" अर्यं स्वामिनं [यद्वा, अभि प्राप्तव्यं द्रव्यं] "दधन्विरे" [धन्वन्ति गच्छन्ति स्तुत्यादिभिः प्राप्नुवन्ति, धवि गत्यर्थः (भ्वा० प०) ] अथ प्रत्यक्षस्तुतिः—"देवत्रा" देवेषु मध्ये [यद्वा, "देव-मनुष्य (५,३,१०वा०)"—इत्यादिना द्वितीयार्थे त्रा-प्रत्ययः देवानित्यर्थः ] "हव्यं" पुरोडाशादि-लक्षणं हविः "आ" आभिमुख्येन "ऊहिषे" हे अग्ने! अभितो वा प्रापयसि [ वहे लिटि यजादित्वात् सम्प्रसारणम् ]।

"ऊहिषे"—"ऊहिरे"—इति पाठौ ॥ १ ॥

---

* छ० आ० २, १, २, ९ (१भा० १९७पृ०) = ऋ० वे० ६, १, २९, १ ।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
३ १र २र ३ २ ३ १ २ ३ १ २ ३ १
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२*॥११

ऋषिरात्मानं सम्बोध्य प्रेरयति— हे "विप्र" मेधाविन्! "सोभरे" एतत्संज्ञक! ऋषे! "अध्वराय" यागार्थम् "ईम्" अग्निं "प्रेडिष्व" प्रकर्षेण स्तुहि। कीदृशम्? "विभूतरातिं" व्याप्तधनं प्रभूतदानं वा, "चित्रशोचिषं" चायनीय-तेजस्कं विचित्र-दीप्तिकं वा "सोमस्य" सोम-साध्यस्य "अस्य मेधस्य" "यन्तुरं" नियन्तारं† "पूर्व्यं" चिरन्तनमिति ॥ २ ॥ ११

॥ सौभरम् ॥ तङ्गूर्द्धा३या५स्सुवर्णरोवा। देवासो देवमरा२तायिन्दधार३। हो। न्वा२३४यिरायि। देवत्राह। व्यमूइहा ३। हा२यिषा २ ३ ४ औहोवा ॥(१) देवा३त्रा३हव्यमूहिषोवा। विभूतरतिविप्रा२चायित्र शो२३। हो। चा२३४यिषाम्। अग्निमीडि। ष्वया३

* ऋ० वे० ६, १, २८, २।

† 'यन्तुर'—गमन-शीलम —इति वि०।

२ १ ३ ५र र ५ ४ २ ५
हाइयि। तूररा२३४औहोवा॥(२) अग्नाइयिमाइयिडि

५ ४ ५ १ र र १ ० १ २
घयन्तुरोवा। अस्यमेधस्यसोमा२यास्यमोर२३। हो। भा

५ १र र ५ २ १ २ ५र
२३४रायि। प्रेमध्वरा। यप२हा३। वरि२या२३४औ

र २ १ १ १ १
होवा। ऊ२३४५(३)॥ १८*॥ [१] ११

अथासोमस्वानइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १र २र ३ १र २र ३ १ २
आसोमस्वानोअद्रिभिस्तिरोवाराण्यव्यया।

२ ३ १ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदध्रिषे॥१‡॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमाणः त्वम् "अव्यया" अविमयानि "वाराणि" वालानि दशापवित्राणि "तिरः" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ" पवस इति शेषः। "हरिः" हरित-वर्णः स सोमः "चम्वोः" अधिषवण-फलकयोः "विशत्" प्रविशति। तत्र दृष्टान्तः—"जनो न" यथा जनः

* ऊ० गा० १६प्र० १ख० १८गा०।

† 'ईम्—इति पदपूरणः'—इति वि०।

‡ ऋ० भा० ६, १, ३, २ (१भा० ८४पृ०)=ऋ० वे० ७, ५, १३, ५।

"पुरि" पुरे प्रविशति स त्वञ्च तेषु काष्ठ-निर्मितेषु पात्रेषु वसतीवरीषु वा "सदः" स्थानं "दधिषे" करोषि।

"दधिषे"—"दधिषः"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३क २र ३ २उ ३ १ २ ३ २

समामृजे तिरो अण्वानि मेष्यो मीढ्वान्त्सप्तिर्न वाजयुः।

३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २

अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः*॥२†॥१२

"वाजयुः" अन्न-कामः "अण्वानि" अणूनि सूक्ष्माणि "मेष्यः" मेष्याणि अवेः रोमाणि छिद्राणि "तिरः" कुर्वन् "सः" सोमः "मामृजे" परिशोध्यते अलङ्क्रियते वा। तत्र दृष्टान्तः—"मीढ्वान्" सेचन-समर्थः "सप्तिः न" अश्व इव, अश्वो यथा सङ्ग्रामेऽलङ्क्रियते तद्वत्। कीदृशः? "अनुमाद्यः" अनुमोदनीयः सर्वैः "पवमानः" मनीषिभिर्ऋत्विग्भिः पूयमानः, तथा "ऋक्वभि" ["छन्दसि वनिपौ (५, २, १२२ वा०)"—इति वनिप्] स्तुतिमद्भिर्विप्रैर्मेधाविभिः अभिष्टुतः मृज्यते॥ २॥ १२

अथ वयमेनमिदाह्यइति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

२ १ २ ३ १र २र ३ २ ३ १ २

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्।

१ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ २

तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते॥ १‡॥

---

* "ऋक्वभिः"--इति मु० पाठः। † ऋ० वे० ७, ५, १४, १।

‡ छ० आ० ३, २, ३, १० (१भा० ५६०पृ०) = ऋ० वे० ६, ४, ४८ (२१), १।

"इयं" यजमानाः "एनम्" इन्द्रं "वज्रिणं" "इदा" इदानीं "ह्यः" अतीतेऽह्नि "इह" अत्र अहर्गणे "अपीपेम" आप्याययाम सोमेन "तस्मात्" तस्मै एव "अद्य" अत्र सवने सङ्ग्रामार्थं [सुपां सुलुगित्यादिना शे-आदेशः] "सुतम्" अभिषुतं सोमं "भर" आहर "नूनम्" इदानीं "श्रुते" स्तोत्रे श्रुते सति "आ भूषत" आभवतु अध्वर्य्यादीनागच्छतु ॥ १ ॥

अथ द्वितीया।

१ २ २१ २ १ २ ३ २ ३ १ २

वृकश्चिदस्यवारणउरामथिरावयुनेषुभूषति।

२उ २ १ २ ३ १उ ३ २ ३ २ ३ १ २ ३ २

सेमन्नस्तोमञ्जुजुषाणआगहीन्द्रप्रचित्रयाधिया ॥२*॥१३

"वृकश्चित्" स्तेनोऽपि† "वारणः" वारयिता सर्वस्य‡ सन्नपि "उरामथिः" शत्रूणां मार्गे गच्छतां मथिता¶ सन्नपि "अस्य" इन्द्रस्य "वयुनेषु" मार्गेषु प्रज्ञानेषु वा§ "आ भूषति" आनुकूल्यमेव भजते [अतीव हिंस्रोऽपीन्द्रस्यानुकूलो भवतीत्यर्थः। यद्वा, अस्येति कर्मणि षष्ठी (२, १, ८५) अमुमिन्द्रम् तत्तद्रूपः क्रूरेषु वयुनेषु स्तोत्रेष्वाभूषति]। हे इन्द्र! स त्वमिमं "नः" अस्मदीयं सोमं स्तोत्रं च "जुजुषाणः" प्रीयमाणः सेवमानः

* ऋ० वे० ६, ४, ४८ (११), २।

† 'चित्—इति पदपूरणः। वृकः—मांसाशी आरण्य-नियामी'—इति वि०।

‡ 'वारणो हस्ती'—इति वि०।

¶ 'उरणाध्वरं करोति—उरामथिः'—इति वि०।

§ 'वयुनेषु—जन्मसु'—इति वि०।

सन् "चित्रया" चायनीयया नानाविध-फलरूपया "धिया" युक्तः सन् "प्रागहि" आगच्छ ॥ २ ॥ १३

॥ वासिष्ठम् ॥ वयमेनमिदा । ह्वियाओ२३वा । इ याद्दायि । ऊवेहो २यि । अपीपेमे ‍ह्वावज्रिणा २म् । त स्माउवद्यसवनायि । द्वतभ्मारा २ । ई३या । आनूना २३४म्म । षताअ२३४५ताइ५इयि ॥(१) आनूनभूषत । अताओ२३४वा । इयाद्दायि । ऊवेहो २यि । आनून भूषताअ१ता २यि । ह्वकश्चिदस्यवारणः । उरामा१थी २: । ई३या । आवयू२३४ना । षुभूषा२३४५ताइ५इ यि ॥(२) आवयुनेषुभू । षताओ२३४वा । इयाद्दायि । ऊवहो २यि । आवयुनेषुभूषा१ता २यि । सेमन्नस्तोमञ्जु षा । पाआगा१द्दो २ । ई३या । इन्द्रप्रा२३४चायि । चयाधा२३४५याइ५इ । अवा३सा२३४५यि.१) ॥ ५ ॥[१'१३

* ऊ० गा० ११प्र० २अ० ४खा० ।

अथेन्द्राग्नीरोचनेति तृचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ १उ ३ १ २

इन्द्राग्नीरोचनादिवःपरिवाजेषुभूषथः ।

१ २ ३ २ ३क २र

तद्वाञ्चेतिप्रवीर्य्यम् ॥ १ * ॥

हे "इन्द्राग्नी !" "दिवः रोचना" स्वर्गस्य रोचकौ युवां "वाजेषु" सङ्ग्रामेषु "परि भूषथः" परितः सर्वतः अलङ्कृतौ भवथः। शत्रून् पराजित्य सर्वतो विजयमानौ वर्त्तेथे । "वां" युवयोः "वीर्य" सामर्थ्यमेव "तत्" तादृशं सङ्ग्राम-विजयं "प्रचेति" प्रकर्षेण ज्ञापयति [यद्वा, युवां "वाजेषु" सङ्ग्रामेषु भूषथः शत्रून् परिभवथः। शेषं पूर्ववत् ॥ १ ॥

अथ

१ २ ३ १ २र १ २

इन्द्राग्नीअपसस्परि० ॥ २ † ॥

—इति द्वितीया,

अथ

१ २ ३ १ २

इन्द्राग्नीतविषाणिवां० ॥ ३ ‡ ॥ १४

—इति तृतीया । तयोर्ऋचोः प्रतीके । तयोर्व्याख्यानमन्यत्र द्रष्टव्यम् ॥ २, ३ ॥ १४५

* ऋ० वे० ३, १, १२, ५ ।

† अत्रैव ०, ३, २, ३ ( ५भा० ९४पृ० ) = ऋ० वे० ३, १, १२, ४ ।

‡ अत्रैव ०, ३, २, ४ ( ५भा० ९४पृ० )= ऋ० वे० ३, १, १२, ३ ।

अथ कद्वेदेति द्वचात्मकं षष्ठं सूक्तम्,

तत्र प्रथमाया:—

१ २　　३ १र २र
कद्वेदसुतेसचा० ॥ १ * ॥

—इति ऋचः प्रतीकम्। तस्यादितो व्याख्यान मन्यत्र द्रष्टव्यम् ॥ १ ॥

अथ द्वितीया ।

३ २　३ १र　२र ३ १　२ ३ २　३ १ २
दानामृगोनवारणःपुरुत्राचरथन्दधे ।
१ २ ३　१ २ ३ २　३ १ २　३ १　२ ३ १ २
नकिष्ट्वानियमदासुतेगमोमहांश्चरस्योजसा ॥ २ † ॥

"मृगः" शत्रूणामन्वेषकः "वारणः" गजः "दाना" मद-जालानीव‡ "पुरुत्रा" बहुषु यज्ञेषु च "रथं" चरण-शीलं "मदं" "दधे" इन्द्रो धारयति । अथ प्रत्यक्षस्तुतिः—हे इन्द्र! "त्वा" त्वां "न किः" नियमत" न कश्चिन्नियच्छति "सुते" अभि-षुते सोमे "आ गम" आगच्छ । "महान्" पूज्यः "नः" त्वम् "ओजसा" बलेन सर्वतश्चरसि गच्छसि ॥ २ ॥

---

* ऋ० आ० ४, १, १, ५ (१भा० ६०१पृ० )=ऋ० वे० ६, ३, ८, ३ ।

† ऋ० वे० ६, ३, ८, ३ ।

‡ 'दानामृगोनवारणः—* * * मदस्रावी वारणः * * * यथा वारणः अनि-वार्य्य एवं त्वम्'—इति वि० ।

अथ तृतीया।

२ ३ १र २ ३ १र २र ३ १ २
यउग्रःसन्ननिष्टृतःस्थिरोरणायसꣳस्कृतः।
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
यदिस्तोतुर्मघवाशृणवद्धवन्नेन्द्रोयोषत्यागमत्॥३*॥१५

"यः" "उग्रः" उद्गीर्णबलः ओजस्वी वा "सन्" भवन् "अनिष्टृतः" शत्रुभिरविस्तीर्णः "स्थिरः" चलः "रणाय" युद्धाय "संस्कृतः"† शस्त्रैरलङ्कृतः सोमैर्वा संस्कृतः सः "इन्द्रः" "मघवान्" धनवान् "यदि" "स्तोतुः"‡ "हवम्" आह्वानं "शृणवन्" शृणोति तर्ह्यन्यत्र "न योषति" न गच्छति किन्तु "आ गमत्" तत्रैवागच्छति॥ ३ ॥ १५

२ र र १ २ १
॥वार्त्रम्॥ कईवेदा। सुतायिसा१चा२। पिब
२ १ र २
न्तंवद्वायो१दाधा२यि। अयंयःपुरोविभिनत्ता ओ१जा
१र २ १ ३ ५र र ३
सा२। मन्दाना२३ःशी३। प्रा२या२३४औहोवा। धा
५ २र र १ २ १
धा२३४साः॥(१) दानाम्हगः। नवारा१णा२ः। पुरु
र २ १ र र २
त्राचरथान्दा१धा२यि। नकिष्टानियमदासुतायिगा१मा

* ऋ० वे० ६, ३, ८, ५।

† 'संस्कृतः—संरब्धः'—इति वि०।

‡ 'स्तोतुः—उद्गातुः'—इति वि०।

१र २ १ ३ ५र र ३
२ः। मह्वा३स्वा२रा३। सा२ओ२३४औहोवा। जा२
५ २ १ २ १ र
३४सा॥(२) यउग्रःसन्। अनाविष्टा१स्ता२ः। स्थिरो
र २ १ र र २
रणायसा३स्का१स्ता२ः। यदिस्तोतुर्मघवा३शृणवाद्धा१वा
र १ २ १ ३ ५र र ३
२म्। नेन्द्रोयो२३षा३। त्या२आ२३४औहोवा। गा
५
२३४मात्(३)॥ २० *॥ [१]

५ र २ ४ ५र ४ ५ १
॥ आष्कारणिधनम्॥ कई ँवे३दसुऽतेसचा। पायि
२ १ २ १ २ १ २र
बन्तङ्कत्। वयो२३दधाउ। वा३२। अययःपू। रो
३ २ १ २ १र ५ १ २ १ २
विभिना। तियोजा२३४सा। मा२३न्दा। नःशिप्रि।
१ ५ र २ ४र ५र ४ ५ १
यन्वा२३४५त्वा६५६ः॥(१) दानामा३र्गोनवारणा। पूरु
२र १ २ १ २ १ २ ३
त्राच। रथा२३न्दधाउ। वा३२। नकिष्टुवा। निय
२ १ २ १र ५ १ २ १ २ १र
मदा। सुतेगा२३४माः। मा२३हान्। चरसि। ओ
५ २ ४ ५ ४ ५ १
जा२३४५सा६५६॥(२) यउग्रा३ःसन्ननिष्टृताः। स्थायि

* ऊ० गा० १६प्र० २ख० २०सा०।

२३ १ २ १ २३ १
रोरणा। यसा२३४स्कृताउ। वा३२। यदिस्तोतूः।
२ १ २ ३ १ २ १ ५ १ ० २ १२ २
मघवाशा। णवद्दा२३४वाम्। ने२३द्रो। योषति।
१२ २ ११११
आगा२३४५मा६५६त्। आ२३४५ष्(३) ॥ ८ * ॥ [२] १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशस्याध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थ-खण्डे—

पवमाना असृक्षतेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमाना असृक्षतसोमाः शुक्रासइन्दवः।
३ १२ २२ ३ १ २
अभिविश्वानिकाव्या ॥ १ † ॥

"शुक्रासः" उज्वलाः‡ "इन्दवः" दीप्ताः "पवमानाः" पूयमानाः सोमाः "विश्वा" विश्वानि "काव्या" काव्यानि स्तोत्राणि "असृक्षत" ऋत्विग्भिरभितः सृज्यन्ते ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० ८सा०।

† ऋ० वे० ७, १, ३४, ५।

‡ 'शुक्रासः;—तृतीय-सवने सोमाः शुक्रा भवन्ति'—इति वि०।

अथ द्वितीया ।

१ २ ३ २उ ३ १ २
पवमानादिवस्पर्य्यन्तरिक्षादसृक्षत ।
३ २उ ३ १ २
पृथिव्या अधिसानवि ॥ २ * ॥

"पवमानाः" पूयमानाः सोमाः "दिवः" द्युलोकादन्तरिक्षाच्च "पृथिव्याः" भूम्याः "अधि सानवि" समुच्छ्रिते देशे देवयजने "पर्य्यसृक्षत" सृज्यन्ते† ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ १ २ १ २ ३ १ २
पवमानास आशवःशुभ्रा असृग्रमिन्दवः ।
२ ३ २ ३ १ ३ १ २
घ्नन्तोविश्वा अपद्विषः ॥ ३ ‡ ॥ १६

"आशवः" शीघ्राः "शुभ्राः" शोभनाः "पवमानासः" पवमानाः "इन्दवः" दीप्ताः सोमाः "विश्वाः" सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अप घ्नन्तः" मारयन्तः "असृग्रम्" सृज्यन्ते ॥ ३ ॥ १६

---

* ऋ० वे० ७, १, ३५, १ ।

† 'दिवस्परि—'दिवः' द्युलोकस्य उपरि अन्तरिक्षात् 'असृक्षत'। 'पृथिव्या अधि' अध्युपरिभावेन चरत 'सानवि' पर्वत-सानवि गिरि-मस्तके'—इति वि० ।

‡ ऋ० वे० ७, १, ३५, २ ।

अथ तोशाहत्रहणेति त्र्यचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ १ २   ३ २ ३ १ २
तोशावृत्रहणाहुवे सजित्वानापराजिता ।

३ १ २ ३ १ २
इन्द्राग्नीवाजसातमा ॥ १ * ॥

"तोशा"† शत्रूणां बाधकौ "वृत्रहणा" वृत्रस्य पापस्य हन्तारौ "सजित्वाना" जेतारौ परस्परापेक्षया जयशीलौ "अपराजिता" केनाप्यतिरस्कृतौ "वाजसातमा" अन्नस्य अतिशयेन दातारौ "इन्द्राग्नी" युवां "हुवे" इह कर्मणि सोमपानार्थमहमाह्वयामि ॥ १ ॥

अथ

१ २   ३ १ २
प्रवामर्चन्त्युक्थिनः० ॥ २ ‡ ॥

—इति द्वितीया,

अथ

१ २   ३ १र   २र
इन्द्राग्नीनवतिम्पुरः० ॥ ३ ¶ ॥ १७

—इति तृतीया, इत्येतायोः प्रतीके । तयोरादितो व्याख्यानमन्यत्रापि द्रष्टव्यम् ॥ २ । ३ ॥ १७

* ऋ० वे० ३, १, ११, ४ ।

† 'तोशा—तुशौ हिंस्रौ'—इति वि० ।

‡ अत्रैव ७, ३, १, १ (४भा० ९३पृ० )=ऋ० वे० ३, १, ११, ५ ।

¶ अत्रैव ७, ३, २, २ ( ४भा० ९३पृ० )=ऋ० वे० ३, १, ११, ६ ।

अथोपत्वारण्वसन्दृशमिति द्व्यात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१२ ३ १२ ३१२
उपत्वारण्वसन्दृशम्प्रयस्वन्तःसहस्कृत।
१२ ३२३१२
अग्नेसस्सृज्महेगिरः ॥ १ * ॥

हे "सहस्कृत" सहसा बलेनोत्पन्न! "प्रयस्वन्तः"† हविर्लक्षणान्नवन्तो वयं "रण्व-सन्दृशं" रमणीयं सन्दर्शनम् स्तोतव्यं सन्दर्शनं वा "त्वा" त्वाम् "उप" प्रति "गिरः" स्तुतीः "सस्सृज्महे" विसृजाम उच्चारयामइत्यर्थः ॥ १ ॥

अथ द्वितीया।

१२३ १२३२३१२३१२ ३२
उपच्छायामिवघृणेरगन्मशर्मतेवयम्।
२३ १२
अग्नेहिरण्यसन्दृशः ॥ २ ‡ ॥

हे "अग्ने!" "हिरण्यसन्दृशः" हिरण्यवद्रमणीय-तेजसः हिरण्यवद्रोचमान- तेजसो वा "घृणेः" दीप्तस्य "ते" तव "शर्म" शरणम् आश्रयणं सुखं वा "उप अगन्म" उपगच्छामः। तत्र दृष्टान्तः—"छायामिव" यथा सुसन्तप्तश्छायामुपागच्छन्ति तद्वत् ॥ २ ॥

---

* ऋ० वे० ४, ५, २८, २।

† 'प्रयस्वतः—प्रकर्षेण स्वतः संस्कृत बलस्य कर्त्तः'—इति वि०।

‡ ऋ० वे० ४, ५, ९८, १।

अथ तृतीया ।

२ ३ १ २　３ २ ३ १ २ ३०१र　२र
यउग्रइवशर्य्यहातिग्मशृङ्गोनवꣳसगः ।
२ ३ १ २ ३ १ २
अग्नेपुरोरुरोजिथ ॥ ३ * ॥ १८

"यः" अग्निः "उग्रइव" उद्गूर्ण-बलः "धन्वीव" "शर्य्यहा" शर्य्यैर्बलैः शत्रूणां हन्ता† "तिग्मशृङ्गो न वंसगः" तीक्ष्णशृङ्गो वननीय-गतिर्वृषभइव‡ । हे अग्ने ! स त्वं "पुरः" आसुरीस्तिस्रः पुरीः "रुरोजिथ" भग्नवानसि [“रुद्रो वा एषः यदग्निः”—इति श्रुतेः, रुद्र-कृतमपि त्रिपुर-दहनमग्नि-कृतमेवेत्यग्निः स्तूयते । यद्वा, त्रिपुर-दहन-साधन-भूते बाणे अग्नेरनीकत्वेनावस्थानादग्निः पुराणि भग्नवानित्युच्यते । “देवासुरा वा एषु लोकेषु समयजन्त”—इत्यादिकं ब्राह्मणमत्रानुसन्धेयम् ॥ ३ ॥ १८

अथ ऋतावानंवैश्वानरमिति तृचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा ।

३ १ २　३२१२३ १ २३१ २
ऋतावानंवैश्वानरमृतस्यज्योतिषस्पतिम् ।
१२ ३१ ०
अजस्रङ्घर्ममीमहे ॥ १ ¶ ॥

---

* ऋ० वे० ४, ५, २८, ४ ।

† 'शर्य्यहा—महत्वाः'—इति वि० ।

‡ 'तिग्मशृङ्गः—तीक्ष्णशृङ्गः, न वंसगः—न सङ्घातगामी'—इति वि० ।

¶ नास्यमेषोपलभ्यते ।

हे अग्ने! "ऋतावानं" यज्ञवन्तं सत्यवन्तम् ऋतस्य सत्यस्य यज्ञस्य सत्यस्य वा सम्बन्धिनं* "वैश्वानरं" विश्वेषां नराणां हितकारिणं "ज्योतिषस्पतिं" ज्योतिषः तेजसः पतिं पालकम् "अजस्रम्" अनादित्वादविच्छिन्नं "घर्म्मं" दीप्तं वैश्वानराख्यं त्वाम् "ईमहे" अभीष्टं याचामहे ॥ १ ॥

अथ द्वितीया।

२ १ १ २ ३ २ ३ २ ३क २र ३ २
यइदम्प्रतिपप्रथेयज्ञस्यस्वरुत्तिरन्।
३ २ १ २र ३ १
ऋतूनुत्सृजतेवशी ॥ २ † ॥

"यः" अग्निः "इदं" जगत् "यज्ञस्य" अनुष्ठीयमानस्य यागस्य "स्वः" सर्वं विघ्नम् "उत्तिरन्" उत्तारयन् [यद्वा, "स्वः" स्वर्ग-फल-सम्बन्धि महाफलम् "उत्तिरन्" प्रयच्छन्] "प्रति पप्रथे" सर्वत्र प्रख्यातो भवति "वशी" परमात्मतया जगद् वशीकर्त्ता सोऽग्निः "ऋतून्" वसन्तादीन् "उत्सृजते" अनुष्ठानार्थं सम्यक् सृजति [तेषु स्वयमाधीयमानः सन् तदङ्गतया वसन्तान् उत्तमान् कुरुत इत्यभिप्रायः] ॥ २ ॥

---

* 'ऋतावानं—ऋतं वै विद्यालक्षणं यस्य तेन स्तुत्यं अथवा ऋतमन्नं तस्य दातारं' —इति वि०।

† नेयमप्यन्यत्र क्वचिद् दृश्यते।

अथ तृतीया।

१ २ ३ १ ३ १ २ ३ १ २ ३ २ ३ १ २
अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य।
३ २उ ३ १ २
सम्राडेको विराजति॥ ३ *॥ १९

"भूतस्य" अतीत-कालीनस्य भूत-जातस्य "भव्यस्य" आगामिनः भविष्यत्कालीनस्य जगतः "कामः" काम्यमानस्तत् तैः पुरुषैः "सम्राट्" "एकः" अद्वितीयत्वेन "प्रियेषु" आहवनीयादिषु "धामसु" स्थानेषु [यद्वा, त्रिषु पृथिव्यादि-लोकेषु "विराजति" विशेषेण दीप्यते†॥ ३॥ १९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टादशस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ १८॥

॥ इति द्वितीयोऽर्द्धप्रपाठकः‡॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे अष्टादशोऽध्यायः समाप्तः॥ १८॥

---

* य० वे० १२, ११६।

† 'एकः सर्वदेवानां प्रधानभूतः विराजति विविधं राजति दीप्यते'—इति वि०।

‡ 'अष्टमस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० पदादि-मूल-ग्रन्थानां सम्मतश्च।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १८ ॥

॥ अथैकोनविंशोऽध्याय आरभ्यते* ॥

तत्र,

प्रथमे खण्डे —

अग्निःप्रत्नेनेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३ १ २ ३ १ २ ३ २ २
अग्निःप्रत्नेनजन्मना†शुम्भानस्तन्वा३ऽ२३‡स्वाम् ।
३ १र २र
कविर्विप्रेणवावृधे ॥ १ ¶ ॥

"कविः" क्रान्त-कर्मा "अग्निः" "प्रत्नेन" पुराणेन "जन्मना" जननीयेन स्तोत्रेण "स्वां" स्वकीयां "तन्वं" तनुमङ्गं "शुम्भानः" शुम्भयन् "विप्रेण" मेधाविना स्तोत्रा "वावृधे" प्रवृद्धो भवति ॥१॥

---

* 'इदानीं सप्तार्चि'—इति वि० ।

† "मन्मना"—इति ऋ०-पाठः ।

‡ "मन्व१"—इति ऋ०-पाठः ।

¶ ऋ० वे० ९, ३, ३८, २ ।

अथ द्वितीया।

२ १र २र३१ २३१ २.३१ ३
ऊर्ज्जोनपातमाहुवेग्निम्पावकशोचिषम्।
२ २ ३ १ २ ३ २
अस्मिन्यज्ञेस्वध्वरे॥२*॥

"ऊर्जः" अन्नस्य "नपातं" पुत्रं† "पावक-शोचिषं" शोधक-दीप्तिमग्निं "स्वध्वरे" असुरैरत्यन्तमहिंस्येऽस्मिन् यज्ञे "आ हुवे" आह्वयामि॥२॥

अथ तृतीया।

१ २ ३१र २र३ १२ ३ १ २
सनोमित्रमहस्त्वमग्नेशुक्रेणशोचिषा।
२ १र २र ३ १ २
देवैरासत्सिबर्हिषि॥३‡॥१

हे "मित्रमहः" मित्राणां पूजनीयाग्ने¶! "सः" त्वं "शुक्रेण" ज्वालावता "शोचिषा" तेजसा "देवैः" सह "बर्हिषि" "आसत्सि" आसीद॥३॥१

* ऋ॰ वे॰ ६, ३, ३८, २।

† 'ऊर्जोनपातम्—अन्नानां पातारं रक्षयितारम्'—इति वि॰।

‡ ऋ॰ वे॰ ६, ३, ६८, ४।

¶ 'मित्रमहः—मित्राणां महिमानकर,'—इति वि॰।

अथोत्ते शुष्मास इति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ १ १ २ ३ १ २ ३ १ १
उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः।
३ २ ३ १ २ ३ १ २
नुदस्व याः परिस्पृधः ॥ १ * ॥

हे "अद्रिवः" ग्राववन् सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "रक्षः" राक्षसान् "भन्दन्तः" विदारयन्तः "उदस्थुः" उत्तिष्ठन्ति। "याः" "स्पृधः" स्पर्धमानाः शत्रुसेना अस्मान् प्रतिबाधन्ते तास्त्वं "नुदस्व" प्रेरय बाधस्वेत्यर्थः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १र २र ३ १र २र ३ २
अया निजघ्निरोजसा रथसङ्गे धने हिते।
२ ३ १ २ ३ २
स्तवा अबिभ्युषा हृदा ॥ २ † ॥

हे सोम! त्वम् "अया" अनेन स्तुतेन "ओजसा" बलेन "निजघ्निः" शत्रून् हन्तुं शीलवान्। तं त्वाम् "अबिभ्युषा" "अभीतेन" "हृदा" मनसा युक्तोऽहं "रथ-सङ्गे" अस्माकं रथानां सङ्गे "हिते" शत्रुषु निहिते धने च निमित्ते "स्तवै" स्तौमि ॥ २ ॥

---

* ऋ० वे० ७, १, १०, १।

† ऋ० वे० ७, १, १०, २।

अथ तृतीया।

१ १ ३ २  ३ २उ  ३ १ २  १क २र
अस्यव्रतानिनाधृषेपवमानस्यदूढ्या।
३ १र  २र  ३ १ २
रुजयस्त्वापृतन्यति ॥ ३ * ॥

हे सोम! "पवमानस्य" चरतः यस्य "अस्य" तव "व्रतानि" कर्माणि "दूढ्या" दुर्बुद्धिना राक्षसेन "नाधृषे" आधर्षयितुमशक्यानि स "त्वा" त्वां "यः" दुर्बुद्धिः शत्रुः "पृतन्यति" योद्धुमिच्छति तं "रुज" बाधस्व ॥ ३ ॥

अथ चतुर्थी।

१ २  ३ २ ३  १ २ ३ १ २ ३ १ २
तꣳहिन्वन्तिमदच्युतꣳहरिन्नदीषुवाजिनम्।
२ ३ १ २  ३ १
इन्दुमिन्द्रायमत्सरम् ॥ ४ † ॥ २

"मदच्युतं" मदस्य च्यावयितारं "हरिं" हरितवर्णं "वाजिनं" बलिनं "मत्सरं" मदकरं "तम्" "इन्दुं" सोमं "नदीषु" "इन्द्राय" इन्द्रार्थं "हिन्वन्ति" ऋत्विजः प्रेरयन्ति ॥ ४ ॥ २

---

* ऋ० वे० ७, १, १० ३।

† ऋ० वे० ७, १, १०, ४।

अथामन्द्रैरिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ १ २ ३ १ २ ३ २ ३ १ २
आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।
२ ३ १ ३ १२ ३ २३ ३ २३ ३ १ २ ३ १ २
मात्वाकेचिन्नियेमुरिन्नपाशिनोतिधन्वेवताँ इहि॥ १ *॥

विश्वामित्रो यज्ञार्थमिन्द्रमाह्वयति— हे "इन्द्र!" "मन्द्रैः" मादयितृभिः मयूर-रोमभिः मयूर-रोम-सदृश रोम-युक्तैः "हरिभिः" एतन्नामकैरश्वैरुपेतस्त्वम् "आ याहि" यज्ञं प्रत्यागच्छ। "केचित्" अपि जनाः "त्वा" त्वाम् "मा नियेमुः" मा नियच्छन्तु गमन-प्रतिबन्धं मा कुर्वन्त्वित्यभिप्रायः। प्रतिबन्धे दृष्टान्तः— "पाशिनो न" पाश-हस्ता व्याधा यथा पक्षिणं नियच्छन्ति तद्वत् त्वां मा नियच्छन्त्वेव। किञ्च "धन्वेव" यथा पान्थाः धन्व मरुदेशं शीघ्रमतिगच्छन्ति, तद्वदागमन-प्रतिकारिणः "तान्" अतीत्य शीघ्रमागच्छ॥ १॥

अथ द्वितीया।

३ १ २ ३ २ २ १ ३ १ ३ २ ३ २
वृत्रखादोवलँ रुजः पुरान्दर्मोअपामजः।
१ १ १२ ३ १ २ ३ १२ २ ३ १ १ १ ३ २
स्थातारथस्यहर्योरभिस्वरइन्द्रोदृढाचिदारुजः॥ २ †॥

---

* ऋ० आ० ३, २, १, ४ (१भा० ५०८पृ०) = ऋ० वे० ३, ३, ८, १।

† ऋ० वे० ३, ३, ८, २।

सोऽयमिन्द्रः "वृत्रखादः" [खादृ भक्षणे ( भ्वा० प० ),—इत्यस्मात् "कर्मण्यण् ( ३, २, १ ) कृदुत्तरपदप्रकृतिस्वरः ( ३, २, १३९ ), वृत्रं खादति छिनत्तीति वृत्रखादः] "वलंरुजः" [रुजो भङ्गे ( तु० प० ), कर्मण्युपपदे मूलविभुजादित्वात् क-प्रत्ययः "तत्पुरुषे कृति बहुलम् ( ६, ३, १४ )"—इति द्वितीयाया अलुक्, थाथादिस्वरः (६, २, १४४) आद्युदात्तत्वाकारमिति] वलो मेघः तस्य भञ्जकः* ततः "अपामजः" अज गतिक्षेपणयोः ( भ्वा० प० )—इत्यस्मात् पचाद्यच् ( ३, १, १३४ ), चित्स्वरः (६, १, १६३)] मेघ-भेदन-द्वारा अपां प्रेरकः "पुरां" शत्रु-सम्बन्धिनां "दर्मः" दारकः, [ तथा विष्णुः त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगत् क्रान्त्वा तिष्ठतीति मन्त्रवर्णः] तथा "हर्योः" अश्वयोः "अभिस्वरे" अस्मदाभिमुख्येन प्रेरणे निमित्तभूते सति "रथस्य स्थाता" रथमधिष्ठाता, तथा "दृढ़ाचित्" दृढ़ानामतिबलवतां शत्रूणामपि "आ रुजः" [रुजो भङ्गे ( तु० प० )—इत्यस्मादिगुपध-लक्षणः कः ( ३, १, १३५ )] आ समन्तात् भञ्जको भवति ॥ २ ॥

अथ तृतीया ।

२ १ २२ १ २ ३ १ २ ३ १ २

गम्भीराꣳउदधीꣳरिवक्रतुम्पुष्यसिगाइव ।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २

प्रसुगोपायवसन्धेनवोयथाह्रदङ्कुल्याइवाशत ॥ ३ † ॥ ३

---

* 'वलरुजः—वलोनाम दानवः तस्य भङ्क्ता'—इति वि० ।

† ऋ० वे० ९, ३, ९, २ ।

हे इन्द्र! त्वं "गभीरान्" महावकाशान् "उदधीन्" समु-द्रान् उदकैः यथा पोषयसि तद्वत् "क्रतु" यज्ञस्य कर्त्तारम् अमुं यजमानमभिमत-फल-प्रदानेन "पुष्यसि" पोषयसि। तत्र दृष्टान्तः यथा—"सुगोपाः" समीचीनो गोपालः "यवसेन" "गाः" पोषयति तद्वत्, यथा "धेनवः" "यवसं" तृणादिकम् प्राप्नुवन्ति तद्वत् सोमान् प्राप्नोति, ते च सोमाः "कुल्याः" कृत्रिम-सरितः "ह्रदं" महाजलाशयं यथा प्राप्नुवन्ति तद्वत् "आशत" व्याप्नुवन्ति ॥३॥ ३

२र १ २ १ २
॥ अभिनिधनङ्काणवम्॥ औहोहोहायि। आयिही।

१ २ ३ ५ २ ३ ५ १
आमा। ट्रै२३३रायि। द्राहारा२३४यिभायिः। या

३ ५ २र १र २र १ ३
हीमा२३४यू। रारोमभायिः। ऐहोयि। आ२३४यि

५ १ ३ ५ २ ३ ५
ही। मात्वाका२३४यिचीत्। नायियेम् २ ३ ४ रीत्।

२ १र २र १ ३ ५ २ ३
नापाशिनाः। ऐहोयि। आ२३४यिही। आतीधा२३

५ ३ २ ४ २र १ २
४न्वे। वता३ऽआ५यिहा६ ५ ईयि ॥(१) औहोहोहा

१ २ १ २ ३ ५ १ ३
यि। आयिही। वार्त्री। खा २ ३ ४ दो। बालऽह्न

५ २ ३ ५ २र १र १र
२ ३ ४ जाः। पूरान्दा २ ३ ४ र्माः। आपामजाः। ऐ

१ ३ ५ २ ३ ५ १
होयि। आ २ ३ ४ यिही। स्थातारा २ ३ ४ था। स्था

२　५　२र १　२र १　२
हारी २ ३ ४ योः । आभिस्वरायि । ऐहोयि । आ२३
५　२　२　५　२ २ ४
४यिही । आयिन्द्रोदा२३४र्ढा । चिदा३ह्व५जा६५६: ॥(२)
२र १　१　१　२　१ २　२　५
औहोहोहायि । आयिहो । गाभ्मो । रा५२३४ज ।
२　२　५　२　३　५　२र १र
दाधी५रा२३४यिवा । क्रातुम्पू२३४ष्या । सोगाइवा ।
२र १र　२　५　२　३　५　२　२
ऐहोयि । आ२३४यिहो । प्रासूगो२३४पाः । यावासा
५　१र १र　२र १र　२　५　२
२३४न्धे । नावोयथा । ऐहोयि । आ२३४यिहो । हा
२　५　२ २　४　२
दङ्क २ ३ ४ ल्याः । इवा ३ भा ५ ता ६ ५ ६ । आ २ ३
५
४ भौ(३) ॥ १७ * ॥ [१] ३

अथ यथागौरोऽपाकृतमिति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ २ ३ २उ १ १र २र
यथागौरोऽअपाकृतन्तृष्यन्नेत्यवेरिणम् ।
२ १ २ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
आपित्वनःप्रपित्वितूयमागहिकण्वेषुसुसंचापिब ॥ १ † ॥

---

* ऊ॰ गा॰ १८प्र॰ २ख॰ १७भा० ।

† ब॰ श्वा॰ ३, १, १, १० ( १ भा॰ ५२१पृ॰ ) = ऋ॰ वे॰ ५, ७, ३० २ ।

"गौरः" गौरमृगः "तृष्यन्" पिपासन् "अपा" अद्भिरुदकैः [व्यत्ययेनैकवचनम् ( ३, १, ८५ ) "उडिदम् ( ६, १, १७१ )"— इत्यादिना विभक्तेरुदात्तत्वं कृतम्] "इरिणं" निस्तृणं तटाक-देशं "यथा" येन प्रकारेण "अवैति" अवगच्छति [अव-शब्दोऽभि-शब्द-स्यार्थे] अभिमुखः सन् शीघ्रं गच्छति । तथा "आपित्वे" बन्धुत्वे "प्रपित्वे" प्राप्ते सति हे इन्द्र ! त्वं "नः" अस्मान् "तूयं" [क्षिप्रनामैतत् (निघ० २, १५, ११ )] शीघ्रम् "आ गहि" आगच्छ । आगत्य च "कण्वेषु" कण्व-पुत्रेषु अस्मासु "सचा" सह एकयज्ञेनैव विद्यमानं सर्वं सोमं सुष्ठु "पिब" ॥ १ ॥

अथ द्वितीया ।

मन्दन्तुत्वामघवन्निन्द्रेन्दवोराधोदेयायसुन्वते ।
आमुष्यासोममपिबश्चमूसुतञ्ज्येष्ठन्तद्दधिषेसहः ॥ २ * ॥४

हे "मघवन्" धनवन्निन्द्र ! "इन्दवः" क्लेदनाः सोमाः त्वां "मन्दन्तु" हर्षयन्तु [ मन्देर्व्यत्ययेन परस्मैपदम् (३, १, ८५ ) ] किमर्थम् ? "सुन्वते" सोमाभिषवं कुर्वते यजमानाय "राधः देयाय" राधसः धनस्य दानार्थं† [ददातेः "अचो यत् ( ३, १, ९७)"—इति भावे यत्, "ईद्यति (६,४,६५)"—इतीकारः, "यतोऽनावः (६, १, २१३ )"—इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वर-

* ऋ० वे० ३, ३, ९, १ ।

† 'राधः—धनाय अन्नाय वा, देयाय दातव्याय च'—इति वि० ।

त्वम् (६,२,१३८)। अतुरनुमः (६,१,१७३)"—इति सुब्व्यत्ययात् परा विभक्तिरुदात्ता ]। अपिच त्वं "सोमम्" "आमुष्य" मोषणं कृत्वा* अदत्तमपि बलादाहृत्य "अपिबः" पीतवानसि ["स यज्ञ-वेशसं कृत्वा प्रासहा सोममपिबत्"—इति श्रुतेः]। कीदृशं सोमं? "चमू" चम्वोरधिषण-फलकयोः "सुतम्" अभिषुतम् [ यद्वा, चमूभ्यां चमसाभ्यां होतुर्मैत्रावरुणस्य च सम्बन्धिभ्यां संस्कृताभि-र्वसतीवरीभिः सुतमभिषुतम् ] यस्मादेवं तस्मात् कारणात् "ज्येष्ठ"† प्रशस्यतमं वृद्धतमं वा "सहः" बलं "दधिषे" हे इन्द्र! त्वं धारयसि अतो मदीया अपि सोमास्त्वां मादयन्त्विति प्रार्थ्यते ॥ २ ॥ ४

॥ मनाद्यम् ॥ यथागौ२३रो अपाकृताम्। तृष्यन्नेति यवेरा२३यिणाम्। आपित्वे नः प्रपित्वे तूयमागा२३ह्नी। कण्वे२षु स्व२३। सा२चा२३४औहोवा। पी२३४बा ॥(१)

कण्वेषू२३सुसचापिबा। कण्वेषु सुसचापा२३यिबा। मन्दन्तु त्वा मघवन्निन्द्रेन्दा२३वाः। राधोदे२३या३। या२ह्न२३४औहोवा। न्वा२३४ते ॥(२) राधोदे२३यायसुन्व

* 'आमुष्येति छान्दसं दीर्घत्वम् अमुष्य यजमानस्य'—इति वि०।

† मूलपुस्तके तु सर्वत्रैव "ज्येष्ठम्"—इति पाठः।

१२ २ २ २ ३ १ २ १२ २ २
तायि। राधोदेयायसुन्वा२३तायि। आमुष्यासोममपि

२ १२ २ १ २ १ ३
बश्चमूद्ध२३ताम्। ज्येष्ठन्ताता२३हा३। धा२यिषा२३४

५२२ ३ ५
औहोवा। सा२३४हाः(३) ॥ १८ * ॥ [१] ४

अथ त्वमङ्गप्रशंसिषइति प्रगाथात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा।

२ ३ १२ ३२ ३ १ २ ३ १ २
त्वमङ्गप्रशꣳसिषोदेवःशविष्ठमर्त्यम्।

२उ ३ १ २ ३ २ ३ १ २ ३ १ २
नत्वदन्योमघवन्नस्तिमर्डितेन्द्रब्रवीमितेवचः ॥ १ † ॥

[अङ्ग—इत्यभिमुखीकरणे] "अङ्ग" "शविष्ठ" बलवत्तमेन्द्र! "देवः" द्योतमानस्त्वं "मर्त्यं" नर-धर्माणं त्वां स्तुवन्तं पुरुषं "प्रशंसिषः" सम्यक् तेन स्तुतमिति प्रशंसा। हे "मघवन्" धनवन्! "इन्द्र!" "त्वदन्यः" कश्चित् "मर्डिता" सुखयिता नास्ति, अतः कारणात् "ते" तुभ्यम् "इदं स्तुतिलक्षणं "वचः" 'ब्रवीमि उच्चारयामि [शंसिषः—शंस स्तुतौ (भ्वा० प०), लेटि, सिप्यड़ागमः (३, ४, ९४) "सिब्बहुलं लेटि (३, १, ३४)"—इति विकरणे सिप्, तस्यार्द्धधातुकत्वादिड़ागमः (७, २, ३५)] ॥ १ ॥

---

* ऊ० गा० १८प्र० २खं० १८सा०।

† ऋ० आ० १, २, १, ५ (१भा० ५१०पृ०) = ऋ० वे० १, ९, ८, ४।

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३
मातेराधाꣳसिमातऊतयोवसो

१र २र ३ १ २
स्मान्कदाचनादभन् ।

१ २ ३ १ २ ३
विश्वाचनउपमिमीहिमानुष

१ २ ३ २ ३ २
वसूनिचर्षणिभ्यआ ॥ २ * ॥ ५

हे "वसो" वासयितरिन्द्र ! "ते" तव सम्बन्धीनि राधोत्येभि रिति "राधांसि" भूतानि† यस्मात् "कदाचन" कदाचिदपि "मा दभन्" मा विनाशयन्तु । तथा "ऊतयः" गन्तारः‡ [यद्वा, उतय इत्यत्र वर्ण-लोपः, धूतयः कम्पयितारः "ते" त्वदीया मारु-तश्च हे "मानुष" मनुष्य-हितेन्द्र ! "चर्षणिभ्यः" मन्त्र-द्रष्टेभ्यः¶ "नः" अस्मभ्यं "विश्वा" विश्वानि "वसूनि" धनानि च "आ उप मिमीहि" सर्वत आहृत्य अस्मत्समोपे कुरु, सर्वत्र वर्त्तमानं धनम् अस्मभ्यं प्रयच्छेत्यर्थः [ कदा—किं शब्दात् "सर्वकान्यकिंयत्तदः काले दा ( ५, ३, १५ )"—इति दा-प्रत्ययः, "किमः कः (७, २, १०३)"—इति कादेशः, व्यत्ययेनाद्युदात्तत्वम् (३, १, ८५)।

---

* ऋ० वे० १, ६, ८, ५ ।

† 'राधांसि अन्नानि'—इति वि० ।

‡ 'ऊतयः पालनानि'—इति वि० ।

¶ 'चर्षणिभ्यः—चलितयजमानेभ्यः'—इति वि० ।

दभन्—दम्भु दम्भे, लोडर्थे छान्दसे लङि "बहुलञ्छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, "न माङ्योगे ( ६, ४, ७४ )"—इत्यडभावः । मिमीहि—माङ् माने शब्दे च (अदा० प०) व्यत्ययेन परस्मैपदम् (३, १, ८५), "जुहोत्यादिभ्यः श्लुः (२, ४, ७५)", "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम्, ङित्त्वात् "घु-मा-स्था (६, ४, ६६)"—इतीत्वम् ॥ २ ॥ ५

॥ पौरुमीढम् ॥ तुवम । गप्रा३४औहोवा । प्राऽ सिषः । देवःशवि । ष्ठमर्त्ता२३याम् । नत्वदन्यो । मघवा२३ना । स्तिमर्डिता । इन्द्रब्रा२३वी । भितायिवा२३४५चा६५६ः ॥(१) इन्द्रब्र । वीमा३४औहोवा । तायिवचः । इन्द्रब्रवी । मितेवा२३चाः । मातेराधा । सिमाता२३ऊ । तयोत्वसाउ । अस्मान्का२३दा । चनादा२३४५भा६५६न् । अस्मान्क । दाचा३४औहोवा । नादभन् । अस्मान्कदा । चनादा२३भान् । विश्वापनाः । उपमा२३यिमायि । श्विम । नुषा । वहना२ऽयिचा ।

१ १२ १ १ १ १ १
षणायिभ्या २३४५ या ६५६। दत्वा ३ या २३४५
(३)॥ १८ *॥ [१]

२ २ २१
॥ त्रैककुभम्। त्वमङ्गप्रश ऌसा३यिषाः। देवःशवा
२ २ १ ३ ५ २ १ २ १२ २
यिष्ठा३मा। ऊम्। ता२३४याम्। नत्वदन्योमघवन्।
१ २ ३ २२ १ ३ १ १ २२ १
स्तायिम। डितेन्द्रा। ब्रा२३४वी। मायितेव। चा
३ ५२ २ २ २ २ २
२। या २३४ औहोवा॥(१) इन्द्रब्रवीमितेवा३चाः।
१ २ २ १ ३ ५ १२ २२ १२ २
इन्द्रब्रवीमो३तायि। ऊम्। वा२३४चाः। मातेराधा ऌ
२ १२ २ २ १ २ ३ २२ १ ३ ५ १ २२
सिमातऊ। तायः। वसोस्मान्। का२३४दा। चाना
१ ३ ५२ २ २ २ २
द। भा२। या२३४औहोवा॥(२) अस्मान्कदाचनादा
२ १ २ १ २ १ ३ ५
३भान्। अस्मान्कदाचा३ना। ऊम्। दा२३४भान्।
१ २ २ २ १ २२ ३ २ १ ३ ५
विश्वाचनउपमिमी। दाइमानुपवस्व। ना२३४यिचो।

---

* ऊ० गा० १८प्र० २ख० १९सा०।

१ २   १   ३   ५र र   ३   ५
षाणिभ्यः। आर२। या२३४औहोवा। ई२३४दाः(३)

॥ ५ * ॥ [२] ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकोनविंशस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीय-खण्डे —

प्रतिष्यासूनरीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
प्रतिष्यासूनरीजनीव्युच्छन्तीपरिस्वसुः।

३ १ २   ३ १
दिवोअदर्शिदुहिता ॥ १ † ॥

"स्या" सा प्रसूयमाना, "सूनरी" सुष्ठु प्राणिनां नेत्री, "जनी" जनयित्री फलानां, "स्वसुः" स्वसृ-स्थानीयाया रात्रेः "परि" उपरि भागे रात्रि-पर्यवसान-काले "व्युच्छन्ती" तमो विवासयन्ती‡ [स्वसा—स्वसे स्यात्रस्याइत्युक्तम्], "दिवः" द्योतमानस्यादित्यस्य "दुहिता", उषाः "अदर्शि" सर्वैः प्रतिदृश्यते ॥ १ ॥

---

* ऊ॰ गा॰ १८प्र॰ १ख॰ ५सा॰।

† ऋ॰ वे॰ ३, ८, ३, १।

‡ 'व्युच्छन्ती—दीप्तिं कुर्वन्ती'—इति वि॰।

अथ द्वितीया ।

१ २ २ १ २ ३ १र २र ३ १ २
अश्वेवचित्रारुषीमातागवामृतावरी ।

१ २ ३ १ २ ३ २
सखाभूद*श्विनोरुषा ॥ २ † ॥

"अश्वेव" "चित्रा" चायनीया "अरुषी" आरोचमाना "गवां" रश्मीनां "माता" निर्मात्री "ऋतावरी" यज्ञवपुः‡ "अश्विनोः" "सखा" समान-ख्याना सह स्तूयमाना "भूत्" भवति [ अश्विनोरुषसा सह स्तूयमानत्वात् सखित्वं परस्परम् ] ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ १ २ ३ २ ३ १र २र
उतसखास्यश्विनोरुतमातागवामसि ।

३ २ ३ १ २
उतोषोवस्वईशिषे ॥ ३ ¶ ॥ ६

"उत" अपिच "अश्विनोः" "सखा", "उत" अपिच "गवां" रश्मीनां "माता" निर्माता "असि", "उत" अपिच हे "उषः !" "वस्वः" धनस्य "ईशिषे" ईश्वरी भवसि ॥ ३ ॥ ६

---

* "अभूत्"—इति ऋ०-पाठः ।

† ऋ० वे० ३, ८, ३, २ ।

‡ 'ऋतावरी—हितकरी'—इति वि० ।

¶ ऋ० वे० ३, ८, ३, ३ ।

१ र १ २ १ र २१ १
॥ जराबोधीयम् ॥ प्रतिष्यासोवा। नारीजनायि। वि
१ १ १ २ ४५ ५
यूच्छार२३न्ती। परिस्वासः। दिवोआ१दा२३भी। द।
३ २ २र १ २ १
ह्वितो३४५ई। डा ॥(१) अश्वेवचोवा। आअरुषायि।
२र १ २ र १ २ ४५
मातागा२३वाम्। ऋतावारायि। सखाभू१दा२३श्वा
५र ३ २ २ १ २
यि। नोः। उषो३४५ई। डा ॥(२) उतसखोवा।
१ २ १ २ १ २ र १
साश्विनोः। उतामा२३ता। गवामासायि। उतो
२ ४५ ५र ३ १
षो१वा२३स्वाः। ई। शिषो३४५ई। डा(३) ॥ ३ * ॥ [१] ६

अथैषो उषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १र २र ३क २र ३ २ ३ २
एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः।
३ १ २ १ २
स्तुषेवामश्विनाबृहत् ॥ १ † ॥

"एषः" एषा अस्माभिः परिदृश्यमाना "प्रिया" सर्वेषां प्रीतिहेतुः "अपूर्व्या" पूर्वेषु मध्यरात्रिकालेषु विद्यमाना न भवति

---

* ऊ० गा० १९प्र० १ख० ३सा०।

† ऋ० सा० १, २, ४, ४ (१भा० ३९८४६) = ऋ० मे० १, ३, २२, १।

किञ्चिदानीन्तनी "उषाः" उषोदेवता "दिवः" द्यु-लोकस्य सकाशादागत्य "व्युच्छति" तमो वर्जयति। हे "अश्विना" अश्विनौ! "वां" युवां "महत्" प्रभूतं यथा भवति तथा "स्तुषे" स्तौमि ॥ १ ॥

अथ द्वितीया।

२ ३ १र २र ३ १ २ ३ २
यादस्रासिन्धुमातरामनोतरारयीणाम्।
३ २ ३ १ २३ १ २
धियादेवावसुविदा ॥ २ * ॥

"या देवा" यावुभावश्विनौ वक्ष्यमाण-गुण-युक्तौ तौ स्तुष इति पूर्वेणान्वयः। कीदृशौ? "दस्रा" दर्शनीयौ, "सिन्धुमातरा" समुद्रमातरौ† [ यद्यपि सूर्याचन्द्रमसावेव समुद्रजौ तथाप्यश्विनोः केषाञ्चिन्मते तद्रूपत्वात् तथात्वम् ], "रयीणां" धनानां "मनोतरा" मनसा तारयितारौ, "धिया" कर्मणा "वसुविदा" निवास-स्थानस्य लम्भयितारौ‡ [मनोतरा मनसा तरत इति मनोतरौ, तरतेरन्तर्भावित-ण्यर्थात् "ऋदोरप् (३, ३, ५७)"—इत्यप्, पूर्वपदान्तस्य सकारस्य रुत्वे सति छान्दसमुत्वम्। रयीणां—"नामन्यतरस्याम् ( ६, १, १७७ )"—इति नाम उदात्तत्वम्।

* ऋ० वे० १. ३, २२, २।

† 'सिन्धुमातरा—सिन्धुशब्देन उदकानि उच्यन्ते, उदकानां निर्मातृभूतौ,—इति वि०।

‡ "वसुविदौ—विदज्ञाने, विदलाभे, विद सत्तायां, विद्यमान-धनौ; अथवा धनलाभकरौ,—इति वि०।

धिया—"सावेकाच (६, १, १६८)"—इति विभक्तेरुदात्तत्वम्। वसुविदा—वसूनि निवास-स्थानानि विन्देते इति वसुविदौ "क्विप् च ( ३, २, ७६ )"—इति क्विप्॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३२ ३ १ २ ३ १ २
वच्यन्तेवाङ्ककुहासोजूर्णायामधिविष्टपि।

१ ३ २ ३ २ ३ १ २
यद्वा॑रथोविभिष्पतात्॥ ३ *॥ ७

हे अश्विनौ! "वां" युवयोः सम्बन्धी रथः "जूर्णायां" नाना-शास्त्रैः स्तुतायाम्† "अधिविष्टपि" स्वर्ग-लोके "यद्" यदा "विभिः" अश्वैः‡"पतात्" पतति गच्छति, तदानीं "वां" युवयोः "ककुहासः" स्तुतयः "वच्यन्ते" अस्माभिरुच्यन्ते [ब्रवीतेर्यक्, "ब्रुवो वचिः ( २, ४, ५३ )"—इति वचादेशः, "वचि-स्वपि ( ६, १, १५ )"—इत्यादिना सम्प्रसारणम्, "सम्प्रसारणाच्च (६, १, १०८)"—इत्यत्र छन्दसीत्यनुवृत्तेः¶ परपूर्वत्वस्य पाक्षिकत्वात् यणादेशः, प्रत्ययस्वरः। ककुहासः—'ककुभं शृङ्गे विदुः प्रधाने च'—इत्यभिधानात्; प्राधान्याभिधायिना ककुप्-शब्देन तत्-प्रतिपादका स्तुतयो लक्ष्यन्ते; हत्वं छान्दसम्, "आज्जसेर-

* ऋ० वे० १, ३, २३, ३।

† 'जूर्णायां—जीर्णायां पृथिव्याम्, अधि—उपरि, विष्टपि—स्थाने'—इति वि०।

‡ 'वि-इत्याकाश-नाम, आकाशात् पततीत्येवं वक्तव्ये तृतीया-बहुवचनं तत्तु छान्दसत्वाददोषो बहुलं छन्दसीति'—इति वि०।

¶ सा चानुवृत्तिः "वा छन्दसि (६, १, १०६)"—इत्यस्मात् बोध्यम्।

सुक् (७, १, ५)"—इत्यसुक्। जूर्णायाः—जूष् वयोहानौ (दि० प०), अत्र स्तुत्यर्थः, धातूनामनेकार्थत्वात्, निष्ठायां "श्युकः किति (६, २, ११)"—इति इट्-प्रतिषेधः, "बहुलञ्छन्दसि (७,१,१०३)"—इति उत्वम्, "रदाभ्यामिति (८,२,४२) निष्ठा-नत्वम्, प्रत्ययस्वरः (३, १, ३)। विभिः—वी गत्यादौ (अदा० प०) वियन्ति गच्छन्ति वयोऽश्वाः, औणादिको डि-प्रत्ययः। पतात्—पत्लृ गतौ (भ्वा० प०), लेठयडागमः, "इतश्च लोपः (३, ४, ७)"—इतीकार-लोपः॥ ३॥ ७

१र र १ १ १ र २ १ २ १
॥ जराबोधीयम्॥ एषोउषोवा। आपूविया। वियूच्छा

२ र १ २ ४५ ५र
२३ती। प्रियादायिवाः। स्तुषायिवा१मार२३स्वायि। ता।

५र १ १र र १ १ १ र २ १
बृहा३४५ई। डा॥(१) यादस्रासोवा। धूमातरा।

२ १ ३ १ २ ४५
मनोतार२३रा। रयायिणाम्। धियादा१यिवा २३ वा।

५ ३ १ २ र र १ १ १
सु। विदो३४५ई। डा॥(२) वध्यन्तेवा९ओवा। का

२र १ २र १ २ १
कुदासाः। जूर्णाया२३मा। धिविष्टापायि। यद्वा९

१ ४५ ५ ३ २
रा१थो२३वायि। भि। पतो३४५ई। डा(३)॥ ४ *॥ [१] ७

* ऊ० गा० १८प्र० १ख० ४सा०।

अथोषस्त्रिचमिति तृचं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ ३ १र २र ३ १ २

उषस्तच्चित्रमाभरास्मभ्यंवाजिनीवति।

१ २ ३ २ ३ १ २ ३ १ २

येनतोकञ्चतनयञ्चधामहे ॥ १ * ॥

हे "वाजिनीवति!" वाजो हविर्लक्षणमन्नं, तद्युक्ता वाजिनी, तया क्रियया युक्ते! "उषः" उषोदेवते! "अस्मभ्य" "चित्रं" चायनीयं "तत्" धनम् "आ भर" आहर प्रयच्छ। "येन" धनेन "तोकं" पुत्रं "तनयं" तत्पुत्रं "च" धामहे दध्महे धारयामः [अत्र निरुक्तम्—"उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यमन्नवती येन पुत्रांश्च पौत्रांश्च दधीमहि (निरु० दै० ६, ६)"—इति। धामहे—दधातेर्लटि "बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुक्, व्यत्ययेनाद्युदात्तत्वम्; यद्वा, लोटि "आडुत्तमस्य पिच्च (३, ४, ९२)"—इत्याडागमः प्रत्ययस्य पिद्वद्भावश्च, अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते; अस्मिन् पक्षे "एत ऐ (३,४,९३)"—इत्यैत्वाभावो व्यत्ययेन द्रष्टव्यः, "यद्वृत्तान्नित्यम् (८, १, ६६)"—इति निघात-प्रतिषेधः ॥ १ ॥

अथ द्वितीया।

१ २ ३ १र २र ३ १ २

उषोअद्येहगोमत्यश्वावतिविभावरि।

३ १ ३ १ २

रेवदस्मेव्युच्छसूनृतावति ॥ २ † ॥

---

* ऋ० वे० १, ६, २१, ४। † ऋ० वे० १, ६, २१, ५।

हे "गोमति" अस्मभ्यं दातव्य-गोभिर्युक्ते ! तथा "अश्वावति" अश्वैर्युक्ते ! "विभावरि" विशिष्ट-प्रकाशोपेते ! "सूनृतावति" प्रियसत्यात्मिका वाक् सूनृता, तादृश्या वाचा युक्ते ! एवम्भूते हे "उषः" उषोदेवते ! "अद्य" इदानीं प्रभात-समये "इह" अस्मिन् देशे "अस्मे" अस्माकं "रेवत्" [ "रयेर्मतौ बहुलम् (६, १, ३४ वा० )"—इति सम्प्रसारणम्, "छन्दसीरः (८, २, १५)" —इति मतुपो वत्वम्, "रै-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम् (६,१,१७६ वा०)"—इति मतुपउदात्तत्वम्] धन-युक्तं कर्म्म यथा भवति तथा "व्युच्छ" नैशं तमो निवारय [उच्छी विवासे (भ्वा० प०) विवासो वर्जनम् ॥ २ ॥

अथ तृतीया।

३ १र　　२र　　३ १ २　　३ २ ३ १　　२
युङ्क्ष्वा*हिवाजिनीवत्यश्वाꣳ अद्यारुणाꣳ उषः।

१ २　३ २ ३　१ २ ३ १ २
अथानोविश्वासौभगान्यावह ॥ ३ † ॥ ८

हे "वाजिनीवति" हविर्लक्षणान्नवति ! "उषः" उषो देवते ! "अरुणान्" अरुण-वर्णान् "अश्वान्" अश्व-स्थानीयान् गो-विशेषान् [ "दीर्घादटि समानपदे (८, ३, ९)"—इति संहितायां नकारस्य रुत्वम्, "आतोऽटि नित्यम् (८, ३, ३)"—इति सानुनासिक आकारः ] एवम्भूतान् "अद्य" अस्मिन् काले "युङ्क्ष्वा हि"

---

* "युक्ष्व"—इति ऋ०-पाठः।

† ऋ० वे० १, ६, २६, ४।

योजयैव [ स्थिरवधारणे] "अथ" अनन्तरं रथमारुह्य "विश्वा" सर्वाणि "सौभगानि" [ "सुभगान्मन्त्रे (५, १, १२८ वा० )"— इत्युद्गात्रादिषु पाठात् भाव-कर्मणोरर्थयो: "प्राणभृज्जातिवयो-वचनोद्गात्रादिभ्योऽञ् (५, १, १२९ )"—इत्यञ् प्रत्ययः, "हृद्भग सिन्ध्वन्ते पूर्वपदस्य च"—इत्युभय-पद-वृद्धौ प्राप्तायां सर्व-विधीनां छन्दसि वैकल्पिकत्वात् अत्रोत्तरपदस्य वृद्धिर्न भवतीत्युक्तम्, सौभगानि ] सर्वाणि सौभाग्यानि "नः" अस्मभ्यम् "आ वह" आनय ॥ ३ ॥ ८

॥ अध्यम् ॥ उषस्तच्चा२यिचम् । आभरोवा । अस्म भ्यंवा । जिनीवतायि । येनतोकञ्चतनयञ्च । धा२३ । मह्राउवा । ध्रुधिया२ ॥(१) उषोअद्ये२ह । गोमतो वा । अश्वावतायि । विभावरायि । रेवदस्मव्युच्छसून् । ता२३ । वताउवा । ध्रुधिया२ ॥(२) युङ्क्ष्वाहिवा२जि । नोवतोवा । अश्वाऽअद्या । रुणाऽउषाः । अथानो विश्वासौभगानि । आ२३ । वहाउवा । ध्रुधिया२(३) ॥ ५* ॥ [१] ८

* ऊ० गा० १९प्र० १ख० ५षा० ।

अथाश्विनावर्त्तिरिति तृचं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ १र २र ३ १ २
अश्विनावर्त्तिरस्मदागोमद्दस्राहिरण्यवत् ।
३ १उ ३ १ २ ३ १ २
अर्वाग्रथꣳसमनसानियच्छतम् ॥ १ * ॥

[ उषसा साहचर्याद् बुद्धिस्थावश्विनाविदमादिकेन तृचेन स्तूयते] हे "अश्विना" अश्ववन्तौ व्यापनशीलौ वा देवौ ! "दस्रा" शत्रूणामुपक्षपयितारौ "अस्मत्" अस्माकं "वर्त्ति" वर्त्तन-हेतुभूतं गृहम् "आ" समन्तात् "गोमत्" बहुभिर्गोभिर्युक्तं "हिरण्मत्" हित-रमणीय-धन-युक्तं च यथा भवति तथा "समनसा" समान-मनस्कौ सन्तौ "युवां" युष्मदीयं "रथम्" "अर्वाक्" अर्वाचीनम् अस्मदभिमुखं "नियच्छतम्" आवर्त्तयतम् [ अस्मत्—"सुपां सु-लुक् (७, १, ३९ )"—इति षष्ठ्या लुक् ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ २ ३ १ २ ३ १र ३र
एहदेवामयोभुवादस्राहिरण्यवर्त्तनी ।
३ १ २ ३ १ २
उषर्बुधोवहन्तुसोमपीतये ॥ २ † ॥

---

* ऋ० वे० १, ९, २७, ३ ।

† ऋ० वे० १, ९, २७, १ ।

"उषर्बुधः" उषसि प्रबुद्धा अश्वाः "इह" अस्मिन् यागे "सोमपीतये" सोम-पानाय 'दस्रा" शत्रूणामुपक्षपयितारौ अश्विनौ "आ वहन्तु" आनयन्तु। कीदृशौ? "देवा" देवन-शीलौ दानादि-गुण-युक्तौ वा "मयोभुवा" मयसः आरोग्यस्य भावयितारौ ["अश्विनौ वै देवानां भिषजौ"—इति श्रुतेः] "हिरण्यवर्त्तनी" [ वर्त्ततेऽनेति व्युत्पत्त्या वर्त्तनि-शब्देन रथ उच्यते ] सुवर्णमयो वर्त्तनिर्ययोस्तौ [ देवा—इत्यादिषु त्रिषु "सुपां सु-लुक् ( ७, १, ३८ )"—इत्याकारः ॥ २ ॥

अथ तृतीया।

२ ३ २उ ३ २ ३ २उ ३ १ २ ३ १ २
याविस्थाश्लोकमादिवोज्योतिर्जनायचक्रथुः।

२ ३ १ २ ३ २
आनऊर्ज्जंवहतमश्विनायुवम् ॥ ३ * ॥ ९

हे अश्विनौ "यौ" युवां "दिवः" लोकात् "श्लोकम्" उपश्लोकनीयं प्रशंसनीयं "ज्योतिः" तेजः "इत्था" इत्थमस्माभिरनुभूयमानेन प्रकारेण "चक्रथुः" कृतवन्तौ [ केषाञ्चिन्मतेन सूर्याचन्द्रमसावश्विनावित्युच्येते। तदुक्तं यास्केन—"तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके (निरु० दै० ६, १, )"—इति। तथाच प्रकाशकत्वं तयोरुपपन्नं तौ "युवं" युवां "नः" अस्मभ्यम् "ऊर्जं" बल-प्रदमन्नम् "आ वह-

* ऋ० वे० १, ६, १७, २।

तम्" आनयतं प्रयच्छतम् [ स्तोत्र सङ्घाते ( भ्वा० आ० ), अयं स्तुत्यर्थोऽपि, कर्म्मणि घञ् ; ञित्त्वादाद्युदात्तत्वम् ( ६, १, १९७ ) ] ॥ ३ ॥ ९

१ २ १ २२
॥ अध्यम् ॥ अश्विनावा २र्त्तिः । अस्मदोवा । गो
१ २ १ २ ३ २ १' २ १२ १ १ २ २ १
मद्दस्रा । हिरण्यवात् । अर्वाग्रथ७समनसानि । या२
२ १२ १२ १ २
३ । च्छताउवा । प्रुठधिया २ ॥(१) एद्धदेवा २ । यो
१ २ १२ २ १ २ ३ २ १ २ १ २ २
भवोवा । दस्राहिरा । ण्यवर्त्तनायि । उषर्बुधोवद्दन्तु
२ १ २ १२ १२
सोम । पा२३यि । तयाउवा । प्रुठधिया २ ॥(२) या
२ २ १ २२ १ २ १ १ ३ २
विच्छास्तो २कम् । आदिवोवा । ज्योतिर्ज्जना । यचक्र
१ २ २ १२ २ १ २ १२
थूः । आनऊर्ज्जंवद्दतमश्वि । ना२३ । युवाउवा । प्रुठ
१ १ १
धिया २ । ए२३हियाइ४३ । ओ२३४५इ । डा(३)॥६*॥[१]९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकोनविंशस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

* ऊ० गा० १९प्र० १ख० ६मा० ।

अथ तृतीये खण्डे*—

अग्निन्तम्मन्य इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १र २र ३ १उ ३ २ ३ १र २र ३ १ २
अग्निन्तम्मन्येयोवसुरस्तंयंयन्तिधेनवः।
३ १ २ ३ २उ ३ १ २ ३ २ ३
अस्तमर्वन्तआशवोस्तन्नित्यासोवाजिन
१ २ ३ २ ३ १ २
इषꣳस्तोतृभ्यआभर॥ १ †॥

"तम्" अग्निं "मन्ये" स्तौमि, "यः" अग्निः "वसुः" वासकः, "यम्" "अस्तं" सर्वेषां गृहवदाश्रय-भूतत्वेन "धेनवः" गावः "यन्ति" गच्छन्ति प्रीणयितुम्, "अस्तम्" उक्त-लक्षणम् "अर्वन्तः" अरणवन्तः अश्वाः "आशवः" शीघ्र-गामिनः यन्ति, तथा "नित्यासः" नित्य-प्रवृत्तयो "वाजिनः" हविर्लक्षणान्नवन्तो यजमानाः यम् "अस्तं" यन्ति तम् मन्ये, "इषम्" अन्नं "स्तोतृभ्यः" अस्मभ्यम् "आ भर" हे अग्ने! आहर॥ १॥

अथ द्वितीया।

३ २उ ३ १ २ ३ १र २र ३ १ २
अग्निर्हिवाजिनंविशेददातिविश्वचर्षणिः।

---

* 'इषुमन्त्रिसामानि'—इति वि०।

† ऋ० आ० ५, १, ४, ७ (२ भा० ८६४ पृ०) = ऋ० सं० ३, ८, २२, १ = य० सं० १५, ४१।

३ १र ३ २ ३ १ २ ३ १ ३ १ २ ३ २ ३
अग्नीराये स्वाभुवᳪसुप्रीतोयातिवार्य्यं

१ २ ३ २ ३ १ २
मिषᳪस्तोतृभ्यआभर ॥ २ * ॥

"अग्निः हि" अयमग्निः खलु "विप्रे" यजमानाय "वाजिनम्" अन्नवन्तं पुत्रम् अश्वम् अन्नं वा "ददाति" प्रयच्छति, "विश्वचर्षणिः" [ विश्वे चर्षणयो मनुष्या रक्षणीया अर्चका वा यस्य स तथोक्तः। यद्वा, पश्यति-कर्मैतत् ] सर्वस्य द्रष्टाग्निः "राये"† धनार्थिने [अथवा द्वितीयार्थे चतुर्थी ( ३, १, ८५ ) धनम् ] "स्वाभुवं" सुष्ठु सर्वत्र व्याप्तम् "वार्यं" सर्वैर्वरणीयं प्रीतः सन् "याति" गमयति दातुं वा गच्छति। इषमित्यादि‡ पूर्ववत् ॥ २ ॥

अथ तृतीया।

२ १र २र ३ ३उ ३ १ २ ३ १ २
सो अग्निर्योवसुर्गृणेसंयमायन्तिधेनवः।

१र २र ३ २ ३ १ २ ३ १ २ ३ २ ३
समर्वन्तोरघुद्रुवःसᳪसुजातासःसूरय

१ २ ३ २ ३ १ २
इषᳪस्तोतृभ्यआभर ॥ ३ ¶ ॥ १०

* ऋ० वे० ३, ८, २२, १।

† 'अग्नीराये—अत्र रेफ-लोपे ढ्र लोप इति ( ६, ३, १११ ) दीर्घः नतु द्विवचनमग्नी'—इति वि०।

‡ 'इषं हविम्'—इति वि०।

¶ ऋ० वे० ३, ८, २१, ३=य० वे० १५, ४३।

"सः अग्निः" स खल्वग्निः "यः" "वसुः" वासकः "गृणे" स्तूयते "यं" "धेनवः" "समायन्ति" क्षीरार्थं प्रापयन्ति, "अर्वन्तः" अश्वाः "रघुद्रुवः" लघु-गमनाः* "सम्" आयन्ति, "सुजातासः" शोभन-प्रादुर्भूताः "सूरयः" मेधाविनः "सम्" आयन्ति । स खल्वग्निरिति शेषं पूर्ववत् ॥ ३ ॥ १०

अथ महेनोअद्येति तृचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
महेनोअद्यबोधयोषोरायेदिवित्मती ।
१ २ ३ १ २ ३ १ २ ३ १र
यथाचिन्नोअबोधयःसत्यश्रवसिवाय्ये
३र ३ १ १
सुजातेअश्वसूनृते ॥ १ † ॥

"अद्य" अस्मिन् यागदिने, हे "उषः" उषो देवि ! "दिवित्मती" दीप्तिमती त्वं "नः" अस्मान् "महे" महते "राये" धन-प्राप्तये "बोधय" प्रज्ञापय प्रकाशयेत्यर्थः [ सति हि प्रकाशे क्रतु-द्वारा द्रव्यस्यार्जयितुं शक्यत्वात् ] । "यथा चित्" यथैव पूर्व "नः" अस्मान् "अबोधयः" अतीतेषु दिनेषु यथा बोधितवती, तद्वदद्यापीत्यर्थः । हे "सुजाते" शोभन-प्रादुर्भूते ! "अश्वसूनृते"

---

* 'अथवा शीघ्रकर्मकारिणः'—इति वि० ।

† छ० आ० ४, १, ४, ३ (१भा० ८५८पृ०)—ऋ० वे० ४, ४, २१, १ ।

[अश्वार्था प्रिय-सत्यात्मिका वाग् यस्याः सा*] हे तादृशि देवि ! "वाय्ये" वय्य-पुत्रे "सत्यश्रवसि" मय्यनुगृहाणेत्यर्थः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र
यासुनीथेशौचद्रथेव्यौच्छोदुहितर्द्दिवः ।
१ २ ३ १ २ ३ १ २ ३ १र
साव्युच्छसहीयसिसत्यश्रवसिवाय्ये
२र ३ १ २
सुजातेअश्वसूनृते ॥ २ † ॥

हे "दिवः दुहितः" सूर्यस्य पुत्रि उषः !‡ "या" त्वं सुनीथे एतन्नामके "शौचद्रथे" शुचद्रथस्यापत्ये पूर्वं "व्यौच्छः" व्यवासयः तमांसि, "सा" त्वं "सहीयसि" अतिशयेन बलवति "वाय्ये" वय्य-पुत्रे "सत्यश्रवसि" मयि "व्युच्छ" तमो विवासय [उच्छी विवासे (भ्वा० प०) विवासो वर्जनम्¶]। शिष्टं समानम् ॥ २ ॥

* उदाहृतश्चैतन्मन्त्रद्वयम्महर्षि-पतञ्जलिना द्वितीयाह्निके, तथाहि—"ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारञ्चाधीयते। सुजाते अश्व सूनृते"—इत्यादिना आशङ्क्य, समाहितम्—"पारिषत्कृतिरेषा, तत्र भवतां नैवहि लोके न च वेदे अर्द्धएकारोऽर्द्ध ओकारो वास्तीति"। अत्र च नागेशः—'शाखविशेषाध्यायिनां समवायः परिषत् पर्षद्वा, तत्र भवा कृतिरित्यर्थः'—इति।

† ऋ० वे० ४, ४, ३१, १ ।

‡ 'दुहितर्दिवः—अर्कों दुहितृभूता उषाः'—इति वि० ।

¶ 'व्युच्छति दीप्तिं करोति'—इति वि० ।

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १र

सानोअद्याभरद्वसुर्व्युच्छादुहितर्दिवः।

२उ १ १ २ ३ १ २ ३ १र

योव्यौच्छःसहीयसिसत्यश्रवसिवाय्ये

२र ३ १ २

सुजातेअश्वसूनृते॥ ३ *॥ ११

हे "दुहितः! दिवः" "आभरद्वसु" आहृत-धना "सा" प्रसिद्धा त्वं "नः" अस्माकम् "अद्य" अस्मिन् दिने "व्युच्छ" तमो विवासय "सहीयसि!" "या उ" [उ-कारोऽनर्थकः] या त्वं पूर्वं "व्यौच्छः" "सा" अद्यापीति। शिष्टं समानम्॥ ३॥ ११

अथ प्रतिप्रियमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ १ १ २ ३ १ ३ १ २ ३ १ २

प्रतिप्रियतमꣳरथंवृषणंवसुवाहनम्।

३ १ २ ३ २ ३ १ २ ३ २ ३

स्तोतावामश्विनावृषिःस्तोमेभिर्भूषतिप्रति

२ ३ १ २ ३ १ २

माध्वीममश्रुतꣳहवम्॥ १ †॥

हे "अश्विनौ!" [एकः प्रति-शब्दोऽनुवादः] "वां" युवयोः "प्रियतमं" "रथं" "स्तोता" ऋषिः "स्तोमेभिः" स्तोमैः "प्रति

* ऋ० पे० ४, ४, ११, ३।

† ऋ० आ० ५, ६, ३, १० (२भा० ८५२पृ०)=ऋ० वे० ४, ४, १५, १।

भूषति" अलङ्करोति। कीदृशं रथं? "वृषणं" वर्षितारं फलानां, "वसुवाहनं" धनानां वाहकम् ईदृशं रथमागमनाय स्तौतीत्यर्थः। तथा "माध्वी" मधुविद्या-वेदितारौ "मम" "हवम्" आह्वानं "श्रुतं" शृणुतम् ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १र २र ३ १र २र
अत्यायातमश्विनातिरोविश्वा अहᳬसना।
१ २ १ २ ३ १ २ ३ १ २ १
दस्राहिरण्यवर्त्तनीसुषुम्णासिन्धुवाहसा
२ ३ १ २ ३ १ २
माध्वीममश्रुतᳬहवम् ॥ २ * ॥

हे "अश्विना" अश्विनौ! "अत्यायातं" सर्वान् यजमानानतिक्रम्य गच्छतम् "अहम्" ऋषिर्यथा "विश्वाः" सर्वा अस्मद्विरोधि-प्रजाः "सना" सदा "तिरः" करोमि [ अथवा, 'अहं तिरः सना'—इति सम्बन्धः। प्राप्ताः विश्वाः सर्वाः क्रिया युष्मदीया अनुष्ठेयादित्यर्थः, सना सनातनौ ] "दस्रा" शत्रूणामुपक्षपयितारौ, "हिरण्यवर्त्तनी" हिरण्य-रथौ "सुषुम्णा" सुधनौ "सिन्धुवाहसा" नदीनां प्रवाहयितारौ वृष्टि-प्रेरणेन तादृशौ युवामत्यायातम् ॥ २ ॥

---

* ऋ० वे० ४, ४, १५, १।

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आनो*रत्नानिबिभ्रतावश्विनागच्छतंयुवम् ।
२ ३ १ २ ३ १ २ २
रुद्राहिरण्यवर्त्तनीजुषाणावाजिनीवसू
२ ३ १ २ ३ १ २
माध्वीममश्रुतꣳहवम् ॥ ३ † ॥ १२

हे "अश्विना" अश्विनौ ! "युवं" युवां "नः" अस्मभ्यं "रत्नानि" रमणीयानि "बिभ्रता" बिभ्रतौ धारयन्तौ सन्तौ अस्मान् "आगच्छतम्"। हे "रुद्रा" रुद्र-पुत्रौ ! स्तुत्यौ ! वा "वाजिनीवसू" वाजिन-धनौ युवां "हिरण्य वर्त्तनी" हिरण्य-रथौ "जुषाणा" यज्ञं सेवमानौ सन्तौ आगच्छतमिति । माध्वी-त्यादि गतम्‡ ॥ ३ ॥ १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकोनविंशस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

——०००——

* "आन्न"—इति ऋ०-पाठः ।

† ऋ० वे० ४, ४, १५, ३ ।

‡ 'माध्वी—मधुनः सोमस्य पातारौ'—इति वि० ।

अथ चतुर्थे खण्डे—

अबोध्यग्निःसमिधाजनानामिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १
अबोध्यग्निःसमिधाजनानाम्प्रतिधेनु

२ ३ २ ३ १ २
मिवायतीमुषासम्।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ १ १ २
यह्वाइवप्रवयामुज्जिहानाःप्रभानवः

३ २ ३ १ २
सस्रतेनाकमच्छ॥ १ *॥

अयम् "अग्निः" "जनानाम्" अध्वर्य्वादीनां "समिधा" समिद्भिः "अबोधि" प्रबुद्धोऽभूत्। "धेनुम् इव" अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वत्, "आयतीम्" आगच्छतीम् "उषसं प्रति" उषःकाल इत्यर्थः। अथ प्रबुद्धस्याग्नेः "भानवः" रश्मयः ज्वालाः "यह्वाः" महान्तः "वयां" शाखां "प्रोज्जिहानाः" प्रोद्गमयन्तो वृक्षाइव [यद्वा, महान्तः प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तः भानवः] "नाकम्" अन्तरिक्षम् "अच्छ" आभिमुख्येन "प्र सस्रते" प्रसरन्ति॥

"सस्रते"-"सिस्रते"—इति पाठौ॥ १॥

---

* छ० आ० १, २, ३, १ (१भा० २१८पृ०)=ऋ० वे० ३, ८, ११, १।

अथ द्वितीया।

१ २ ३ १ २ ३ १ ३ ३ १ १ ३ २ ३ १
अबोधिहोतायजथायदेवानूर्द्ध्वोअग्निः

३ १ २ ३ १ २
सुमनाःप्रातरस्थात्।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
समिद्धस्यरुशदद्दर्शिपाजोमहान्देव

२र ३ १ २
स्तमसोनिरमोचि ॥ २ * ॥

अयं "होता" होम-निष्पादकः "अग्निः" "देवान्" यष्टव्यान् "यजथाय" यष्टुम् "अबोधि" बुध्यते। सोऽग्निः "प्रातः" काले "सुमनाः" शोभन-मनस्कः यजमानानुग्रह-बुद्धिः सन् "ऊर्द्ध्वः" "अस्थात्" उत्तिष्ठति। "समिद्धस्य" अस्य "रुशत्" रोचमानं "पाजः" बलं ज्वाला-लक्षणम् "अदर्शि" दृश्यते। अथ तथाभूतः "महान् देवः" "तमसः" अन्धकारात् "निरमोचि" सर्वं जगत् निरमोचयत् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र ३ १ २ ३
यदीङ्गणस्यरशनामजीगःशुचिरङ्क्ते

१ २ ३ १ २ १ २
शुचिभिर्गोभिरग्निः।

---

* ऋ० वे० ३, ८, १२, २।

१र २र ३ १ २ ३ २
आद्दक्षिणायुज्यते वाजयन्त्यूत्तानां

१ १ २ ३ १ २
मूर्द्ध्वो अधयज्जुह्भिः ॥ ३ * ॥ १३

"यद्" यदा "ईम्" अयमग्निः "गणस्य" सङ्घातात्मकस्य जगतः "रशनां" रज्जुमिव व्यापार-प्रतिबन्धकं तमः "अजीगः" गिरति गृह्णाति वा समिद्धो भवतीत्यर्थः। यदा "शुचिः" दीप्तः "अग्निः" "शुचिभिः गोभिः" व्यापाराप्रतिबन्धकैर्दीप्तैः रश्मिभिः "अङ्क्ते" व्यनक्ति विश्वं जगत् "आत्" अनन्तरमेव† "दक्षिणा" प्रवृद्धा "वाजयन्ती" हविर्लक्षणमन्नं प्रदातुमिच्छन्ती "जुह्भिः युज्यते" युक्ता भवति [अथवा, दक्षिणा प्रवृद्धाज्य-धारा युज्यते] तां धाराम् "उत्तानाम्" ऊर्द्ध्वस्थितामुपरि विस्तृताम् "ऊर्द्ध्वः" उन्नतः सन् "जुह्भिः" "अधयत्" पिबति ॥ ३ ॥ १३

१ २ १ २ २
॥ औशनम् ॥ आवो। धियग्निसमिधा। जना३नाम्।

१ २र १ २ १र २र ३ ४ ५ १ र र
प्रतिधेनूम्। इवाय। तीमुषासाम्। यह्वाइवप्रवया

७ २ १र २ १ १ १ र १
मूत्। जिह्वा२३नाः। प्रभानवाः। सस्रते। ना३४३।

२ ४ १ २ १ र र २
का३भा५ह्वा६५६ ॥(१) आवो। धिद्योतायजथा। यदा

* ऋ० वे० ३, ८, ११, ३।

† 'आत् * * * आनुपूर्व्येण'—इति वि०।

२ २ १२ २ १ २ १ २ २ ३ ४ ५
इयिवान् । ऊर्द्ध्वोअग्नायिः । सुमनाः । प्रातरस्थात् ।

१ ७ २ १२ २२ १ २ १
समिद्धस्यरुषद्दा । श्रिपा२३जाः । महान्देवाः । तम

२ २ ४ १ २
सः । ना३४३यिः । आ३मो५चा६५६यि ॥(२) यादीम् ।

१ २ २ १ २ १ २ १
गणस्यरशनाम् । अजा३यिगा । शुचिरङ्गायि । शुचि

२ ३ ४ ५ १२ २ २ ७
भिः । गोभिरग्नायिः । आद्दक्षिणायुज्यतेवा । जया२३

२ १२ २२ १२ २ १ २ २ ४
न्ती । उत्तानाम् । ध्वो३अध । या३४३त् । जू३ह्व५

भा६५६यिः(३) ॥ ८ * ॥ [१] १३

अथेदं श्रेष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ २उ ३ १ २ ३ २ ३ १ २
इदꣳश्रेष्ठञ्ज्योतिषाञ्ज्योतिरागा

३ १ २ ३ १ २ ३ १ २
च्चित्रःप्रकेतोअजनिष्टविभ्वा ।

२ ३ १ २ ३ २ ३ २ ३ २उ
यथाप्रसूतासवितुःसवायैवा

३ २ ३ १ २
रात्र्युषसेयोनिमारैक् ॥ १ † ॥

---

* ऊ० गा० १९प्र० १ श्रा० ८स्रा० ।

† ऋ० वे० १, ८, १, १ ।

"ज्योतिषां" ग्रह नक्षत्रादीनां द्योतमानानां मध्ये "इदम्" उषआख्यं "ज्योति:" "श्रेष्ठं" प्रशस्यतमम् [ अस्य कोऽतिशय: ? इति चेत्, उच्यते—नक्षत्रादिकं ज्योतिस्स्वात्मानमेव प्रकाशयति नान्यत्, चन्द्रस्तु यद्यप्यन्यं प्रकाशयति तथापि न विस्पष्ट-प्रकाश:, औषसन्तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकार-निरा-करणेन विशेषेण प्रकाशकम् अत: प्रशस्यतममित्यर्थ: । तादृशं ज्योति: ] "आगात्" पूर्वस्यां दिश्यागमत् । आगत्वा चैतस्मिन् "चित्र:" चायनीय:, "प्रकेत:" अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापक:, तथा "विभ्वा" विभुर्व्याप्त: सन्* "अजनिष्ट" प्रादु-रभूत् । किञ्च, "यथा" "रात्री" रात्रि: स्वयं "सवितु:" सूर्य-सकाशात् "प्रसूता" उत्पन्ना [सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात् एवमेव रात्रिरपि "उषसे" "सवाय" उषसउत्पत्तये तदीयां "योनिं" स्थानं स्वकीयापर-भाग-लक्षणम् "आरैक्" आरेचितवती कल्पितवतीत्यर्थ: [ यद्वा, 'प्रसूता' रात्रि-सकाशादुत्पन्ना उषा: 'सवितु:' सूर्यस्य 'सवाय' प्रसवाय जन्मने यथा भवति एवं 'रात्रि:' अपि 'उषसे' उषसो यज्जन्म तदर्थं 'योनिं' स्वापर-भाग-लक्षणं स्थानं कृतवती । अत्र निरुक्तम्—"इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितु: प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनि मरिचत् स्थानम् ( निरु० नै०

* 'विभ्वा—विभुत्वेन'—इति वि० ।

२, १९ )"—इति ] श्रेष्ठम्—प्रशस्य-शब्दातिशायनिक इष्ठन् (५, ३, ५५), "प्रशस्यस्य श्रः (५, ३, ६०)"—इति आदेशः, "प्रकृत्यैकाच् (६, ४, ६३)"—इति प्रकृतिभावाट्टिलोपाभावः। अगात् —एते लुङि "इणो गा लुङि ( २, ४, ४५ )"—इति गादेशः, "गातिस्था ( २, ४, ७७ )"—इति सिचो लुक्। प्रकेतः—कित ज्ञाने ( भ्वा० प० ) अन्तर्भावित-ण्यर्थात् कर्मणि घञ्, "थाथादिना ( ६, २, १४४ ) उत्तरपदान्तोदात्तत्वम्। अजनिष्ट— जनी प्रादुर्भावे ( दि० आ० ) लुङि सिच इड़ागमः। विभ्वा— "वि-प्र-सं-भ्यो डुः सञ्ज्ञाम् ( ३, २, १८० )"—इति डु-प्रत्ययः, "सुपां सुलुक् ( ७, १, ३९ )"—इत्यादिना सोराकारादेशः, "ओः सुपि ( ६, ४, ८३ )"—इति यणादेशस्य "न भूसुधियोः ( ६, ४, ८५ )"—इति निषेधे प्राप्ते "छन्दस्युभयथा ( ६, ४, ८६ )"—इति यणादेशः, व्यत्ययेनाद्युदात्तत्वम्; यद्वा, वि-पूर्वात् भवतेरौणादिको ड्वुन् प्रत्ययः, नित्वादाद्युदात्तत्वम् ( ६, १, १९७ )। प्रसूता—सुनोतेः कर्मणि निष्ठा, "गतिरनन्तरः ( ६, २, ४९ )"—इति गतेः प्रकृतिस्वरत्वम्। सवाय— "छन्दसि जव-सवौ वक्तव्यौ (३, ३, ५७ वा०)"—इति निपातनात् अच्, चित्स्वरः (६, १, १६३)। रात्री—"रात्रेश्चाजसौ (४, १, ३१)"—इति ङीप्, "यस्येति च ( ६, ४, १४८ )"— इतीकार-लोपः। अरैक्—रिचिर् विरेचने ( रु० उ० ), लङि "बहुलञ्छन्दसि (२, ४, ७३)"—इति विकरणस्य लुक्, लघूपधगुणे ( ७, ३, ८६ ), "हल्ङ्याभ्यः ( ६, १, ६८ )"—इति तिलोपः, वर्ण-व्यत्ययेन एकारस्यैकारः (३, १, ८५) ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ १
रुशद्वत्सारुशतीश्वेत्यागा

१ २ ३ १र २र
दारैगुकृष्णासदनान्यस्याः।

३ १२ ३ १ २ ३ २उ
समानबन्धूअमृतेअनूची

३ १ २ ३ २
द्यावावर्णञ्चरतआमिनाने॥ २ *॥

[श्वेत्या इति उषसो नामधेयम् (निघ० १, ८, १२)] "रुशती" दीप्ताश्च "श्वेत्या"/श्वेतवर्णोषाः "रुशद्वत्सा" रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता [यथा मातुः समीपे वत्सः सञ्चरति एव मुषसः समीपे सूर्यस्य नित्यमवस्थानात् तद्वत्सत्वम् अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन्\हरति एव मुषसोऽवश्यायाख्यं रसं पिबन्|वत्स इत्युच्यते] तादृशी सती "आगात्" आगतवती। आगताया उषसः "कृष्णा" कृष्णवर्णा रात्रिः "सदनानि" स्थानानि स्वकीयानि अर्द्धयाम-लक्षणानि "आरैक्" आरेचितवती कल्पितवतीत्यर्थः [उ-इत्येतत्पूरणः] अपिचैते रात्र्युषसौ "समानबन्धू" समानेन एकेन सूर्याख्येन बन्धुना सख्या युक्ते [यद्वा, सूर्येण सह सम्बद्धे, यथा उषा उदेष्यता सूर्येण सम्बद्धा एवं रात्रिरपि अस्तं गच्छता सूर्येण सम्बद्धा],† "अमृते"

* ऋ० वे० १, ८, १, २।

† 'समानबन्धू—अहोरात्रे उषसः सकाशात् सञ्जायेते'—इति वि०।

मरण-रहिते [कालात्मकतया, नित्यत्वात्] "अनूची" अनूच्यौ प्रथमं रात्रिः पश्चात् उषा इत्यनेन क्रमेण गच्छन्त्यौ [यद्वा, सूर्य-गत्यनुसारेण गच्छन्त्यौ एवम्भूते] "वर्णं" सर्वेषां प्राणिनां रूपम् "आ मिनाने" जनयन्त्यौ [यद्वा, स्वकीयं रूपं हिंसन्त्यौ, उषसा नैशं तमो निवर्त्त्यते, प्रकाशात्मकमुषसो रूपं रात्र्या एवं विधे सत्यौ] "द्यावा" द्योतमाने "चरतः" प्रतिदिवमावर्त्तेते [यद्वा, द्यावानभसोऽन्तरिक्ष-मार्गेण चरतः प्रतिदिवसं गच्छतः। अत्र निरुक्तम्—"रुशद्वत्सा सूर्यवत्सा। रुशदिति वर्णनाम, रोचते र्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रस-हरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेररिचत् कृष्णा सदनान्यस्याः कृष्णावर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समान-बन्धू समान बन्धने अमृते अमरण-धर्माणावनूची अनूच्याविवीतरेतरमभिप्रेत्य द्यावा-वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादाभिमाने आमिन्वाने अन्योऽन्यस्याध्यात्मं कुर्वाणे (निरु० नै० २, २०)" —इति॥ श्वेत्या—श्विता वर्णे (भ्वा० आ०), अस्माण्ण्यन्तात् "अचो यत् (३, १, ९७)"—इति भावे यत्, णि-लोपः, अर्शआदित्वान्मत्वर्थीयोऽच् (५, २, १२७)। अमृते अमृतं मरणमनयोर्नास्तीति बहुव्रीहौ "नञोजरमरमित्रमृता (६, २, ११६)"—इत्युत्तरपदाद्युदात्तत्वम्। अनूची—अनुपूर्वादञ्चतेः "ऋत्विगित्यादिना क्विन् (३, २, ५९), "अनिदिताम् (६, ४, २४)"—इति न-लोपः, "अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा०)"—इति ङीप्,"अचः (६,४,१३८)"—इत्यकार-लोपे, "चौ

( ६, ३, १३८ )"—इति दीर्घः, "अनुदात्तस्य च यत्रोदात्त-लोपः ( ६, १, १६१ )"—इति ङीपउदात्तत्वम्. "सुपां सुलुक् (७, १, ३८ )"—इति विभक्तेर्लुक्। मिनाति—मीनातेः क्रैयादिकस्य शानचि "मीनातेर्निगमे (७, ३, ८१)"—इति ह्रस्वत्वम् ॥ २ ॥

अथ तृतीया।

२ २उ ३ १ २ ३ २उ
समानोअध्वास्वस्रोरनन्त

१ १ २ ३ १ २
स्तमन्यान्याचरतोदेवशिष्टे।

१ २ ३ १ २ ३ २ ३
नमेथतेनतस्थतुःसुमेके

२ ३ २ १ २ २ ३ १ २
नक्तोषासासमनसाविरूपे ॥ ३ * ॥ १४

"स्वस्रोः" भगिन्योः रात्र्युषसोः† "अध्वा" सञ्चरण-साधन-भूतो मार्गः "समानः" एकएव येन आकाशमार्गेण उषा निर्गच्छति तेनैव रात्रिरपि, सच मार्गो "अनन्तः" अवसान-रहितः "तं" मार्गं "देवशिष्टे" देवेन द्योतमानेन सूर्येणानु-शिष्टे शिक्षिते सत्यौ "अन्यान्या"‡ एकैका "चरतः" क्रमेण गच्छतः। अपिच "सुमेके" शोभन-मेहने¶ सर्वेषामुत्पादकत्वा-

---

* ऋ० वे० १, ८, १, ३।

† 'स्वस्रोः—भगिन्योः द्यावापृथिव्योः अहोरात्रयोर्व'—इति वि०।

‡ 'अन्या दीप्तिः अक्तः अन्या चरतः अन्या द्युलोकस्य अन्या पृथिव्याः'—इति वि०।

¶ 'सुमेके—संवत्सरे, दक्षिणायने रात्रेर्वै वृद्धिः, उत्तरायणे अह्नः, नक्तं रात्रिः उषाकाल-प्रभृत्यहः'—इति वि०।

च्छोभन-प्रजनने "नक्तोषासा" रात्रिरुषाश्च "विरूपे" तमः-प्रकाश-लक्षणाभ्यां विरुद्धाभ्यां युक्ते, अपि "समनसा" समान-मनस्केन ऐकमत्यं प्राप्ते सत्यौ* "न मेथेते" परस्परं न हिंस्तः, तथा "न तस्थतुः" क्वचिदपि न तिष्ठतः सर्वदा लोकानुग्रहार्थं गच्छत इत्यर्थः [ अन्यान्या—"कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम् (८,१,१२वा०)"—इत्यन्यच्छब्दस्य द्विर्भावः, "तस्य परमाम्रेडितम् ( ८, १, २ )"—इत्याम्रेडित-सञ्ज्ञायाम् "अनुदात्तञ्च ( ८, १, ३ )"—इत्याम्रेडितानुदात्त-त्वम्। देवशिष्टे—शासु अनुशिष्टौ (अदा० प० ), शास्तेः कर्मणि निष्ठा, "यस्य विभाषा (७, २, १५)"—इतीट्-प्रतिषेधः, "शास-इदङ्हलोः ( ६, ४, ३४ )"—इति उपधाया इत्वम्, "शासि-वसि-घसीनाञ्च ( ८, ३, ६० )"—इति षत्वम्, तृतीया-कर्मणि ( ६, २, ४८ )"—इति पूर्वपद-प्रकृतिस्वरत्वम्। मेथेते—मेथतिर्हिंसार्थो भौवादिकोऽनुदात्तेत्। सुमेके—मिह सेचने (भ्वा० प० ), भावे घञ्, शोभनो मेहो ययोस्ते व्यत्ययेनककारः (३, १, ८५), उत्तरपदस्य ञित्स्वरेणाद्युदात्तत्वम् "आद्युदात्तं द्व्यच्छन्दसि (६, २, ११९)"—इत्युत्तरपदाद्युदात्तत्वम्। नक्तोषासा—सुपांसुलुगिति ( ७, १, ३९ ) विभक्तेराकारः॥ ३॥ १४

* समनसा—*** प्रसन्न मनसावित्यर्थः—इति वि०।

१ २ १र र र
॥ औषसम् ॥ आयिदाम्। श्रेष्ठञ्जगौतिषाञ्जगो।

२ २ १ २ १ २ १ २ ३ ४ ५
तेरा३गात्। चित्रःप्रकायि। तो३अज। निष्ठविभ्वा।

र र र ७ २ र १र २र १ ११
यथाप्रसूतासवितुः। सवा२३या। एवारात्रायि। उष

र २ २ ४ १ २
से। यो३४३। ना३यिमापुरा६५६यिक् ॥(१) रूशात्।

२ र १ २ र १र २१ २ १
त्साारूशतीश्वे। तिया३गात्। आरैगका। ष्णा३स

२, ३ ४ ५ १र र ७ २ र
दानानियस्थाः। समानबधूअमृते। अनू२३ची। द्या

र २ र २ १ २ २ ४
ावर्णाम्। बरतः। आ३४३। मा३यिनापूना६५६

१ २ १र र २ २
येः ॥(२) सामा। नोअध्वास्वस्रोः। अना३न्ताः। त

२र १ ११ २, ३ ४ ५ १ र र र
न्यान्या। चरतः। देवशिष्टायि। समेथेतेनतस्थतुः।

२ १र २र १ ११ २ २
उमे२३कायि। नक्तोषासा। समन। सा३४३। वा

४
यिरू५पा६५६यि(३) ॥ ८ * ॥ [१] १४

* ऊ० गा० १८प्र० १अ० ८सा०।

अथाभात्यग्निरिति त्वचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २३२३ १२ ३
आभात्यग्निरुषसामनीक

१र १र ३१र १र
मुद्विप्राणान्देवयावाचोअस्थुः ।

३ १ २ ३ १ २ ३ १ २
अर्वाञ्चानूनᳩरथ्येहयातं

३ १ २ १ ३ १र २र
पीपिवाᳩसमश्विनाघर्ममच्छ ॥ १ * ॥

"उषसाम्"† "अनीकम्" अनीकभूतः [ अनीकं मुखम्, उषसि प्रबुध्यमान इत्यर्थः ] तादृशः "अग्निः" "आ भाति" दीप्यते [अथवा, उषसां मुखमाभात् दीपयति। उषः-काले ह्यग्नयः प्रतिबुध्यन्ते ] किञ्च, "विप्राणां" मेधाविनां स्तोतृणां "देवयाः" देवकामाः‡ "वाचः" स्तोत्राणि "उदस्थुः" उत्तिष्ठन्ति । यस्मादेवं तस्मात् हे "रथ्या" रथ-स्वामिनावश्विनौ !¶ "अर्वाञ्चा" अस्मदभिमुखावश्विनौ "नूनम्" "अद्य" अस्मिन् याग-दिने "इह" यागे "यातम्" आयातम् । किं प्रति ? "पिपीवांसं" स्वाङ्गैः

* ऋ० वे० ४, ४, १७, १ ।

† 'उषसां रश्मीनाम्'—इति वि० ।

‡ 'देवयाः—देवानां प्रापणीया वाचः'—इति वि० ।

¶ 'रथ्या—रथेन'—इति वि० ।

परिवृढं* "घर्मं" प्रदीप्तं यज्ञं [ यद्वा, 'पिपीवांसम्' आप्यायितं घर्म-क्षरण-रूपं सोमरसम् ; अथवा, घृतादिना 'पिपीवांसं' 'घर्मं' प्रवर्ग्यम् ] "अच्छ" अभि लक्ष्य आयातम् [ प्रवर्ग्यस्य सूक्तस्य विनियोगो बह्वृचानाम् ]॥ १॥

अथ द्वितीया।

१ २ ३ १२ २२ ३ २ ३ १
नसꣳस्कृतम्प्रमिमीतोगमिष्ठा

२ ३ २ ३ १२ २२ ३ २
न्तिनूनमश्विनोपस्तुतेह।

१ २ ३ २ ३ १ २ ३
दिवाभिपित्वेवसागमिष्ठा

१२ २२ ३ २ ३ १ २
प्रत्यवर्त्तिन्दाशुषेशम्भविष्ठा ॥ २ † ॥

हे अश्विनौ! "संस्कृतं" घर्मं "न प्रमिमीतं" किन्तु "अन्ति" अन्तिके घर्म-समीपे "नूनम्" इदानीम् "इह" यज्ञे "गमिष्ठा" गन्तृतमौ युवाम् "अश्विना" अश्विनौ "उपस्तुता" उपस्तुतौ भवतं "दिवाभिपित्वे" दिवसस्यापतने प्रातःकाले "अवसा" रक्षण-निमित्तेनान्नेन सह "अवर्त्तिं" वर्त्तिर्जीवनं तदभावो अवर्त्तिस्तद्रहितं यथान्नम् "आगमिष्ठा" आगन्तृतमौ। आगत्य च "दाशुषे" हविर्दत्तवते यजमानाय "शम्भविष्ठा" सुखस्य भावयितारौ भवतः॥ २॥

---

* 'पिपीवांसं—पा पाने धातुः ( भ्वा० प० ) पिबन्तम्'—इति वि०।

† ऋ० वे० ४, ४, १०, २।

२ १ २ २ १२ २२ १ २ १ २
साशा। तमे२३ना। नेदानीपायि। तिरश्मि। ना३४

२ ४
३। ता३ता५ना६५६(३)॥ १० *॥ [१] १५

इति सामवेदार्थप्रकाशे उत्तरायस्यैकोनविंशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे —

एताउत्या इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ १ २ ३ १ २ ३
एताउत्या उषसः केतुमक्रत

२ १ २ १ १ २ ३ १ २
पूर्वे अर्द्धे रजसो भानुमञ्जते।

२ १२ १२ २ २ ३
निष्कृण्वाना आयुधानीव धृष्णवः

२ ३१२ २२ ३ १ २
प्रति गावोऽरुषीर्यन्ति मातरः॥ १ †॥

"उ" [—इत्येतत् पदपूरणम्]। "त्याः" ता "एताः" उषसः "रजसः" अन्तरिक्ष-लोकस्य "पूर्वे अर्द्धे" प्राचीने दिग्भागे

---

* ऊ० गा० १९प्र० १अ० १०सा०।

† ऋ० वे० १, ६, २४, १।

"भानु" प्रकाशम् "अञ्जते" व्यक्तीकुर्वन्ति। "धृष्णवः" धर्षणशीलाः योद्धारः "आयुधानीव" यथासि प्रभृतीन्यायुधानि संस्कुर्वन्ति, एवं "निष्कृण्वानाः" निस्कुर्वाणाः स्व-भासा जगत् संस्कुर्वाणाः "गावः" गमन-स्वभावाः "अरुषीः" आरोचमानाः "मातरः" सूर्य-प्रकाशस्य निर्मात्र्यः जगज्जनन्यो वा "उषसः" "प्रति यन्ति" प्रतिदिवसं गच्छन्ति। एवं विधा उषसः अस्मान् रक्षन्त्वित्यर्थः॥* [अत्र निरुक्तम्—"एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात्। पूर्वे अर्द्धेऽन्तरिक्षलोकस्य समञ्जते भानुना। निष्कृण्वाना आयुधानीव धृष्णवः। निरित्येष समित्येतस्य स्थाने। समीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति प्रतियन्ति गावो गमनादरुषोरारोचनान्मातरो भासो निर्मात्र्यः (१२०६, ७)"—इति। अक्रत—करोतेर्लुङि "मन्त्रे घस (२, ४, ८०)"—इति च्लेर्लुक्। निष्कृण्वानाः—कृवि हिंसा-करणयोश्च (भ्वा० प०), अस्मात्ताच्छिलिकश्चानश् (३,२,१२९), धिन्वि-कृण्व्योर च (३,१,८०)"—इति उ-प्रत्ययः, "इदुपधस्य चाप्रत्ययस्य (८, ३, ४१)"—इति विसर्जनीयस्य सत्वम्, कृदुत्तरपद-प्रकृतिस्वरत्वम् (६, २, १३९)]॥ १॥

---

* 'उषसः दीप्तयः केतुं ध्वजमक्रत कृतवत्यः पूर्वे अर्द्धे रजसां लोकानां भानुं दीप्तिं भजन्ते अथवा भानुमन्तमादित्यं निष्कृण्वाना आकर्षयमाणाः आयुधानीव चौणानि धृष्णवः धारण-शीलाः पूर्वा दिशः प्रति गावः सर्वस्य जगतो रक्षार्थम् गावः आदित्यरश्मयः अरुषीः अहिंसिताः यन्ति पूर्वं परिक्रमन्ति मातरः'—इति वि०।

अथ द्वितीया।

१ २ ३१ ३ २ ३ १ १  
उदपप्तन्नरुणाभानवोवृथा

३ २ ३ १ २ ३ १ २  
स्वायुजोअरुषीर्गाअयुक्षत।

१ २ ३ १ २ ३ १ २ ३ १ ३  
अक्रन्नुषासोवयुनानिपूर्वथा

१ २ ३ १र २र  
रुशन्तम्भानुमरुषीरशिश्रयुः॥ २ * ॥

"अरुणा" आरोचमाना† "भानवः" औषधस्य दीप्तयः‡ "वृथा" अनायासेन स्वयमेव "उदपप्तन्" उदगमन्¶। तदनन्तरम् उषसश्च "स्वायुजः" सुखेन रथेन आयोक्तुं शक्याः "अरुषीः" शुभ्रवर्णाः गाः पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहन-भूताश्चतुष्पदो गा एव "अयुक्षत" अयोजयत् [उक्तञ्च—"अरुण्योगाव उषसाम् (निघ० १, १५, ७)"—इति]। एवं गोभिर्युक्तं रथमारुह्य उषसः "पूर्वथा" पूर्वेष्वतीतेष्वहस्सु "वयुनानि" सर्वेषां प्राणिनां ज्ञानानि "अक्रन्" अकार्षुः उषः-काले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति, तदनन्तरम् "अरुषीः" आरोचमानास्ता-उषसः "रुशन्त" [रुशदिति वर्णनाम, रोचतेर्ज्वलति-कर्मणः

* ऋ० वे० १, ६, २४, २।

† 'अरुणाः रक्तवर्णाः'—इति वि०।

‡ 'भानवः—आदित्य-रश्मयः'—इति वि०।

¶ 'उदपप्तन्—उत्पतन्त्यादित्य-रश्मयः'—इति वि०।

(निरु० नै ६, १३)"—इति यास्कः] शुक्लवर्णां "भानुं" सूर्यम् "अग्निश्रयुः" "भानुम्" असेवन्त तेन सहैकीभवन्तीत्यर्थः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
अर्च्चन्तिनारीरपसोनविष्टिभिः

३ २ ३ १ २ ३ १ २ ३ १ २
समानेनयोजनेनापरावतः ।

२ ३ १ ३ ३ १ २ ३ १ २ ३
इषंवहन्तीःसुकृतेसुदानवे

२ उ १ १ २ ३ २
विश्वेदहयजमानायसुन्वते ॥ ३ * ॥ १६

"नारीः" नेत्र्यः उषसः "विष्टिभिः" निवेशकैः स्वकीयैस्तेजोभिः "समानेन योजनेन" एकेनैवोद्योगेन "आ परावतः" आदूरदेशात् आपश्चिम-दिग्विभागात् "अर्च्चन्ति" नभः-प्रदेशं पूजयन्ति कृत्स्नं जगत् युगपदेव व्याप्नुवन्तीत्यर्थः† । तत्र दृष्टान्तः—"अपसो न" युद्ध-कर्मणोपेताः पुरुषाः‡ यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत् । किङ्कुर्वते ? "सुकृते" शोभनस्य कर्मणः कर्त्रे, "सुन्वते" सोमाभिषवं कुर्वते,

---

* ऋ० वे० १, ६, ३४, ३ ।

† 'समानेन योजनेन । एतदुक्तम्भवति—बहुयोजन-साहस्रे पथि द्युलोकस्य भूलोकस्य चान्तरिक्षे, आपरावतः—दूरात्, इषं—इष्टिं वहन्तीः आदित्य-रश्मयः'—इति वि० ।

‡ 'अपसः—उदकानि'—इति वि० ।

"सुदानवे" कल्याणीर्दक्षिणा ऋत्विग्भ्यो ददते, "यजमानाय" "विश्वेदह" सर्वमेवेषमन्नं बहन्तीरावहन्त्य: प्रयच्छन्त्य इत्यर्थ: [नारी:—"नृनपे (८, ३, १०), ऋदोरप् (३, ४,५७) "नृनर-योर्वृद्धिश्च (४, १, ७३ ग० )"—इति शार्ङ्गरवादिषु पाठात् ङीन्, जसि "वाच्छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्ण-दीर्घत्वम्। अपस:—अप: शब्दात् "अर्शआदिभ्योऽच् (५, २, १२७)"—इत्यच् "सुपां सु-लुक् (७, १, ३९)"—इति जस: सु:, व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वम्। विष्टिभि:—विश प्रवेशने (तु० प०), विशन्ति प्रविशन्तीति विष्टय: किरणा: "क्तिच्क्तौ च सञ्ज्ञायाम् ( ३, ३, १७४ )"—इति क्तिच्। विश्वा—"सुपां सु-लुक् (७, १, ३९)"—इत्याडादेश:] ॥ ३ ॥ १६

२र १ र २
॥ उष: ॥ एतोवा। उत्याउषस:कायि। तुम

१ १र र र र २ १ १
क्राता२। पूर्वेअर्द्धेरजसोभा। नुमञ्ज्ञाता२यि। निष्कृ

र र र र २ १ . १ २ ४
एवावानाआयुधानायि। वधृष्णावा२३:। प्राता३यिगा

५ २ १ १ २ ४
वा:। अरुषायिय्यो२३। तायिमा३ताऽरा ६ ५ ६: ॥(१)

२ १ र २र १ १र र
उद्दोवा। अपप्तन्नरुणाभा। नवोवार्था२। स्वायुजो

र २ १ १ र२ २
अरुषीर्गा:। अयुक्षाता२। अक्रन्नुषासोवयुना। नि

२१ १२४५ २१ १५
पूर्वाथा२३ । ह्वा३न्ताभ्ना । नुमह्वषा२३यिः । आग्ना

४ २१ २र २
३यिआ५यू६५६ः ॥(२) अर्वा । जिनारीरपसो । न

१ १र र र र २र१
विष्टायिभा२यिः । समानेनयोजनेना । परावाता२ः ।

१ र २र१ १ २ ४
दूषन्वन्तोःसुक्रतायि । सुदानावा२३यि । वायिस्वो३दा

५ २ १ १२ ४
शा । यजमाना२३ । याह्व३न्वापूता६५६यि(३) ॥१६*॥[१]१६

अथाबोध्यग्निरुर्म इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र २र३ २ ३
अबोध्यग्निर्ज्म उदेतिसूर्य्यो

१ २ ३ २ ३क १र ३ १ २
व्यू३षाश्चन्द्रामह्यावो अर्चिषा ।

१ २ ३ २ ३ १ २ ३ २ ३
आयुक्षातामश्विनायातवेरथ

१ २ ३ १ २ ३ २उ ३ १ २
म्प्रासावीद्देवःसविताजगत्पृथक् ॥ १ † ॥

---

* ऊ० गा० १९प्र० १ख० १६गा० ।

† ऋ० वे० २, २१, १ ।

• अयम् "अग्निः" निहतः सन् "ज्मः" ज्मायाः पृथिव्याः वेदि-लक्षणाया सम्बन्धी सन् "अबोधि" प्रबोधितः । किञ्च, "सूर्य्यः" "उदेति" । ततो "मह्री" महती "उषाः" "अर्चिषा" प्रकृष्टेन तेजसा "चन्द्रा" प्राणिनामाह्लादनी सती "वि आवः" व्यावृणोत् तमांसि निवारयति स्म [ वृणोतेर्लुङि "मन्त्रे घस (२, ४, ८०)"—इति च्लेर्लुक्. "छन्दस्यपि दृश्यते (६,४,७३)"—इत्याडागमः] यतइयमुषा उदेति यतश्चायमग्निः प्रबुद्धो भवति अतः कारणात् हे अश्विनौ युष्मत्सम्बन्धिनं "रथं" "यातवे" देव-यजन-गमनाय रासभाभ्याम् "आ युक्षताम्" युञ्जाथाम् । तथा "सविता" सर्व्वकर्म्मणोऽनुज्ञाता "देवः" "जगत्" जङ्गमं प्राणिजातं "पृथक्" स्व-स्व-कर्मानुरोधेन "प्रासावीत्" प्रसुवतु अनुजानातु ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ १ २ ३ १ २
यद्युञ्जाथेवृषणमश्विनारथ

३ १ २ ३ १ २ ३ १ २
घृतेननोमधुनाक्षत्रमुक्षतम् ।

३ २ ३ २ ३ १ २
अस्माकम्ब्रह्मपृतनासुजिन्वतं

३ १ ३ ३ १ २
वयन्धनाशूरसाताभजेमहि ॥ २ * ॥

---

* ऋ० मे० २, १, २१, २ ।

हे "अश्विना" अश्विनौ! "यद्" यदा "वृषणं" वृष्ट्यादि-वर्षकं "रथं" "युञ्जाथे" योजयथः, तदा "नः क्षत्रं" अस्मदीयं बलं क्षत्रिय-जातिर्वा* "घृतेन" उदकेन "मधुना" मधुरेण "उक्षतं" सेचयतं प्रवर्द्धयतमित्यर्थः [यद्वा, 'घृतेन' क्षरण-रूपेण "मधुना" अमृतेन "उक्षतम्" युष्मद्रथस्थेनामृतेनास्मदीयं बलं प्रवर्द्धयतमित्यर्थः। अश्विनोः रथस्य मधुपूर्णत्वं "मधुवाहनो रथः" —इत्यादिषु प्रसिद्धम्]। किञ्च, अस्माकं "पृतनासु" अस्मदीयासु पुत्र-भृत्यादि-मनुष्यरूपासु प्रजासु "ब्रह्म" तेजः† "जिन्वतम्" [यद्वा, 'पृतनासु' परकीयासु 'ब्रह्म' परिवृढमन्नमस्माकं जिन्वतं प्रीणयतम् ]। वयञ्च "शूरसातौ" शूराणां प्रहारादि-दान-युक्ते सङ्ग्रामे "धना" तदीयानि धनानि बहुविधानि "भजेमहि" ॥२॥

अथ तृतीया।

२१ १ २१ २३१ २३ १२
अर्वाङ्त्रिचक्रोमधुवाहनोरथो
३ १२ ३ १ २ ३१२
जीराश्वोअश्विनोर्यातुसुष्टुतः।
३ २३१२ ३१२ ३
त्रिवन्धुरोमघवाविश्वसौभगः
२३ १२ २२३१२
शन्नआवक्षद्द्विपदेचतुष्पदे ॥ ३ ‡ ॥ १७

---

* 'क्षत्रं—मदीयं राष्ट्रम्'—इति वि०।

† 'ब्रह्म अन्नम्'—इति वि०।

‡ ऋ० वे० १, २, २७, ३।

"अर्वाङ्" अस्मदभिमुखः अश्विनोः "रथः" "यातु" अस्मदभिमुखो गच्छतु । कीदृशः ? "त्रिचक्रः" चक्र-त्रय-युक्तः, "मधुवाहनः" मधु-वोढ़ा, "जीराश्वः" शीघ्रगाम्यश्वोपेतः,* "सुष्टुतः" अतएवास्माभिः स्तूयमानः, "त्रिवन्धुरः" निम्नोन्नत-काष्ठ-त्रयोपेतः सारथ्याश्रय-स्थानं वन्धुरं तद्युक्तः,† "मघवा" धनवान्, "विश्वसौभगः" सर्व-सौभाग्योपेतः । ईदृशोऽश्विनोः रथः "नः" अस्माकं "द्विपदे" पुत्रादि-प्रजायै "चतुष्पदे" पशवे च "शं" सुखम् "आ वक्षत्" आवहतु वहेर्लिटि अड़ागमः ॥ ३ ॥ १७

॥ काबम् ॥ अबोवा । धियग्निऽर्मउदायि । तिष्ठ राया२ः । व्युषाश्चन्द्रामह्या । वोअर्चायिषा२ । आयुक्षातामश्विनाया । तवेराथा२३म् । प्रासा३वोद्देवः सवायिता२३ । जागा३त्या५र्थाइ५ईक् ॥(१) यद्योवा । जाथेवृषणामा । श्विनाराथा२म् । घृतेननोमधुनाक्षा । त्रमुक्षाता२म् । अस्माकम्ब्रह्मपृतना । सुजिन्वाता२३म् । वाया३न्धाना । शूरसाता२३ । भाजा३यिमा५हाई५ई

* 'जीराश्वः—यजमान-पर्यौषि वै जीराः अथवा जीरक-वर्णाः'—इति वि० ।

† 'त्रिवन्धुरः—ईषा-अपेक्षाऽत्रयूतः'—इति वि० ।

२ १ र १ र १
यि ॥(२) अर्वावा । त्रिचक्रोमधुवा । हनोराथा२ ।
१र र र र २ १ १ र र
जीराश्वोअश्विनोर्य्या । तुसुष्टूता२ः । त्रिबन्धुरोमघवा
२ र १ १ २ ४ ५ २ १
वायिश्विसौभागा२३ः । शान्ना३भावा । अद्विपादा२३
१ १ ४
यि । चातु३ष्पापुदा६५६यि(३) ॥ १७ * ॥ [१] १७

अथ प्रतेधाराअसंश्चतइति चतुर्ऋचं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
प्रतेधाराअसश्चतोदिवोनयन्तिवृष्टयः ।
२ ३ १ २ ३ १ २
अच्छावाजꣳसहस्रिणम् ॥ १ † ॥

"हे सोम ! "ते" तव "असश्चतः" सङ्ग-रहिताः "धाराः" सहस्रिणम् अपरिमित-सङ्ख्याकं "वाजम्" अन्नं मत्वा अस्मदर्थं "प्र यन्ति" प्रगच्छन्ति । तत्र दृष्टान्तः—"दिवो न वृष्टयः" यथा द्युलोकाद् वर्षधारा निःसङ्गाः प्रजानामपरिमितमन्नं प्रतियन्ति तद्वदित्यर्थः ॥ १ ॥

---

* ऊ० गा० १८प्र० १ख० १७गा० ।

† ऋ० सं० ७, १, १४, १ ।

अथ द्वितीया।

३ २ ३ १ १ २ ३ १ २ १ २
अभिप्रियाणिकाव्याविश्वाचक्षाणोअर्षति।
१ २ ३ १र २र
हरिस्तुञ्जानआयुधा ॥ २ * ॥

"हरिः" हरित-वर्णः सोमः "विश्वा" विश्वानि "प्रियाणि देवानां प्रीति-कराणि "काव्या" कर्माणि† "चक्षाणः" पश्यन् "आयुधा" स्वकीयान्यायुधानि‡"तुञ्जानः" राक्षसान् प्रति प्रेरयन् "अभ्यर्षति" यागं प्रति गच्छति ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १
समर्मृजानआयुभिरिभोराजेवसुव्रतः।
३ १र १र
श्येनोनवꣳसुषीदति ॥ ३ ¶ ॥

"सुव्रतः" सुकर्मा "सः" सोमः "आयुभिर्मनुष्यैर्ऋत्विग्भिः "मर्मृज्यमानः" "इभः" गत-भयः "राजा इव" यथा राजा, "श्येनो न" यथा श्येनः, तथा "वꣳसु" केषु वसतीवरीषु "सीदति" ॥ ३ ॥

---

* ऋ० वे० ७, १, १४, २।

† 'काव्या—कविलेन'—इति वि०।

‡ 'आयुधा—आयुधानि द्रोण-कलश-प्रभृतीनि सह-चमस-पर्यन्तानि'—इति वि०।

¶ ऋ० वे० ७, १, २४, १।

अथ चतुर्थी ।

२ ३ १ २   ३ २उ ३ १ २ ३ १र   २र
सनोविश्वादिवोवसूतोपृथिव्याअधि ।
३   १ २ ३ १ २
पुनानइन्दवाभर ॥ ४ * ॥ १८

हे "इन्दो" सोम!, "पुनानः" पूयमानस्त्वं "दिवः अधि" "पृथिव्याः" अधि पृथिव्यां स्थितानि [अधीति सप्तम्यर्थानुवादी] "विश्वा" विश्वानि "वसु" वसूनि धनानि "नः" अस्मभ्यम् "आ भर" आहर ॥ ४ ॥ १८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकोनविंशस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १९ ॥

॥ इति अष्टमः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे ऊनविंशोऽध्यायः† समाप्तः ॥ १९ ॥

---

* ऋ० वे० ७, १, २४, ४ ।

† 'अष्टमः प्रपाठकः समाप्तः'—इति वि॰ सर्व-सम्मतश्च ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ २०॥

## ॥ अथ विंशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

प्रास्यधारेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २    ३ १ २ ३१र   २र
प्रास्यधारा अक्षरन्वृष्णः सुतस्यौजसः* ।
३ १र   १र ३ १ २
देवाꣳ अनुप्रभूषतः ॥ १ † ॥

"अस्य" सोमस्य "धाराः" "ओजसः" ओजसा बलेन‡ "अक्षरन्" असिञ्चन्। कीदृशस्य? "वृष्णः" वर्षुकस्य "सुतस्य" अभिषुतस्य "देवान्" "अनु" "प्रभूषतः" भवितुमिच्छतः¶ ॥१॥

---

* 'ओजसा'—इति ऋ० पाठः।

† ऋ० वे० ६, ८, १९ १।

‡ ऋग्वेदीय-पाठमनुसृत्यैवैवं कृतोयाम्-विपरिणामेनेयं व्याख्या। विवरणकारस्तु षष्ठ्यन्तमेव व्याचष्टे—'वीर्य-सम्पन्नस्य'—इति।

¶ 'देवान् प्रभूषतः—देवान् पूजयतः'—इति वि०।

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १
सप्तिम्मृजन्तिवेधसोगृणन्तःकारवोगिरा ।
१ २ ३ २ ३क १र
ज्योतिर्ज्जज्ञानमुक्थ्यम् ॥ २ * ॥

"सप्तिम्" अश्व-स्थानीयं सर्पण-स्वभावं वा सोमं "मृजन्ति" शोधयन्ति । के ? "गृणन्तः" स्तुवन्तः "कारवः" कर्म-कर्त्तारो ऽध्वर्य्वादयः "गिरा" स्तुत्या साधनेन । कीदृशं सप्तिम् ? "ज्योतिः" दीप्यमानं सोमं "जज्ञानं" जायमानं प्रवृद्धमित्यर्थः [ अथवा ज्योतिर्जायमानम् "अयं वै ज्योतिर्यत्सोमः"—इति श्रुतेः ] "उक्थ्यं" स्तुत्यम् ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ १ २
सुषहासोमतानितेपुनानायप्रभूवसो ।
१ २ ३ १ २
वर्द्धासमुद्रमुक्थ्य† ॥ ३ ‡ ॥ १

हे "सोम !" "उक्थ्य" स्तुत्य ! "प्रभुवसो" प्रभूत-धन ! "पुनानाय" पूयमानस्य "ते" तव "तानि" तेजांसि "सुषहा" शोभनाभिभावुकानि । यस्मादेवं तस्मात् "समुद्रं" समुद्र-सदृशं तं "वर्द्ध" वर्द्धय रसेन पूरयेत्यर्थः ॥ ३ ॥ १

---

* ऋ० वे० ६, ८, १९, १ ।

† "उक्थ्यम्"—इति ऋ०-पाठः ।

‡ ऋ० वे० ६, ८, १९, ३ ।

अथैषेति द्विपदं द्वितीयं सूक्तम्।*

तत्र प्रथमा।

२ १ २ २उ २ २ २१ २ १ १ २ १ २
एषब्रह्मायऋत्वियइन्द्रोनामश्रुतोगृणे ॥ १ † ॥

"यः" "इन्द्रः"—इति "नाम" "श्रुतः" देव-समूहैः प्रख्यातः "एषः" "ऋत्वियः" ऋतौ वसन्तादौ काले भवः य एषः "ब्रह्मा" सर्वतः परिवृढः, तमहं "गृणे" स्तौमि ॥ १ ॥

अथ द्वितीया।

१र २र २ २ ३ २३ १ २ १ २
त्वामिच्छवसस्पतेयन्तिगिरोनसंयतः ॥ २ ‡ ॥

हे "शवसः" बलस्य "पते" पालकेन्द्र! [अतिशयेन बलवन्नित्यर्थः। तथा शाखान्तरे बलेनोत्पत्तित्वं श्रूयते—"उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवतान्वि सृज्यते"—इत्यारभ्य "तस्मात्ते वीर्यवन्तः"—इति श्रुतेः] "त्वामित्" त्वामेव "संयतः" न सम्यङ् नियच्छतः पुरुषस्येव वेदस्य सम्बन्धिनः "गिरः" स्तुतयः "यन्ति" प्राप्नुवन्ति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ १ २ ३२
विस्रुतयोयथापथः० ॥ ३ ¶ ॥२

---

* 'अस्मात् प्रभृत्यतिप्रायश्चित्तानि'—इति वि०।

† ऋ० सा० ५, २, १, २ (भा० ८८५ पृ०)।

‡ नैषाऽन्यत्र क्वापि दृश्यते।

¶ ऋ० सा० ५, २, १, ७ (२भा० ९०४ पृ०।

—इत्यृचः प्रतीकम्, तस्यादिती व्याख्यानं छन्दसि द्रष्टव्यम्
॥ ३ ॥ २

५र १ ४ ५ १ २ १
॥ कालेयम् ॥ एषा३ग्राह्मा । या२३ः । आ३ । त्वा
२ १ २र १ २ ५ ४
२३ । याः । इन्द्रोनामौ । वा३४३ओ३४वा । श्रुतोपू
५ २ ४ ५ १ २ १
गृणायि ॥(१) तुवा३मायिच्छ्रा । वा२३ । सा३ः । पा२
२ १ २ १ २ ५ ४
३ । तायि । यन्तायिगिरौ । वा३४३ओ३४वा । न
५ १ ४ ५ १ २ १
सा५यताः ॥(२) विश्व३तायाः । या२३ । या३ । पा२
१ १ ३ २ २ ५ ४
३ । याः । इन्द्रात्वधौ । वा३४३ओ३४वा । तुरा५त
४
याः । होपुई । डा(३) ॥ ८* ॥ [१] २

अथात्वारथमिति ऋचं तृतीयं सूक्तम्,

तत्र प्रथमायाः ।

१ १ १ ३ १ ३ १ २
आत्वारथंयथोतये० ॥ १ † ॥

---

* ऊ० गा० २१प्र० १ख० ८सा० ।

† छ० आ० ४, २, २, २ (१भा० ७१२पृ)—ऋ० वे० ६, ३, १, १ ।

[—इति प्रतीकमत्र पठ्यते। तत्रापि व्याख्याता।] हे इन्द्र! "त्वा" त्वां वयम् "आवर्त्तयामसि" आवर्त्तयामः। किमर्थम्? "ऊतये" अस्माकं रक्षणाय "सुम्नाय" सुखाय च। किमिव? "रथं यथा" ऊतये सुखाय चावर्त्तयति तद्वत्। कीदृशं त्वाम्? "तुविकूर्मिम्" बहु-कर्माणम् "ऋतीषहं" हिंसकानामभिभवितारम्। हे इन्द्र! "शविष्ठ" अतिशयेन बलवन्! हे "सत्पते" सतां पालक! त्वामिति समन्वयः॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ १ ३ १ २
तुविशुष्मतुविक्रतोशचीवोविश्वयामते।
१ २ ३ २
आपप्राथमहित्वना॥ २ *॥

हे "तुविशुष्म" प्रभूत-बल! अतएव "तुविक्रतो" बहु-विचित्र-कर्मवन्! [अथवा बहुप्रज्ञ! कर्मणः पृथगभिधानात्] हे "शचीवः" बहुकर्म्मोपेत! पूजनीयेन्द्र! "विश्वया" विश्व-व्याप्तेन "महित्वना" महत्त्वेन "आ पप्राथ" आपूरितवानसि अविशेषाद् विश्वमित्यर्थः॥ २॥

अथ तृतीया।

१ २ ३ १ ३ १र २र ३ १ १ ३ १ २
यस्यतेमहिनामहःपरिज्मायन्तमीयतुः।
३ १ १ २ ३ १ २
हस्तावज्रꣳहिरण्ययम्॥ ३ †॥ ३

---

* ऋ० वे० ६, ४, १, २। † ऋ० वे० ६, ४, १, ३।

"महः" महतः "यस्य" "ते" तव [यच्छब्दः प्रकृत-परामर्शी, प्रकृत-सूक्तमृग्द्वयं तत्रत्य-तुविकूर्मिमृतीषहमित्याद्युक्त-लक्षणस्य तव] "महिमा" महत्वेन "हस्ता" तव हस्तौ "अभायन्त" पृथिव्यां सर्वतो व्याप्नुवन्त "हिरण्ययं "वज्रम्" हस्तौ "ईयतुः" परिगृह्णीतः, सर्वदास्माकं भय-निवारणायेति भावः ॥ ३ ॥ ३

आयःपुरमिति त्वृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

२३ ११ २३ १२३१२ ३ १२३२ १२
आयःपुरन्नार्मिणीमदीदेदत्यःकविर्नभन्योऽ३नार्वा ।

२ २ १२३२ ३ १ २
सूरोनरुरुक्वाञ्छतात्मा ॥ १ † ॥

"यः" अग्निः "नार्मिणीं" नर्मवतां यजमानानां सम्बन्धिनीमुत्तरवेदिं‡ [यद्वा नृणां मनसि स्थितां यजमानानां यज्ञाद्यर्थं-भूमिं प्रत्यक्षागमन-मनीषा विद्यते ताम्] "पुरः" तत् स्थानं "अदीदेदत्" दीपयति । कीदृशोऽयम्? "अत्यः" अपेक्षित-देशं प्रत्यतनशीलः, "कविः" क्रान्तदर्शी । तत्र दृष्टान्तः— "अर्वा" अरण-कुशलः, "नभन्यः न" नभस्याकाशे भवः नभ-

* विवरण-मते—"हस्तावज्रभ्" समास-निष्पन्नमेकम्पदम्, अतएव 'हस्तावज्र'—हस्ते यस्य वज्रं विद्यते स हस्तवज्रः, छान्दसं दीर्घत्वं हस्त-शब्दस्य'—इति तद्व्याख्यानम्। परमेतदुपेक्ष्यं पद-पाठ-विरोधात् स्वरशास्त्र-विरोधाच्च।

† ऋ० वे० १, २, १८, १।

‡ 'नार्मिणीं—नृणां सुखम् सुखकरीमुत्तरवेदीम्'—इति वि०।

न्यो वायुरिव*। किञ्च, "शतात्मा" यजमान-स्पृहापेक्षया वा अपरिमित-रूपत्वम् [अथवा मित्र-वरुणादि-रूप-भेदेन। अग्ने-र्मित्रादि-रूपत्वं 'त्वमग्ने वरुणोऽजायत'—इति, हे अग्ने! त्वं वरुणो जायसे वरुणो भवति ; यत् यस्मात् "इन्द्रं मित्रं वरुण मग्निमाहुः"—इत्यादिषु-श्रुतिषु प्रसिद्धम्, अग्निमेव इन्द्राद्यात्मक माहुरिति द्वितीयमन्त्रस्यार्थः] तादृशोऽयं "सूरो न" सूर्य इव "रुरुक्वान्" दीप्यमानः [रुच् दीप्तौ (भ्वा० आ०), छान्दसस्य लिटः क्वसुः] अतस्तादृशोऽग्निरस्मिन् उत्कृष्टो वर्त्तत इति पूर्व्वत्रा-न्वयः ॥ १ ॥

अथ द्वितीया।

२ १ १२ ३ १ १ ३ २ ३
अभिद्विजन्मात्रीरोचनानि

२ ३ १ २ ३ १ १
विश्वारजाꣳसिशुशुचानोअस्थात्।

१ ३ १ २ ३ २ २ १ २
होतायजिष्ठोअपाꣳसधस्थे ॥ २ † ॥

अयमग्निः "द्विजन्मा" द्वाभ्यामरणिभ्यां जायमानः‡ यद्वा, मथनात् प्रथमं जन्म, उत्पत्त्यनन्तरम् आधान-पवमानेष्ट्यादि-संस्कार-रूपं द्वितीयं जन्म, एवं द्विजन्मत्वम् [अथवा, द्यावा पृथिवीभ्यामुत्पन्नत्वात्, तादृशोऽग्निः] "त्रीरोचनानि" त्रीणि

* 'मघन्यः—ममन्दमीयः न भिद्यते केनचित्'—इति वि०।

† ऋ० वे० २, २, १८, ४।

‡ 'द्विजन्मा—व्रतोपनयन-संस्कारः'—इति वि०।

दीप्यमानानि चित्यादि-स्थानानि गार्हपत्यादीनि वा "शुशु-चानः" प्रकाशयन् न केवलं भीरुव किन्तु "विश्वा" "रजांसि" सर्वाण्यपि रञ्जनात्मकानि चित्यादि-लोकान् "शुशुचानः" दीपयन् "होता" देवानामाह्वाता "यजिष्ठः" यष्टृतमः सन् "अपां" प्रोक्षणाद्युदकानां "सधस्थे" सह-स्थाने याग-देशे "अस्थात्" तिष्ठति ॥ २ ॥

अथ तृतीया।

२ १ १ २ २ १ २
अयꣳस होता यो द्विजन्मा
१ २ ३ १ २ २ २ ३ २
विश्वा दधे वार्याणि श्रवस्या।
२ ३ १ २ ३ १ २ ३ १ २
मर्त्तो यो अस्मै सुतुको ददाश ॥ ३ * ॥ ४

"द्विजन्मा" "सः" एव "होता" होम-निष्पादकः [आह्वाता वा देवानाम् अरणीभ्यामुत्पन्नस्यैव गार्हपत्य-द्वारा आहवनीयत्वात्] सोऽयं "विश्वा" विश्वानि "वार्याणि" वरणीयानि कर्माणि [ईड-वन्द-वृ-शंस-दुहाण्यतः (६, १, २१४)"—इत्याद्युदात्तत्वम्] "श्रवस्या" श्रवणस्यया [श्रवो हविर्लक्षणं यशो वा तदिच्छाया श्रवः-शब्दात् क्यजन्तात् "अ प्रत्ययात् (३,३,१०२)" इति भावे अ-प्रत्ययः] अन्नाय यशसे वा "दधे" धारयति। "अस्मै" उक्त-स्वरूपायाग्नये "यः" "मर्त्यः" "ददाश" ददाति स "सुतुकः" शोभन-पुत्रो भवति ॥ ३ ॥ ४

* ऋ० वे० ३, ३, १८, ५।

५र २ ४र ५ ५ १र र
॥ साकमश्वम् ॥ आयःपूरन्नार्म्मिणोऽ६मा। दीदि

र र १ २र १ २
द्यःकविर्न्नभन्योनार्वा २ह्व। रोना २रुह्व। कार्ज्जा२३हा३

१ ५ ५ ५ २ ४र ५ ५
४३यि। ता२३४त्मोऽ६हायि ॥(१) अभिद्वा३यिजन्मा त्रीऽ६रो।

१र र र र र र १ २
चनानिविश्वारजाऽसिमुहुभुचानोअस्थाद्रो २ता। यजा२

र १ २ १ ५ ५
यिष्ठोआ। पाऽसा२३द्या३४३यि। धा२३४स्थोऽ६हायि ॥(२)

५ २ ४र र र ५ ५ १र र र र र
अयऽसा३होतायोद्वा६यिजा। न्माविश्वादधेवार्य्याणिश्र

र १ २ १ र २
वस्यामर्त्तो १याः। अस्मा २यिसुतू। को दा२३द्या३४३यि।

१ ५ ५
दा२३४श्रोऽ६हायि(३) ॥ ६ * ॥ [१] ४

अथाग्नेतमद्याश्वमिति त्र्यचात्मकं पञ्चमं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ २ ३ २उ ३ १ २ ३ १ २ १ २ ३ १ २
अग्नेतमद्याश्वन्नस्तोमैःक्रतुन्नभद्रऽहृदिस्पृशम्।

३ १ २ ३ १ २
ऋध्यामातओहैः ॥ १ ॥

* ऊ० गा० ११प्र० २था० ६गा०।

† ऋ० आ० ५, १, ५, ८ (१ भा० ८८० पृ०)=ऋ० वे० ३, ५, १०, १=य० वे० १५, ४४।

हे "अग्ने !" "अद्य" अस्मिन्नहनि वयमृत्विगादयः "ओहैः" इन्द्रादि-प्रापकैरस्माकं स्तोमैः स्तोत्र-समूहैः "तम्" प्रसिद्धं त्वाम् "ऋध्याम" समर्धयाम । कीदृशं त्वाम् ? "अश्वं न वोढारम्" अश्वमिव हविषो वाहकम्, "क्रतुं न" कर्त्तारमिव उपकारिण-मित्यर्थः । तथा "भद्रं" भजनीयं "हृदिस्पृशं" हृदयङ्गमम् अतिशयेन प्रियमित्यर्थः ॥ १ ॥

अथ द्वितीया ।

१ ३क २र ३ १ २ ३ १ ३ १ २ ३ १
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।

३ २ ३ १ २ ३ २ ३ १ २
रथीर्ऋतस्य बृहतो बभूथ ॥ २ * ॥

"अधा हि" इदानीमेव हे "अग्ने !" "क्रतोः" अस्मदीय-यागस्य "रथी" नेता "बभूथ" भवसि ["छन्दसि लुङ्लङ्लिटः (३, ४, ६)"—इति भवतेर्वर्त्तमानार्थे लिटि सिपस्थल् "आर्द्ध-धातुकस्येड्वलादेः ( ७, २, ३५ )"—इतीडागमे प्राप्ते "बभूथा ऽततन्थ (७, २, ६४)"—इति निपातनादिड़भावः । कीदृशस्य यागस्य ? "भद्रस्य" भजनीयस्य†, "दक्षस्य" प्रवृद्धस्य‡, "साधोः" अभीष्ट-फलानां साधकस्य सत्यभूतस्य, "बृहतः महतः ॥ २ ॥

---

* ऋ० वे० ३, १०, १=य० वे० १५, ४५ ।

† 'भद्रस्य—शोभनस्य'—इति वि० ।

‡ 'दक्षस्य—यजमानस्य'—इति वि० ।

अथ तृतीया ।

२ १ २ ३ १र १र २ २ १र १र
एभिर्नो अर्कैर्भवा नो अर्वाङ्स्वा३ऽऽर्ण ज्योतिः ।

२ ३ १ २ ३ १ २ १ २
अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ * ॥ ५

हे "अग्ने!" "ज्योतिः" ज्योतिष्मान् "स्वः न" सूर्य इव,† तथा "विश्वेभिः" विश्वैः समस्तैः "अनीकैः" तेजोभिः "सुमनाः" शोभन-मनस्कस्त्वं "नः" अस्मदीयैः "एभिः" एतैः "अर्कैः" अर्चनीयैः स्तोत्रैः नानाविधैः हविर्लक्षणैः अन्नैर्वा [अथवेन्द्रादि-देवैः सह नोऽस्माकम्] "अर्वाङ्" अभिमुखो भवेति‡ ॥ ३ ॥ ५

५ २ २ ४र ५ ५ १र र
॥ साकमश्वम् ॥ अग्ने ता३मद्या श्वा६न्ना । स्तोमैः क्रतु

१ २ १ २ २
अभद्र२ंहा२हृयि । स्पृशा२म्हध्या । माता२३हा३४३

१ ५ ५ ५र १र ४र ५ ५
यि । ओ२३४वो६हायि ॥(१) अधाह्या३अग्ने क्रतो६र्भा ।

१ र र १ १ १ र
द्रस्यदक्षस्य साधोरथा२यिरा । तस्या२म्हा । तोवा२३

२र १ ५ ५ ५र २ ४र ५
हा३४३यि । भू२३४वो६हायि ॥(२) एभिर्नो३अर्कैर्भवा

---

* ऋ० वे० ३, ५, १०, ३=य० वे० १५, ४९ ।

† 'स्वर्ण्ज्योतिः—न-शब्दउपमार्थीयः । यथा स्वर्ग-लोकस्य आदित्यो ज्योतिः तद्वत् समस्तस्य लोकस्य ज्योतिर्भव'—इति वि० ।

‡ 'अर्वाङ्—समीपे'—इति वि० ।

५ १ २ २ १ २२ १
६नाः । अर्वाङ्स्वर्णज्योतिरग्रा२यिवायि । स्वेभा२यिःसु

२ २२ १ ५ ५
मा । नाभा २ ३ वा ३ ४ ३ यि । ना२३४यिकौ६वायि

(३) ॥ ७ * ॥ [१] ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

——ooo——

अथ द्वितीये खण्डे—

अग्ने विवस्वदिति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ १ ३ १ २ ३ १२ २२
अग्ने विवस्वदूषसश्चित्र७ँराधो अमर्त्य ।

१ ३ १ २ ३ २ ३ २ ३ १ ३ २ १ २
आ दाशुषे जातवेदो वहा त्वमद्या देवा७ँ उषर्बुधः ॥ १ † ॥

हे "अग्ने!" त्वम् "उषसः" उषोदेवतायाः सकाशात् "राधः" धनं "दाशुषे" हविर्दत्तवते यजमानाय "आ वह" आहवनीयं प्रापय । सोऽग्निर्विशिष्यते—"अमर्त्य" मरण-रहित !

---

* ऊ० गा० ११प्र० १ख० ७गा० ।

† ऋ० आ० १, १, ४, ६ (१ भा०१५८पृ०)=ऋ० वे० १, १, २८, १ ।

"जातवेदः" जातानां वेदितः ! [तमेतं शब्दं यास्को व्याचष्टे—"जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जातेजाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति च (निरु० दै० १, १९)"—इति। कीदृशं राधः? "विवस्वत्" "विशिष्ट-निवासोपेतं, "चित्रं" नानाविधं। किञ्च, "अद्य" अस्मिन् दिने "उषर्बुधः" उषःकाले प्रबुद्धान् देवानावह[विवस्वत्—विवासनं विवः तद्युक्तम्, वस निवासे (भ्वा० प०), वि-पूर्वादन्तर्भावित-ण्यर्थात् सम्पदादि-लक्षणो भावे क्विप् (३,३,९४वा०), "तदस्यास्ति (५,२,९४)"—इति मतुप्, "मादुपधायाः (८,२,९)" इति वत्वम्, "तसौ मत्वर्थे (१,४,१९)"—भत्वेन पदत्वाभावादुत्वाभावः, वृषादित्वात् (६,१,२०३) आद्युदात्तत्वम्। जातवेदाः—जातानि वेत्तीति जातवेदाः"गति-कारकयोरपि पूर्वपदप्रकृतिस्वरश्च (उ० ४, २२६)"—इत्यसिः; यद्वा वेद इति धननाम (निघ० २, १०, ४), जातं धनं यस्य स जातवेदाः, आमन्त्रित-निघातः (८, १, १९)। वद्दा—"द्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। उषर्बुधः—उषसि बुध्यन्त इत्युषर्बुधः [बुध अवगमने (भ्वा० प०) "क्विप् च (३, २, ७६)" —इति क्विप्, कृदुत्तरपद-प्रकृतिस्वरत्वम् (६, २, १३९) ॥ १ ॥

अथ द्वितीया।

१२  २  ३१२   २२  ३१ ३१२ ३१२३१  १

जुष्टोहिदूतोअसिहव्यवाहनोग्नेरथीरध्वराणाम्।

३१२१ २ ३१ १३१ २३१११ १ २३१

सजूरश्विभ्यामुषसासुवीर्यमस्मेधेहिश्रवोबृहत् ॥२*॥ ६

हे "अग्ने!" त्वं जुष्टत्वादि-विशेषण-युक्तोऽसि "जुष्टः" ["नित्यं मन्त्रे (६, १, २१०)"—इत्याद्युदात्तत्वम्] सेवितइत्यर्थः "असि" [सिपि "तासस्त्योर्लोपः (७, ४, ५०)"—इति स-लोपः, "हि च (८, १, ३४)"—इति निघात-प्रतिषेधः]। "दूतः" देवानां विशेष-वार्त्ताहरः, अतएव "हव्यवाहनः" "हव्येऽनन्तःपादम् (३, २, ६६)"—इति ल्युट्, योरनादेशः (७, १, १), लित्वादाद्युदात्तत्वे (६, १, १९७), कृदुत्तरपदप्रकृतिस्वरत्वम् (६, २, १३९)] हविषो वोढा, "अध्वराणां" क्रतूनां "रथी" रथ-स्थानीयः [तथाच मन्त्रान्तरं ब्राह्मणेनैवं व्याख्यातम्—"रथी-रध्वराणाम्"—इत्यादि "एष हि देवरथः"—इति, ब्राह्मणान्तरञ्च "रथी रध्वराणामित्याह रथोह वा एष भूतो देवेभ्यो हव्यं वहति"—इति] तादृशस्त्वम् "अश्विभ्यां"† देवाभ्याम् "उषसा" देवतया च "सजूः" सहितो भूत्वा "सुवीर्य्य" शोभन-वीर्य्योपेतं "बृहत्" प्रभूतं "श्रवः" अन्नम्† "अस्मे धेहि" अस्मासु क्षिप ॥ २ ॥ ६

---

* ऋ० वे० १, ३, २८, २।

† 'यशो मा'—इत्यधिकं वि०।

१२ २२ १ २
॥ वारवन्तीयम् ॥ अग्नेविवाऔहोहायि। स्वादूषा
५ २ २२ १ ५ १२२
२३४साः। चित्रᳩराधोअमर्त्तायोर२३४हायि। आदा
२२ २२ २१ १२ ४२ ५ ११ ५
शुषेजातवेदोवहातू३४। औहोवा। इहा२३४हायि।
२ ३ ५ ११२ १२ १२ १ १२ ४२
उऊवा२३४वाम्। अद्यादे। वाᳩउषबू३४। औहो
५ ५२ ५ १२ १ ५२
वा। इहा२३४हायि। औहो३१२३४। धाः। एहि
५ २ २ २२ २ १ २ २ ५
याह्हा ॥(१) अद्यादेवाᳩऔहोहायि। उषबू२३४धाः।
२१ ५ १२२ २ २ १२ ४२
जुष्टोहा२३४यिहायि। दूतोअसिहव्यवाहा३४। औहो
५ १२ ५ १ २ ५ २१२२ १
वा। इहा२३४हायि। उऊवा२३४नाः। अग्ने। र। था
० १ १२ ४२ ५ ११ ५ १२ १
यिरध्वरा३४। औहोवा। इहा२३४हायि। औहो३१
५२ ५ १२ २२ १ २
२३४। णाम्। एहियाह्हा ॥(२) अग्नेरथाऔहोहा
२ ५ ११ ५ १ २
यि। आध्वारा२३४णाम्। सजूरा२३४हा। अश्विभ्यामु
२ २ १ १२ ४२ ५ ११ ५ २
षसासुवीरा३४। औहोवा। इहा२३४हायि। उऊ
२ ५ ११२ १२ १ ०२ १ १२ ४२ ५

दूहा२३४हायि । औहो३१२३४ । हात् । एहियाईहा ।
होऽ५ई । डा(३) ॥ १७ * ॥ [१]

॥ महावामदेव्यम् ॥ आऽ५ग्ने । विवा३स्वा३दुषसाः । चा
यि । च९राधोअमर्त्यिअदाशुषेजातवेदोवहात् । वाम् ।
औ२३होहायि । अद्या२३देवा९ । उषौहो३ । ऊम्मा
२ । बूऽ२धो३५हायि ॥(१) आऽ५द्या । देवा३९ऊ३ष
र्बुधाः । जू । ह्योहिदूतोअसिहव्यवाह । ना । औ३
होहायि । अग्ना२३यिरथायिः । अध्वौहो३ । ऊम्मा२ ।
राऽ२णो३५हायि ॥(२) आऽ५ग्ने । रथा३यिरा३ध्वरा
णाम् । सा । जूरश्विभ्यामुषसासुवीरि । याम् । औ
२३होहायि । अस्मा२३यिधेहायि । अवौहो३ । ऊम्मा
२ । बूऽ२हो३५हायि(३) ॥ १८ † ॥ [२]

* ज० गा० ११प्र० २ख० १७ग्रा० ।
† ज० गा० ११प्र० २ख० १८ग्रा० ।

१ र १ २ १
॥ अध्यम्॥ अग्नेविवा२स्वत्। उषसोवा। चित्र९

२र १ १ ३ २ १ र २र १र२र र र र १ १ १र २र
राधो। अमर्त्तिया। आदाशुषेजातवेदोवहात्वमद्याद

१र २ १र १ र
वा९उ। षा२३:। बुधाउवा। अधिया२॥(१) अद्या

र र १ २ १र २ १ २र ३र २ १
देवा९२उ। षबु धोवा। जुष्टोहिदू। तोअसिद्दा।

र १ १र २ १र २ १ २ १र
व्यवाहनोग्नेरथीरध्व। रा२३। णाउवा। अधिया२॥(२)

१र र १ २ १र २ १ २र ३ २ १
अग्ने रया२यिर। ध्वराणोवा। सजूरश्वी। भ्यामुषसा।

र २ १र र २ १ २ १र
सुवीरियमस्मेधेहिश्र। वो२३। बृहाउवा। अधिया२।

१ २ १
ए२३हिया३४३। ओ२३४५ई। डा(३)॥१८*॥[३]६

अथ विधुन्दद्राणमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ १र २र ३ १र
विधुन्दद्राण९समनेबह्वनां

२र ३ १ २ ३ १ २
युवान९सन्तम्पलितोजगार।

---

* ऊ० गा० २१प्र० २ख० १९सा०।

३ १ २  ३ १ २  ३ २३
देवस्यपश्यकाव्यम्महित्वाद्या

३ २ ३ १२  १२
ममारसह्यःसमान ॥ १ * ॥

अनया कालात्मकइन्द्रः स्तूयते—"विधुं" विधारकं सर्वस्य युद्धादेः कर्त्तारं [वि-पूर्वो दधातिः करोत्यर्थे], तथा "समने" [अननमनः प्राणनं सम्यगननोपेते] सङ्ग्रामे "बह्वनां" शत्रूणां "दद्राणं" द्रावकम्, ईदृक्-सामर्थ्योपेतं "युवानं" सन्तं पुरुषं "पलितः" जरा "जगार" निगिरन्तीन्द्राज्ञया। एवमुक्त-लक्षणं वक्ष्यमाण-लक्षणञ्च देवस्य कालात्मकस्येन्द्रस्य "महित्वा" महत्त्वेनोपेतं "काव्यं" सामर्थ्यं "पश्य"। हे जनाः! तथा जरसा प्राप्तः "अद्य" "ममार" म्रियते, "सः ह्यः" परेद्युः "समान" सम्यक् चेष्टते पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः [तदेवं चत्वारि नामानि शारीराण्युक्तानि बहुङ्मन्त्रेषु] ॥१॥

अथ द्वितीया।

१ २  ३ १ २ ३ १ ३ २ ३
शाक्मनाशाकोअरुणःसुपर्ण

३ १२  १२ ७ १२ १२
आयोमहःशूरःसनादनीडः।

२ ३ १ २ ३ २३  ३
यच्चिकेतसत्यमित्तन्नमोघं

१ २ ३ २ ३ २३ ३ १  १२
वसुस्पार्हमुतजेतोतदाता ॥ २ † ॥

---

* छ० आ० ४, १, ४, ३ (१भा० ६५८ पृ०)=ऋ० वे० ८, १, १९, ५। अथ० वे० ९, १९, ९।  † ऋ० वे०,८, १, १७, १।

"शाक्मना" [शक्मेव शाक्मं, शाक्मना] बलेन* "शाकः" शक्तः [स्व-शक्तौ च सर्वं कर्त्तुं शक्त इत्यर्थः, नहीन्द्रस्य सहायान्तरापेक्षास्ति इन्द्रत्वादेव], "अरुणः" अरुणवर्णः "सुपर्णः" कश्चित् शोभन-पर्णः पक्षी "आ" गच्छतीत्यध्याहारः [उपसर्ग-श्रुतेर्योग्य-क्रियाध्याहारात्]। "यः" "महः" महान् "शूरः" विक्रान्तः "सनात्" पुराणः† "अनीड़ः" नीड़स्याकर्त्ता। [नहीन्द्रोऽग्निवत् क्वचिदपि यज्ञे निकेतनं करोति। एवं सुपर्ण-रूपेणेन्द्र माह—] स पक्षीन्द्रो "यत्"‡ "चिकेत" कर्त्तव्यत्वेन जानाति तत् "सत्यम् इत्"¶ सत्यमेव "न" तु "मोघं" व्यर्थं भवति। स "स्पार्हं" स्पृहणीयं "वसु" धनं "जेता" जयति शत्रुभ्यः सकाशात्। "उत" अपिच "दाता" स्तोतृभ्यः प्रयच्छति ["न लोकाव्यय (२, ३, ६९)"—इत्यादिना षष्ठी-प्रतिषेधः ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३
ऐभिर्ददे वृष्ण्यापौंस्यानि

२ ३ १ २ ३ १ २ ३ २
येभिरौक्षद्वृत्रहत्याय वज्री।

---

* 'शाक्मना—शक्तत्वेन'—इति वि०।

† 'सनात्—सदैव'—इति वि०।

‡ 'यच्चिकेत—नपुंसक-लिङ्गमिदं पुंलिङ्गस्य स्थाने द्रष्टव्यम्। यः कश्चित् चेतयिता'—इति वि०।

¶ 'इत्—इति पद-पूरणः'—इति वि०।

१र २र ३ १ २ ३ १
येकर्मणःक्रियमाणस्यमह्न

२ ३ २ ३ १ १ ३ १
ऋतेकर्ममुदजायन्तदेवाः ॥ २ * ॥ ७

इन्द्रः "एभिः" मरुद्भिः सह "पौंस्यानि" बलानि "आ ददे" आदत्ते। "येभिः" यैः मरुद्भिः सहितः "वृत्रहत्याय" [ प्राण्युपकारक-वृष्ट्या आवरकाद्वा वृत्रो मेघः, तस्य हत्यायै ] मनुष्याणामुपद्रव-शमनायेत्यर्थः† । तथा च "वज्री" वज्रवान् इन्द्रः "औचत्" वर्षति। "ये" च मरुतः "देवाः" "मह्नः" महता तन्त्रेण क्रियमाणस्य वृष्टि-प्रदान-लक्षणस्य कर्मणः साहाय्यार्थम् "ऋतेकर्म" ऋत-कर्म वृष्टि-प्रदान-कर्म प्रति "उदजायन्त" उन्मुखा जायन्ते। स्वयमेव तैरेभिर्ददे इति समन्वयः ॥ २ ॥ ७

अथास्तिसोमइति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३१ ३ १र २र ३ १ २
अस्तिसोमोअयꣳसुतःपिबन्त्यस्यमरुतः।

३ २ ३ १ २ ३ १ २
उतस्वराजोअश्विना ॥ १ ‡ ॥

"अयं" पुरोवर्त्ती सोमः "सुतः" मरुदर्थमस्माभिरभिषुतः "अस्ति" विद्यते। तस्माद् "अस्य" अन्वादेशे एनं सुतं सोमं

* ऋ० वे० ८, १, १७, २।

† 'वृत्रहत्याय—वृत्रो मेघः तस्य हननेन'—इति वि०।

‡ छ० आ० २, २, ३, १० (१भा० ३९२पृ०)=ऋ० वे० ६, ६, २४, ४।

"स्वराजः" स्वयं दीप्यमानाः स्व-तेजसा नान्यदीयेनेत्यर्थः । तादृशाः "मरुतः" "पिबन्ति" । "उत" अपिवा "अश्विना" अश्विनौ च सोमं पिबतः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ३ २० ३ १ २
पिबन्तिमित्रोअर्यमातनापूतस्यवरुणः ।
३ २ ३ १ २
त्रिषधस्थस्यजावतः ॥ २ * ॥

न केवलं मरुतएव सोम-पातारः किन्तु एतेऽपि इत्याह— "मित्रः" सर्वेषां स्व-स्व-कर्मणि प्रवर्त्तकत्वात् सखिभूतः [यद्वा, यज्ञ-सम्बन्धिनः एतन्नामको देवः], "अर्यमा" च, "वरुणः" दुःखादीनां शत्रूणां वा चरितानि वारकः, एतन्नामकास्त्रयो देवाः "तना" तनेन ऊर्णा-स्तुक-निर्मितेन दशा-पवित्रेण [सुपां सु-लुक् (७, १, ३९)"—इति आत्वादेशः, तेनाद्युदात्तः, तना] "पूतस्य" परिशोधितस्य "त्रिषधस्थस्य" [सह तिष्ठन्त्यत्रेति सधस्थं स्थानं, "सधमादस्थयोश्छन्दसि (६, ३, ९६)"—इति सह-शब्दस्य सधादेशः, द्रोणकलशाधवनीय-पूतभृतात्मकानि त्रीणि स्थानानि तत्तथोक्तम्†] तादृशम्, "जावतः" स्तुत्या जननवन्तम्‡ इमं सोमं पिबन्तम् [द्वितीयार्थे षष्ठ्यः (२, १, ८५)] ॥ २ ॥

* ऋ० वे० ६, ६, १४, ५ ।

† 'त्रिषधस्थस्य—त्रिभिः स्थानैः स्थितस्य प्रातःसवनादिभिः'—इति वि० ।

‡ 'जावतः—जननवतः'—इति वि० ।

अथ तृतीया।

२१ ३ २ २३१र २र ३२ ३१२
उतोन्वस्यजोषमाइन्द्रःसुतस्यगोमतः।
३ १र २र
प्रातर्होतेवमत्सति॥ ३ *॥ ८

"उतो" अपिच† "इन्द्रः" "सुतस्य" अभिषुतस्य "गोमतः" गव्यैर्मिश्रणवतः "अस्य" [अन्वादेशः पूर्ववत्] दशापवित्रेण पूतस्य सोमस्य "जोषम्" पानरूपां सेवां "प्रातः" सवने "नु" चिप्रम् "आ मत्सति" [मदि स्तुत्यादिषु (भ्वा०आ०)]आभिमुख्येन स्तौति [ यद्वा सोम-सेवां कामयते ]। तत्र दृष्टान्तः—"होता इव" यथा होता प्रातःसवने देवानभिष्टौति देवांस्तोतुं अभिवाञ्छन्ति तद्वत्‡ ॥ ३ ॥ ८

अथ बण्महां असीति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३१२ ३ १ २
बण्महाँ असिसूर्य्यबडादित्यमहाँ असि।
३१२ ३१ २ ३ १२ ३ १ २ ३१ २
महस्तेसतोमहिमापनिष्टममह्नादेवमहाँ असि ॥१¶॥

* ऋ० वे० ६, ६, २४, ६।

† 'उत, उ—इति पद-पूरणौ'—इति वि०।

‡ 'यथा होता प्रथमः सर्वर्त्विजां भवयति'—इत्यादि वि०।

¶ छ० आ० ३, १, ४, ४ (१भा० ५६८पृ०)=ऋ० वे० ६, ७, ८, १।

हे "सूर्य!" त्वं "महान्" तेजसा अधिकः "असि" "बट्" सत्यम् नैतन्मिथ्येत्यर्थः। हे "आदित्य" अदितेः पुत्र! त्वं "महान्" बलेनाप्यधिकः "असि" "बट्" सत्यमेव। हे "पनिष्टम" अतिशयेन स्तोत्रैः स्तुत्यः [यद्वा, अतिशयेन व्यवहारकुशलः] "महः" महतः "सतः" भवतः "ते" तव "महिमा" स्तोतृभिः स्तूयतइति शेषः [पनिष्टम स्तोतृभिरस्माभिः स्तूयत इति वा]। हे "देव" द्योतनादि-गुण-युक्त! त्वं "मह्ना" महत्वेन "महान्" सर्वैः पूजनीयः "असि" भवसि॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ १ २
बट्सूर्यश्रवसामहाꣳअसिसत्रादेवमहाꣳअसि।
३ १ ३ १ २ ३क २र १ २ १ ३ २उ ३ १ २
मह्नादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यम्॥२*॥ ८

हे "सूर्य!" "श्रवसा" श्रवणेन "महान्" सर्वाधिकः "असि" [यद्वा, 'श्रवसा' अन्नेन 'महान्' दाता 'असि' स्तोतृभ्यो दातासि] "बट्" सत्यम्। हे "देव" द्योतमान! सूर्य! त्वं "देवानां" मध्ये "मह्ना" महत्वेन महानधिकः "असि" "सत्रा" सत्यमेव†। "असुर्यः" असुराणां हन्ता चासि। किञ्च, "देवानां" कामयमानानां स्तोतॄणां वा "पुरोहितः" असि हितोऽसि हितोपदेष्टासि बहु-हित-कार्यसि [अथवा 'पुरो-

* ऋ० वे० ६, ७, ८, २।
† 'सत्रा—सदा'—इति वि०।

स्थितः' पुरतो निहितोऽसि]। किञ्च तव "ज्योतिः" तेजः "विभुः" व्याप्तं सर्वतः "अदाभ्यं" केनाप्यहिंस्यञ्च ॥ २ ॥ ९

५ ३र २ ४ ५ र
॥ गौरीवितम् ॥ वण्म । स्वा३मा३ । सिद्दरिया ।
१ र र १ र २ ४र
वडादित्यमहा३असा२३यि । माद्दस्तेसा३१२३ । तोम
१ र र २ ४ ५ ४
हिमापना५यिष्टमा । माङ्कादेवा३१२३ । मद्दोवा । आ
५ ५ र ३र१ ४ र ५ १
पुसो६द्दायि ॥(१) मङ्का । देवा३ । मद्दा३असायि । म
र र र १ र १ ४र
ङ्कदेवमहा३असा२३यि । बाद्धुर्य्यंश्रा ३ १ २ ३ । वसाम
१ र र २ ४ ५ ४
द्दा३५असायि । साचादेवा३१२३ । मद्दोवा । आ५मो
५ ५ र ३र२ ४ र ५ १ र
६द्दावि ॥(२) सचा । देवा३ । मद्दा३असायि । सचा
र र १ र र २ ४र
देवमद्दा३असा२३यि । माङ्कादेवा३१२३ । नामसुर्य्यं पु
१ र २ ४ ५ ४
पुरो५हिताः । वायिभुज्योता३१२३यिः । अदोवा । भा
५
५यो६द्दायि(३) ॥ ५ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

* ऊ० गा० २१प्र० १ख० ५गा० ।

अथ तृतीये खण्डे—

उपनोहरिभिरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २३ १ २ ३ २ ३ १ २
उपनोहरिभिःसुतंयाहिमदानाम्पते ।

१ २३ १ २ ३ २
उपनोहरिभिःसुतम् ॥ १ * ॥

हे "मदानाम्पते" [माद्यन्त्यनेनेति मदाः सोमाः । "मदोऽनुपसर्गे (३, ३, ६७)"—इति करणे अप् प्रत्ययः ] सोमानां स्वामिन् ! इन्द्र ! "हरिभिः" [आश्रितेन हरिरित्यादिषु बहुनामख्यानां श्रुतेरत्रापि] शत-सहस्र-सङ्ख्याकैः सह "नः" अस्माकं यज्ञे "सुतम्" अभिषुतं सोमम् "उप याहि" तत्पानार्थं शीघ्रमागच्छ । पुनरुपनइत्यादिरादरार्था ॥ १ ॥

अथ द्वितीया ।

३ १२ ३२ ३ १ २ ३ १२ ३२ ३ १ २
द्विताया‌ेवृत्रहन्तमोविदइन्द्रःशतक्रतुः ।

१ २३ १ २ ३ २
उपनोहरिभिःसुतम् ॥ २ † ॥

"वृत्रहन्तमः" अतिशयेन वृत्रस्य हन्ता "शतक्रतुः" नानाविध-कर्मा "यः इन्द्रः" "द्विता" द्विधा‡ "विदे" [वृत्र-वधादी

* छ० आ० २, २, १.६ (१भा० ३४९पृ०) ऋ० वे० ६, ३, २७, १ ।

† ऋ० वे० ६, ६, २७, २।

‡ 'द्विता—कर्म-द्वयस्य कर्त्ता'—इति वि० ।

उग्रकर्मा, जगद्रक्षण-काले शान्तकर्मेति द्विप्रकारेण विदे] सर्वैर्ज्ञायते [विद ज्ञाने (अदा०प०), कर्मणि विहितस्य त-प्रत्ययस्य "लोपस्त आत्मनेपदेषु (७, १, ४१)"—इति त-लोपः। स त्वं "हरिभिः" सह "सुतं" सोमम् "नः" अस्माकम् "उप" याहि॥२॥

अथ तृतीया।

१र २र ३र १र २र ३ १ २
त्वꣳहिवृत्रहन्नेषाम्पातासोमानामसि।

१ २ ३ १ २ ३ १
उपनोहरिभिःसुतम्॥ ३ *॥ १०

हे "वृत्रहन्" वृत्रस्य पापस्य वा हन्तः! इन्द्र! "हि" [-शब्दो हेत्वर्थे] यस्मात् त्वम् "एषाम्" अस्मदीयानां† "पाता" पानकर्त्ता "असि" भवसि [एषामिति इदमोऽन्वादेशे अशादेशोऽनुदात्तश्च (२, ४, ३२)] अतस्त्वमश्वैः सह सोमं पातुमुपयाहि आगच्छ॥ ३॥ १०

अथ प्रवोमह इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३
प्रवोमहेमहेवृधेभरध्व

२ ३ १ २ ३ १ २
म्प्रचेतसेप्रसुमतिङ्कृणुध्वम्।

* ऋ० वे० ६, ६, २७, ३।

† 'एषां—सोमानां'—इति वि०।

१ २ ३ १र २र
विश्वाःपूर्वीःप्रचरचर्षणिप्राः ॥ १ * ॥

हे मदीया जनाः! "वः" यूयं "महे वृधे" महतां धनानां वर्द्धयित्रे अतएव "महे" महते इन्द्राय "प्रभरध्वम्" सोमान् प्रणयत। "प्रचेतसे" प्रकृष्ट-मतये इन्द्राय सुमतिं सुष्ठु मननीयं स्तोत्रं "प्र कृणुध्वम्" प्रकुरुत। अथ प्रत्यक्ष-स्तुतिः—हे इन्द्र! "चर्षणिप्राः" [चर्षणयो मनुष्याः] कामैः प्रजानां पूरयिता त्वं "पूर्वीः" पूरयित्रीः "विश्वः" प्रजाः "प्रचर" अभिगच्छ ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १
उरुव्यचसेमहिनेसुवृक्ति

२र ३ १ २ ३ १ २
मिन्द्रायब्रह्मजनयन्तविप्राः।

१ २ ३ २ ३ १ २ ३ १ २
तस्यव्रतानिनमिनन्तिधीराः ॥ २ † ॥

"उरुव्यचसे" पृथु-व्याप्तये‡ "महिने" महते यस्मै "इन्द्राय" "सुवृक्तिं" शोभनां स्तुतिं "ब्रह्म" अन्नं हविश्च "विप्राः" प्राज्ञाः "जनयन्त" जनयन्ति। "तस्य" इन्द्रस्य "व्रतानि" दक्षिणादीनि कर्माणि "धीराः" प्राज्ञाः देवा अपि "न" "मिनन्ति" हिंसन्ति ॥ २ ॥

---

* ऋ० आ० ४, १, ४, ९ (१भा० ६६५पृ०)=ऋ० वे० ४, २, १६, ४।

† ऋ० वे० ३, २, १६, ५।

‡ 'उरुव्यचसे—उर्विति बहुनाम, व्यच व्याप्तायां वाचि (तु० प०), वाग्मीश्वरः इन्द्रः सर्वासां वैदिकानां लौकिकानाञ्च वाचां तमीश्वरः। अथवा व्यच दर्शने। सर्वस्य द्रष्टा' —इति वि०।

अथ तृतीया।

२ ३१ २ ३ १ १ ३ १
इन्द्रं वाणीरनुत्तमन्युमेव

३ १र २र ३ १ १
सत्रा राजानं दधिरे सहध्यै।

१ १ ३ २ ३ २
हर्यश्वाय बर्हया समापीन्॥ २ *॥ ११

"सत्रा राजानं" सर्वस्य जगत ईश्वरम्, "अनुत्तमन्युं" "[केनाप्यनुत्तोऽबाधितो मन्युः क्रोधो यस्य सः] तमेव, "इन्द्रं" "वाणीः" स्तुतयः "सहध्यै"† स्तोतॄणां शत्रूनभिभवितुं "दधिरे" पुरो दधिरे। अतः हे स्तोतः! त्वमपि "हर्यश्वाय" इन्द्राय [हर्यश्वमिन्द्रं स्तोतुमित्यर्थः] "आपीन्" बन्धून् "सम् बर्हय" प्रवर्धय॥ २॥ ११

अथ यदिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ ३ १ १ ३ १र १र
यदिन्द्र यावतस्त्वमेतावदहमीशीय।

३ २ ३ १ २ ३ १ २र ३ १ २
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम्॥ १ ‡॥

---

* ऋ० वे० ५, २, १६, ६।

† षह मर्षणे इति दिवादिः। तस्य "तुमर्थे से सेनसे (३, ४, ९)"—इत्यादिना तुमर्थे रूपम्।

‡ ऐ० आ० ४, १, २, ८ (१ भा० ६१२४०)=ऋ० वे० ४, ३, २०, ३।

हे "इन्द्र ! "यत्" यतः "यावतः" धनस्य ईशिषे "एता-वत्" [षष्ठ्या लुक् (७, १, ३९)] एतावतो धनस्य "अहम्" "ईशीय" ईश्वरो भवेयम्। हे "रदावसो" रदति ददाति वसूनीति रदद्वसुः ततोऽम् अस्मदीयम् "स्तोतारम्" "इत् दधिषे" धन-प्रदानेन धारयेमेव। किञ्च, "पापत्वाय" चीण-त्वाय "न रंसिषम्" न दद्याम् ॥ १ ॥

अथ द्वितीया।

१ २ ३ १२ ३ २ ३ १ २ ३ १र २उ ३ १ २
शिक्षेयमिन्महयतेदिवेदिवेरायआकुहचिद्विदे।
२उ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
नहित्वदन्यन्मघवन्नआप्यंवस्योअस्तिपिताचन ॥ २ * ॥१२

"कुहचिद्विदे" कुत्रचित् विद्यमानः कुहचिद्वित् तस्मै यत्र क्वापि विद्यमानायेत्यर्थः। "महयते" पूजयते जनाय "दिवे दिवे" प्रतिदिनं "रायः" धनानि "शिक्षेयम् इत्" दद्यामेव "आ" [-कारः पाद-पूरणः]। एवमिन्द्रस्य वाक्यं श्रुत्वा ऋषिर्वदति— हे "मघवन्" इन्द्र ! "त्वदन्यत्" अस्माकम् "आप्यं" बन्धुं "न हि अस्ति" "वस्यः" प्रशस्यः "पिता च न" पालयिता च † त्वदन्यो नास्तीत्यर्थः ॥ २ ॥ १२

---

* ऋ० वे० ५, ३, २०, ४।

† 'पिता च—च-शब्दान्माता च'—इति वि०।

अथ श्रुधीहवमिति हृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

३ १र २र　३ २उ　१ २ ३ २ ३ १ २　३ १
श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
३ २उ　३　१ २　३ २ ३ २
कृष्वा दुवाᳬंस्यन्तमा सचेमा ॥ १ * ॥

हे इन्द्र ! "विपिपानस्य" विपीतवतो विपिबतो वा ममाद्रे ग्राव्णः† "हवम्" आह्वानं "श्रुधि" शृणु ["ग्रावभ्यो वाचं वदता वदद्भ्यः"—इति हि निगमान्तरम्] । "विप्रस्य" प्राज्ञस्य वसिष्ठस्य "अर्चतः" स्तुवतः "मनीषा" स्तुतिः "बोध" बुध्यस्व च । "इमा" इमानि क्रियमाणानि "दुवांसि" परिचरणानि "अन्तमा" अन्तिकतमानि‡ बुद्धिस्थानि वा "सचा" सहायभूतः सन् "कृष्वा" कुरु च ॥ १ ॥

अथ द्वितीया ।

१ ३ २ ३　१ १　१ २ ३ १ २ १ १ २ ३क २र　३ २
न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
१ १ ३ १ २
सदा ते नाम स्वयशो विवक्मि ॥ २ ¶ ॥

---

* ऋ० वे० ५, ३, ५, ४ ।

† 'विपिपानस्य—अद्रेरभिषवं करवाणस्य सोमं पिबतः'—इति वि० ।

‡ 'अन्तमा—अन्नवन्ति तुल्यायुषाणि'—इति वि० ।

¶ ऋ० वे० ५, ३, ५, ५ ।

हे इन्द्र! "तुरस्य" शत्रूणां हिंसकस्य "ते" तव "गिरः" स्तुतीः "असुर्यस्य" [द्वितीयार्थे षष्ठी (३, १, ८५)] त्वदीयं असुर्यं बलं* "विद्वान्" जानन् अहं "न अपि मृष्ये" [मृषि-मर्जन-कर्मा (भ्वा० प०)] न मार्जयामि न परित्यजामीत्यर्थः। "सुष्टुतिं" शोभनां स्तुतिञ्च "न" अपि मृष्ये [मृषेर्मार्जन-कर्मत्व-मन्यत्रापि दृश्यते। तद्यथा—"मा नो अग्ने सख्या पित्र्याणि प्रमर्षिष्टा"—इति] किन्तु हे "स्वयशः" असाधारण-यशः! "ते" तव "नाम" स्तोत्रं "सदा" एव "विवक्मि" ब्रवीमि ॥ २ ॥

अथ तृतीया।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १

भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित्।

२उ ३ १ २ ३ १ २

मारे अस्मन्मघवञ्ज्योक्कः ॥ ३ † ॥ १३

हे "मघवन्!" "ते" तव "सवना" सवनानि सोमाभिषवणानि "भूरि" भूरीणि "मानुषेषु" अस्मासु वर्त्तन्त इति शेषः। "मनीषी" स्तोता "त्वामित्" त्वामेव "भूरि हवते" नितरां स्तौति ह्वयति वा। अतः "अस्मात्" अस्मत्तः "आरे" दूरे "ज्योक्" चिरकालं "मा कः" आत्मानं मा कार्षीः क्षिप्रमात्मानमस्मदासन्नं कुर्वित्यर्थः॥ ३ ॥ १३

---

* 'असुर्यस्य—असुर-स्वभावस्य'—इति वि०।

† ऋ० वे० ५, ३, ६, १।

॥ मद्यादैर्घतमसम् ॥ हाउऽधायि। हावंविपिपा। ना।
स्याद्रा३यि। स्याद्रायिः। बोधाविप्रस्यार्च तोमा। नौ
१षा२। नौषा२। क्षपादुवा५सायि। अन्तमा३।
अतमा३। सचे२मा२३४औहोवा ॥(१) हाउनतायि।
गायिरोअपिम्न। ध्यायि। तुरस्या३। तुरस्या। न
सुष्टुतिमसुर्य्यस्यवायि। दू१वा२न्। दूवा२न्। सहातेना
मा। स्वयशा३ः। स्वयशा३ः। विवा२क्षौ२३४औहोवा
॥(२) हाउभूरायिच्चियितेसवना। मा। नुषेषू३। नुषेषू।
भूरिमनौषीहवतेतू। वा१मा२यित्। त्वामा२यित्।
मारेअस्मात्। मघवा३न्। मघवा३न्। ज्यो२क्का२३४
औहोवा। ई२३४५(३) ॥ २ * ॥ [१]

* ऊ० गा० ११प्र० २ख० २गा०।

१ २ र र

॥ मरयम ॥ अधायि । ह्वाम् । विपिपानस्या

र र र १ २ १ र २ र र

द्रेः । द्रेः । द्रेः । बोधा । विप्रा । स्याचनोमनो

र र र र १ १ २ र र र

षा । षा । षा । कार्ष्वा । द्वा । सोतमासचेमा ।

र र १ २ १ ४ र

मा । मा ॥(१) नातायि । गिरो । अपिम्रष्येतुरस्यस्य

१ २ १ २ १ २ र र

स्य । नाम् । ष्टुतायि । अम् । र्य्यस्यविद्वान् । द्वान् ।

र १ २ र १ २ र

द्वान् । सादा । तेना । मस्वयशोविवक्मिक्मिक्मि ॥(२)

१ २ १ २ १ र २र र १ २

भूरायि । च्हितायि । सवना । मानुषेषुषुषु । भूरायि ।

१र र २ र १ २

मनो । षोह्वतेत्वामित् । मित् । मित् । मारे । अ

१ २ र ५ ५

स्मात् । मघवञ्ज्योकः । कः । को । चाउवाउ । वा

३ । ई२३४५(३) ॥ ४ * ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

* ऊ० गा० १२५० १ख० ४मा० ।

अथ चतुर्थे खण्डे —

प्रोष्वस्मा इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १र २र ३ १ २
प्रोष्वस्मै पुरोरथमिन्द्राय शूषमर्चत।

३ १ २ ३ २ ३ २ ३ १ २ ३ २
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा।

३ १ २ ३ १र २र
अस्माकम्बोधि चोदिता नभन्ता

३ १ २ ३ २उ ३ १ २
मन्यकेषाञ्ज्याका अधिधन्वसु॥ १ *॥

"अस्मै" इन्द्राय [षष्ठ्यर्थे चतुर्थी] अस्येन्द्रस्य "पुरः रथं" रथस्य पुरस्तात् ["पुरोऽव्ययम् (१, ४, ६७)"—इति गतित्वाद् गतिसमासः (२, १, १८)] रथस्य अग्रे वर्त्तमानं "शूषं" बलं "सुप्रोर्चत" हे स्तोतारः! सुष्ठु प्रपूजयत ["प्र"-"उ"-इति निपात-समुदायः। प्रो-इति "ओत् (१, १, १५)"—इति प्रगृह्य-सञ्ज्ञा] इन्द्रो विशिष्यते—"समत्सु" [समानं माद्यन्त्यत्रेति समदः सङ्ग्रामाः औणादिकोऽधिकरणे क्विप् (३, १, ७६), "समानस्य छन्दसि (६, ३, ८४)"—इति स-भावः, समत्सु] सङ्ग्रामेषु "सङ्गे" सङ्ग-मनीये शत्रु-बले ["डोऽन्यत्रापि दृश्यते (३, २, ४८ वा०)"—गमेर्डः] "अभीके चित्" अभ्यर्णेऽपि निकटं प्राप्तेऽपि—"लोक-

* ऋ० वे० ८, ७, ११, १।

हे "इन्द्र !" "यः" "नः" अस्मान् "जिघांसति" हन्तुमिच्छति [हन्तेः सन् "अज्झनगमां सनि (६, ४, १६)"—इति वा दीर्घः "अभ्यासाच्च (७, ३, ५५)"—इति कुत्वम्], तस्मै "शत्रवे" "वधं" हनन-साधनमायुधम् "अस्ता असि" क्षेप्ता भवसि [ असु क्षेपणे (दि० प०), ताच्छिलिकस्तृन् (६, ४, १६), "ते" तव "या" "रातिः" धन-प्रदान-हेतुर्हस्तः [रा दाने (अदा० प०), करणे क्तिन्, (३, ३, ९४), "मन्त्रे वृषेषपच-मन-विद-भू-वी-रा उदात्तः (३, ३, ९६)"—इतिक्तिन उदात्तत्वम्] सा रातिः "वसु" धनं "ददिः" अस्मभ्यं दाता भवतु ["आ-दृ-गम-हन (३, २, १७१)"—इति ददतेः कि प्रत्ययः, "न लोकाव्ययः (२, ३, ६९)" इति वसु-शब्दात् षष्ठ्यभावः । सिद्धमन्यत्॥ ३ ॥ १४

अथ रेवाँइद्रेवतइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २उ ३ १ २ ३ १२ १२ ३ १ २

रेवाँ इद्रेवतस्तोतास्यात्त्वावतोमघोनः।

१ २ ३ १ २

प्रेदुहरिवःसुतस्य ॥ १ * ॥

हे "हरिवः" हरिवन्! † ["मतुवसोः (८, ३, १) नकारस्योत्वं"] हरि-नामकाश्ववन्निन्द्र ! "रेवतः" रयिमतः बहु-धनोपेतस्य तव "स्तोता" "रेवान् स्यात्" रयिमान् भवेत् "इत्" [-शब्दोऽवधारणे। रयिमान् भवेदेव न तु दारिद्र्यं प्राप्नोति]।

---

* "सुतस्य"—इति ऋ०-पाठः।

† ऋ० वे० ५, ७, १९, १।

उक्तमेवार्थं कैमुतिक-न्यायेन द्रढ़यति—"त्वावतः" त्वत्सदृशस्य ["युष्मदस्मद्भ्यां छन्दसि साद्दृश्य उपसङ्ख्यानम् (५, १, ६१ वा०)" —इति मतुप्] "मघोनः" मघवतः धनाढ्यस्य "सुतस्य" [षु प्रसवैश्वर्ययोः (भ्वा० प०)] स्तोतव्यस्य ऐश्वर्योपेतस्य अन्यस्यापि स्तोता "प्रेदु"* ["स्यात्"—इत्यनुषज्यते] प्रस्यात् प्रभवेदेव नतु निहीयते किमु वक्तव्यं तव स्तोता धनवान् भवेदे-वेति ॥ १ ॥

अथ द्वितीया ।

उक्थञ्चनशस्यमानन्नागोर्रयिराचिकेत ।

नगायत्रङ्गीयमानम् ॥ २ † ॥

[गायतेर्गोः] "अगोः" अस्तोतुः "रयिः", "शस्यमानं" होत्रा पठ्यमानम् "उक्थं च" निशस्त्रमपि "आ चिकेत" अभिजानाति [कित ज्ञाने (भ्वा० प०) छान्दसो लिट् (३,२, १०५)। नेति सम्प्रत्यर्थे] "न" सम्प्रति प्रस्तोत्रादिभिः "गीय-मानं" "गायत्रं" गातव्यं साम [यद्वा, गायत्राख्यमपि] आचि-केतेत्येव । अतः कारणाद् वयमपि तमिन्द्रं स्तुमइत्यर्थः ॥ २ ॥

* 'इत्', 'उ' एतावुपसर्गौ —इति वि० ।

† ऋ० आ० ३, १, ४, २ (१भा० ८६६पृ०) = ऋ० वे० ५, ७, १९, ४ ।

अथ तृतीया।

१ २ १ २ ३ १२ २२ ३ १ २
मानइन्द्रपीयत्नवेमाशर्द्धतेपरादाः।
१ १ ३ १ २
शिक्षाशचीवःशचीभिः॥ ३ * ॥ १५

हे इन्द्र! त्वं "पीयत्नवे" [पीयति: बधकर्मा (निरु०४, २५)] बध-शीलाय हिंसा-कारिणे शत्रवे "नः" अस्मान् "मा परादाः" मा परित्याक्षीः; "मा" च "शर्द्धते" अभिभवित्रे अस्मान् मा परादाः [शृधु प्रहसने (भ्वा० आ०)—इति धातुः]; अपितु "शचीवः" शक्तिवन्निन्द्र! "शचीभिः" रात्मीयैः कर्मभिः "शिक्ष" अस्माननुशाधि [यद्वा, शिक्षति र्दानकर्मा (३, २०, ८), अभीष्टं धनमस्मभ्यं देहि; यद्वा, शत्रून् जेतुं शिक्ष शक्तान् कर्त्तुमिच्छ; शकेः सन्नन्तस्य "सनि मी मा (७, ४, ५४)"—इति इसादेशः, अभ्यास-लोपे च कृते लोटि रूपमेतत्॥ ३॥ १५

अथैन्द्रयाहिहरिभिरिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ १ ३ १ २ ३ २ ३ १ २ १ २
एन्द्रयाहिहरिभिरुपकण्वस्यसुष्टुतिम्।
३ २ १ २ ३ १ २ १ १ २ ३ १ २
दिवोअमुष्यशासतोदिवंययदिवावसो॥ १ † ॥

---

* ऋ० वे० ५, ७, १९, ५।

† छ० आ० ४, १, १, ७ (१भा० ७११पृ०); = ऋ० वे० ६, ३, ११, १।

हे "इन्द्र !" "कण्वस्य" "सुष्टुतिं" शोभनां स्तुतिं "हरिभिः" अश्वैः "उप याहि" आगच्छ । "दिवः" द्युलोकं [द्वितीयार्थे षष्ठी (२, १, ८५)] "अमुष्य" अमुष्मिन्निन्द्रे "शासतः" शासति सति [विभक्ति-व्यत्ययः (३, १, ८५) ] तत्र वयं सुखमास्महे । हे "दिवावसो" दीप्त-हविष्केन्द्र ! "दिवं" स्वर्गं "यय" यूयं गच्छत [ बहुवचनं पूजार्थम् । यद्वा, हे 'दिवावसो !' दिवो द्यु-नामकममुं लोकं 'शासतः' शासनं कुर्वन्तः यूयं 'दिवं' स्वर्गं 'यय' गच्छत ]॥ १ ॥

अथ द्वितीया ।

१ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अत्राविनेमिरेषामुरान्नधूनुतेवृकः ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ २ * ॥

"अत्र" अस्मिन् यज्ञे "एषाम्" अभिषव-ग्राव्णां "नेमिः" सोम-लतां "वि धूनुते" विशेषेण कम्पयति । तत्र दृष्टान्तः— "उरां" मेषीं "वृकः न" वृक इव यथा वृकः तद्वत् । सिद्ध-मन्यत् ॥ २ ॥

अथ तृतीया ।

२ ३ २ ३ १२ ३ १ २ ३ १र २र
आत्वाग्रावावदन्निहसोमीघोषेणवक्षतु † ।

१२ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवोअमुष्यशासतोदिवंययदिवावसो ॥ ३ ‡ ॥ १६ ॥

* ऋ० वे० ६, ३, ११, ३ । † "यच्छतु"—इति ऋ०-पाठः ।
‡ ऋ० वे० ६, ३, ११, ४ ।

हे इन्द्र ! "त्वा" त्वाम् "इह" यज्ञे "ग्रावा" सोमाभिषव-पाषाणः "सोमी" सोमवान् "वदन्" शब्दं कुर्वन् "घोषेण" ध्वनिना* सह "आ वक्षतु" त्वां प्रापयतु ॥ ३ ॥ १६

अथ पवस्वसोममन्दयन्निति त्र्यचात्मकं द्वैपदं चतुर्थं, सूक्तम्,

तत्र प्रथमा ।

१२ ३२३ १२ ३१२

पवस्वसोममन्दयन्निन्द्रायमधुमत्तमः ॥ १ † ॥

हे "सोम !" "मधुमत्तमः" अतिशयेन मधुर-रसवान् त्वं मन्दयन् मादयिता भवन् "इन्द्राय" ["क्रिया-ग्रहणं कर्त्तव्यम् (१, ४, ३२ वा०)"—इतीन्द्रस्य सम्प्रदानसञ्ज्ञा] इन्द्रं मोदमानः सन् "पवस्व" इन्द्रार्थमागच्छ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ ३ १ २

ते सुतासो विपश्चितः‡ शुक्रावायुमसृक्षत ॥ २ ¶ ॥

"विपश्चितः" मेधाविनः "सुतासः" अभिषुताः "शुक्राः" शुक्लवर्णाः अभिषवेण निर्मलत्वात् दीप्यमानाइत्यर्थः । "ते" सोमाः "वायु" शब्दम् "असृक्षत" असृजन् अकार्षुः§ [अथवा

* 'घोषेण—सोमाभिषव-घोषेण'—इति वि० ।

† ऋ० वे० ७, २, १६, १ ।

‡ "मदिन्तमाः"—इति ऋ०-पाठः ।

¶ ऋ० वे० ७, २, १६, ३ ।

§ 'वायुम् असृक्षत—सृजनं तर्पणं वायुं तर्पयत'—इति वि० ।

वायुमेव सोम-पानार्थमसृजन्] सोमेषु सुतेषु सत्सु वायुस्तत्पा-नार्थमागच्छति खलु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ १ २
असृग्रन्देववीतयेवाजयन्तोरथाइव ॥ ३ * ॥१७

एते अभिषुताः सोमाः "वाजयन्तः" यजमानानामन्न मिच्छन्तः सन्तः "देववीतये" देवानां पानाय "असृग्रन्" विसृज्यन्ते ऋत्विग्भिः प्रदीयन्ते। तत्र दृष्टान्तः—"रथाइव वाजयन्तः" गतोर्धनानि बलानि वा स्वामिन इच्छन्तो रथा देववीतये देवानां गमनाय यथा विसृज्यन्ते तद्वत् ॥ ३ ॥ १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

——000——

अथ पञ्चमे खण्डे—

अग्निंहोतारमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३१र २र ३ १ २ ३ १ २ ३१र
अग्नि९होतारम्मन्येदास्वन्तंवसोःसूनु९

२र ३ १ २ ३ २ ३ २ ३ १ २
सहसोजातवेदसंविप्रन्नजातवेदसम्।

* ऋ० वे० ७, २, १६, १।

२ ३ १ २ ३ २ ३ १ २ ३ २
यऊर्द्ध्वयास्वध्वरोदेवाच्याकृपा ।
३ २ ३ १ २ ३ १ २ ३ १ २
घृतस्यविभ्राष्टिमनुशुक्रशोचिष
३ १ २ ३ १ २
आजुह्वानस्यसर्पिषः ॥ १ * ॥

"अग्निं" सर्वासां देव-सेनानामग्रण्यं यज्ञेष्वग्रं नीयमानं वा "होतारं" अस्मद्यागं प्रति देवानामाह्वातारं [यद्वा, होम-निष्पादकं होतारं ह्वातारं "जुहोतेर्होतेत्यौर्णवाभः (निरु० दै० १,१५)"—इति यास्कः। "अग्निमद्यहोतारमवृणीत"—इति श्रुतेः, "अग्निमग्नआवह"—इति च, अग्नेराह्वातृत्वं प्रसिद्धम्। 'अग्निं होतारं मन्ये'—इत्येवं प्रतिविशेषणं मन्यइति सम्बन्धः। यद्वा, याग-निष्पत्तेरेवोपलक्षितत्वात् एतदेव विधेय-विशेषणम्, इतराणि वक्ष्यमाण-विशेषणानि स्तुति-पराणि], "दास्वन्तम्" अतिशयेन दानवन्तञ्च, "वसोः" वसुं निवास-हेतुं, "सहसः सूनुं" बलस्य पुत्रमग्निम् [मन्थन-काले बलेन मथ्यमान उत्पद्यते इति पुत्रत्वमुपचर्य्यते] "जातवेदसं" जातानां वेदितारं जात-प्रज्ञं जातधनं वा [जातवेदः-शब्दो यास्केन बहुधा निरुक्तः] अग्नेर्जातवेदस्त्वे दृष्टान्तः—"विप्रं न" जातविद्यं मेधाविनं ब्राह्मणमिव, तं यथा बहु मन्यते तथा त्वामपि स्तौमीत्यर्थः। उक्त-गुणविशिष्टो "यो देवः" "स्वध्वरः" शोभन-यज्ञवान् यज्ञं सम्यग् निर्वहन् "ऊर्द्ध्वया" उन्नतया उत्कृष्टया "देवाच्या" देवान्

* ऋ० आ० ५, २, ३, ९ (१भा० ९२९ पृ०)=ऋ० वे० १, १, १२, १।

पूजयन्त्या देवान् प्रत्युक्तया वा "क्रपा" क्रपया सामर्थ्य-लक्षणया ["देवान् प्रत्युक्तया क्रपया"—इति ( निरु० नै० ६, ८ ) यास्कः] तेभ्यो हविर्वहन-बुद्धा युक्तः सन् "शुक्रशोचिषः" दीप्त-तेजस्कस्य "आजुह्वानस्य" आ समन्तात् हूयमानस्य "सर्पिषः" सरण-शीलस्य "घृतस्य" विलापनेन दीप्तस्याज्यस्य "विभ्राष्टिं" विशेषेण भ्राजनम् "अनु" स्वयमपि तत् आज्यं वष्टि कामयते स्वीकरोतीति शेषः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २
यजिष्ठन्त्वायजमानाहुवेमज्येष्ठमङ्गिरसां

३ १ २ ३ १ २ ३ १ २
विप्रमन्मभिर्विप्रेभिःशुक्रमन्मभिः ।

१ २ ३ १र २र ३ २
परिज्मानमिवद्या᳚होतारञ्चर्षणीनाम् ।

३ १ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २ ३ १ २
शोचिष्केशंवृषणंयमिमाविशःप्रावन्तुजूतयेविशः ॥ २* ॥

हे "विप्र" मेधाविन्! "शुक्र" दीप्त-ज्वालाग्ने! "यजिष्ठम्" अतिशयेन यष्टृतमं "त्वा" त्वां "यजमानाः" वयं "हुवेम" आह्वयामः [यतो वयं यजमाना अतस्त्वां यजिष्ठमाह्वयाम-इत्यभिप्रायः]। कीदृशं त्वाम्? "अङ्गिरसां" अङ्गिरो गोत्रोत्पन्नानां मध्ये† "ज्येष्ठम्" अतिशयेन प्रशस्यं [यद्वा, अङ्गिरसामङ्गाराणां मध्ये ज्येष्ठं ज्वाला-युक्तत्वात्। "अङ्गिरा अङ्गा-

---

* ऋ० वे० २, १, १२, २।
† 'अङ्गिरसामग्रीणाम्'—इति वि०।

रतः (निरु० न० ३, १७)"—इति यास्कः। "येऽङ्गिरा आसंस्तेऽङ्गिरसो भवन्"—इति श्रुतम्]। केन साधनेन? इत्युच्यते—"मन्मभिः" मनन-साधनैः "विप्रेभिः" विप्रैः विशेषेण प्रीणयितृभिः "मन्मभिः" मन्त्रैः [यद्वा, विप्रेभिः मेधाविभिर्ऋत्विग्भिर्मन्मभिर्मन्त्रैश्च सहिता वयमिति सम्बन्धः] अथाह्वानानन्तरं "परिज्मानं" परितो गच्छन्तं "द्याम् इव" सूर्यमिव "होतारं"। केषामर्थे? "चर्षणीनां" मनुष्याणाम् अर्थे पश्चाद्-यागादि-साधनेन देवत्वमापन्नानां देवानामाह्वातारं तथा "शोचिष्केशं" केशवदत्यन्त-ज्वालोपेतं, "वृषणं" कामानां वर्षितारम्; एवं रूपं त्वां "विशः" त्वामेव निविशमानाः "विशः" प्रजाः "जूतये" स्वर्गाद्यभिमत-फल-प्राप्तये* "प्र अवन्तु" प्रकर्षेण नीयन्तु। तादृशं त्वां हुवेमेति सम्बन्धः॥ २॥

अथ तृतीया।

२उ ३ २ ३ १ २ ३ १ २ ३
सद्दिपुरु+चिदोजसाविरुक्मता

१ २ ३ १ २ ३ १ २ ३ १२ २र ३ २
दीद्यानोभवतिद्रुहन्तरःपरशुर्नद्रुहन्तरः।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
वीडुचिद्यस्यसमृतौश्रुवद्वनेवयत्स्थिरम्।

---

* 'जूतये—गमनार्थम्'—इति वि०।

† "पुरु"—इति स०-पाठः।

२ १ १ ३ १ २ ३ २ ३ १ २
निष्षहमाणोयमतेनायतेधन्वासच्चानायते ॥३*॥ १८

॥ इति नवमस्य प्रथमार्द्धप्रपाठकः ॥†

"स हि" स एव पूर्वं स्तुत एवाग्निः "विरुक्मता" विशेषेण रोचनवता "ओजसा" ज्वाला-रूपेण बलेन "पुरुचित्"‡ अत्यधिकमेव "दीद्यानः" दीप्यमानः "द्रुहन्तरः" द्रोग्धॄणां तरिता निस्तारयिता भवति अस्मासु द्रोहं कुर्वतां शत्रूणां हिंसको भवतीत्यर्थः। तत्र दृष्टान्तः—"द्रुहन्तरः" द्रोग्धॄणां छेदनाय प्रयुक्तः "परशुः न" परशुरिव छिनत्ति तथायमपि¶ किञ्च, यस्याग्नेः "समृतौ" सङ्गतौ संयोगे§ "वीडुचित्" दृढमपि पाषाणादिकं "शुवद्" गच्छेत् शीर्य्येत। तथा "यत् स्थिरं" यच्च पर्वतादि स्थिरमविचलितं तदपि शुवत्। तत्र दृष्टान्तः— "वनेव" उदकमिव, उदकं यथाग्नि-संयोगे शुष्यति तथेत्यर्थः अत्यन्तदृढं स्थिरमपि छिनत्ति अस्मद्द्रोग्धारं शत्रुं छिनत्तीति किमु वक्तव्यमित्यभिप्रायः। किञ्चायमग्निः "निष्षहमाणः" शत्रून् निःशेषेणाभिभवन् "यमते" उप रमते शत्रुषु मध्ये

* ऋ० वे० २, १, १२, ३।

† सर्वमूलग्रन्थ-सम्मतोऽयं पाठः। तथाच यथावद्दीत्याद्यैव सायणीय विंशाध्यायस्य-विरामः प्रतिपद्येत, स्याच्चैवमस्य द्वाविंशाध्याय-समाप्तिता, परन्त्विदमाचार्येण तेन भाष्य-कृता विवरण-कृता च नयनाञ्चलेनैकवारमप्यवलोकितमिति कृतोऽयम्।

‡ 'चित्—इति पद-पुरणः'—इति वि०।

¶ 'परशुर्न—न-शब्दउपमार्थीयः, परशुरिव, यथा परशुर्ह्स्तानां छेत्ता, तद्वच्छत्रूणां छेत्ता'—इति वि०।

§ 'सम् ऋतौ—सङ्ग्रामे'—इति वि०।

क्रीड़ति तानेव नाशयति। तथा कुर्वन् "न श्रयते" न गच्छति शत्रोः सकाशान्न पलायते। तत्र दृष्टान्तः—"धन्वसहा न श्रयते" [धनुषा शत्रूनभिभवतीति धन्वसहाः] धानुष्कः [सहते रसुन्, छान्दसोऽन्त्य-लोपः] स यथा शत्रोरभिमुखं विध्यति न पलायते [यद्वा, दृढ़-धनुर्वहन-क्षमो धन्वसहाः, अस्मिन् पक्षे पचाद्यच् (३, १, १३४), "सुपां सु-लुक् (७, २, ३९),"—इत्याकारः दृढ़-धन्वा सन् न श्रयते न चलति ।। ३ ॥१८

अथाग्नेतवश्रवइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ ३ १ ३ १२ १ २ ३ १ २
अग्नेतवश्रवोवयोमहिभ्राजन्तेअर्चयोविभावसो।

१२ २ १२३ १ २ ३ २ १२ ३ १२
बृहद्भानोशवसावाजमुक्थ्या३ं*दधासिदाशुषेकवे ॥ १† ॥

हे "अग्ने!" "तव" "वयः" अन्नं "श्रवः" श्रवणीयं प्रशस्यं हविरात्मकस्य तस्य मन्त्र-संस्कृतत्वेन प्रशस्तत्वात् अन्नेषु तवैवान्नं श्रेष्ठमित्यर्थः। हे "विभावसो" [विशिष्टा दीप्तिर्विभा सैव वसु धनं यस्य] तादृशाग्ने! "अर्चयः" दीप्तयः "महि" महत् बहुलं "भ्राजन्ते" दीप्यन्ते [भ्राजृ दीप्तौ, अनुदात्तो भौवादिकः]। हे "बृहद्भानो" प्रौढ-दीप्त! "कवे" क्रान्त-दर्शिन्नग्ने! एवम्महानुभावस्त्वं "शवसा" बलेनोपेतम् "उक्थ्यम्" प्रशस्यं [यद्वा,

* "उक्थ्यं"—इति ऋ०-पाठः।

† ऋ० वे० ८, ७, २८, १=य० वे० १२, १०६।

उक्थो यज्ञस्तद्योग्यं ] "वाजम्" अन्नं "दाशुषे" हवींषि दत्तवते यजमानाय "दधासि" प्रयच्छसि ॥ १ ॥

अथ द्वितीया।

३ १२ ३१२३ १२ ३ १२ ३ १२
पावकवर्च्चाःशुक्रवर्च्चाअनूनवर्च्चाउदियर्षिभानुना।
३१ ३ १२ ३२३१२ ३२३१ २ ३१
पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीउभे ॥ २* ॥

"पावकवर्च्चाः" शोधक-दीप्तिः "शुक्रवर्च्चाः" निर्मल-तेजस्कः, "अनूनवर्च्चाः" सम्पूर्ण-तेजस्कः, हे अग्ने ! ईदृगस्त्वं "भानुना" तेजसा "उदियर्षि" उद्गच्छसि [ऋ सृ गतौ, जौहोत्यादिकः (प०) "अर्त्ति-पिपर्त्त्योश्च (७, ४, ७७)"—इत्यभ्यासस्येत्वम् | स त्वं "पुत्रः" सन् "मातरा" मातृभूतयोररण्योः "विचरन्" यागाव-माने विशेषेण प्राप्नुवन् "उपावसि" उपगतान् यजमानान् रक्षसि। तथा "उभे" "रोदसी" द्यावापृथिव्यौ "पृणक्षि" संयोजयसि†; हविषा द्युलोकं वृष्ट्या इमं लोकञ्च पूरयसीत्यर्थः [पृची सम्पर्के रौधादिकः (प०)] ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३१२ ३१ २ ३२
ऊर्ज्जोनपाज्जातवेदःसुशस्तिभिर्मन्दस्वधीतिभिर्हितः।
२३ ३ १ २ ३१ २ ३ १ २ ३ १ २
त्वेइषःसन्दधुर्भूरिवर्पसश्चित्रोतयोवामजाताः ॥ ३‡ ॥

* ऋ० वे० ८, ७, २८, २=य० वे० १२, १०७।

† 'पृणक्षि—पूरयसि'—इति वि०।

‡ ऋ० वे० ८, ७, २८, ३=य० वे० १२, १०८।

हे "ऊर्ज्जोनपात्" ऊर्जः अन्नस्य पार्थिवस्य अरण्यादेः पुत्र! हे "जातवेदः" जातानां वेदितरग्ने! "सुशस्तिभिः" सुशंसनैः अस्माभिः क्रियमाणैः "मदस्व" मोदस्व। तथा "धीतिभि" अस्माभिः क्रियमाणैरग्निहोत्रादिभिः कर्म्मभिः "हितः" सुहितः तृप्तो भव। अपि च "भूरिवर्पसः" [ वर्प इति रूपनाम (निघ० ३, ७, ३) ] बहुविध-रूपाः,* "चित्रोतयः" चित्रा ऊतिस्तृप्ति-र्याभिः इड्भिस्तथोक्ताः,† "वामजाताः" वामं वननीयं जातं जन्म यासां ता इदृशीः‡ "[illegible]ष." अन्नानि हविर्लक्षणानि "त्वे" त्वय्येव "सन्दधुः" सन्दधति सम्यक् जुह्वति यजमानाः [ यद्वा, भूरिवर्पस इत्यादिकं कर्त्तृ-विशेषणम्, तदानीं चित्रोतय इत्यस्य विचित्र-रक्षा इति योज्यम् ]। ३॥

अथ चतुर्थी।

३ १ २ ३ १ २ ३ १र २

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य।

१ २ ३ १ २ १ २ ३ १ २ ३ १ २ ३ १र २र

स दर्शतस्य वपुषो विराजसि पृणक्षि दर्शतं¶ क्रतुम् ॥४§॥

हे "अग्ने! "जन्तुभिः" जातैः‖ शत्रुभिः सह "इर-ज्यन्" ईर्ष्यान्न-स्पर्द्धां कुर्वन् [ ईर् ईर्ष्यायां कण्ड्वादिः। यद्वा,

---

* 'भूरिवर्पसः—बहूनि चेतांसि'—इति वि०।

† 'चित्रोतयः—विचित्राणि पालनानि'—इति वि०।

‡ 'वामजाताः—वामानि शोभनानि जातानि यस्यामौ वामजाताः'—इति वि०।

¶ "सानसि"—इति ऋ-पाठः। § ऋ० वे० ७, ७, २८, ४।

‖ 'जन्तुभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम् जन्तुभ्यः' —इति वि०।

ऐश्वर्यकर्मा ( निघ० २, २१, १ ), जन्तुभिर्जायमानैरा-
ोभिरिरज्यन् ईश्वरो भवन्] हे "अमर्त्य" मरण-
! "अस्मे" अस्माकं ["सुपां सु-लुक् ( ७, १, ३९ )"—
था: शे-आदेशः ] "रायः" धनानि "प्रथयस्व" विस्तारय
द्वितीयाच्छसः स्थाने व्यत्ययेन जस्, शस्येव वा व्यत्ययेन "ऊडि-
दम् ( ६, १, १७१ )"—इत्यादिना विभक्त्युदात्तत्वं न क्रियते]
स त्वं "दर्शतस्य" दर्शनीयस्य च "वपुषः" तेजोमयस्य शरीरस्य
"विराजति" [तृतीयार्थे षष्ठी ( ३, १, ८५ ) ] ईदृशेन शरी-
रेण विशेषेण दीप्यसे [ यद्वा, र[illegible]तिरैश्वर्य-कर्मा ( निघ० २,
२१, ४ ), वपुरिति च रूप-नाम[illegible]घ० ३, ७, ४ ), दर्शनीयेन
रूपेण विराजसि विशेषेण ईशिषे ]। अत एव "दर्शतं" दर्श-
नीयं "क्रतुं" कर्म "पृणक्षि" अस्माभिः सह पर्चयसि फलेन वा
संयोजयसि ॥ ४ ॥

अथ पञ्चमी।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
इष्कर्त्तारमध्वरस्य प्रचेतसङ्क्षयन्तꣳराधसो महः।
१ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ ३ १
रातिं वामस्य सुभगां महीमिषन्दधासि सानसिꣳरयिम् ॥५*॥

"इष्कर्त्तारं" निष्कर्त्तारं [छान्दसो वर्ण लोपः (३, १, ८५)]
"अध्वरस्य" यज्ञस्य निष्कर्तारं संस्कर्त्तारं, "प्रचेतसं" प्रकृष्ट-
ज्ञानं, "महः" महतः "राधसः" धनस्य क्षयन्तम् ईश्वरम्
[क्षयतिरैश्वर्य-कर्मा (निघ० २, २१, ३)] "वामस्य" वननीयस्य

* ऋ० वे० ७, ७, २८, ५।

"रातिं" दातारं [रातेः कर्त्तरि क्तिन् (३, ३, ९६)] हे ग्ने! स्तुम इति शेषः। स त्वं "सुभगां" सौभाग्योपेतां "मतीम्" "इषम्" अन्नं* "सानसिं" सम्भक्त-रूपम् "रयिं" "दधासि" स्तोतृभ्यो ददासि ॥ ५ ॥

सुगंसनेः तिभिः सुहितः प०

अथ षष्ठी ।

३ १ २ ३ २ ३ १ १
ऋतावानम्महिषंविश्वदर्शत
७ २ ३ १ २ ३ १र १र
मग्निꣳसुम्नायदधिरेपुरोजनाः ।
१ १ ३ १ २ २ २उ ३ १ २ ३ २
श्रुत्कर्णꣳसप्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ ६ † ॥ १

"ऋतावानं" सत्यवानं सत्यवन्तं यज्ञवन्तं वा‡ ["छन्दसि वनिपौ (५, २, १२२ वा०)"—इति मत्वर्थीयो वनिप्], "महिषं" महान्तं पूज्यं वा "विश्वदर्शतं" विश्वैः सर्वैर्दर्शनीयं [ यद्वा, विश्वं दर्शनं यस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, ११६)" इति पूर्वपदान्तोदात्तत्वम् ] ईदृशम् "अग्निं" "सुम्नाय" सुखाय सुखार्थं "जनाः" ऋत्विग्यजमानरूपाः "पुरो दधिरे" पुरो दधते सर्वं कर्मभ्यः पुरस्तात् धारयन्ति [यद्वा, पुरः पुरस्तात् पूर्वस्यां दिशि आह्वनीय-रूपेण धारयन्ति। पुरोऽवैर्चः प्रत्ययक्रतः]। अपिच हे अग्ने! "श्रुत्कर्णं" श्रुतः स्तुतीं सम्यक् शृण्वन् कर्णः

---

* 'इषं—हविर्लक्षणम्' वा'—इति वि०।

† ऋ० वे० ७, ७, १८, ६।

‡ 'ऋतावानम्—ऋतमन्नं वर्द्धमानम्'—इति वि०।

यस्य तादृशं, "सप्रथस्तमम्" अतिशयेन प्रख्यातं
[तो विस्तार्यमाणं] "दैव्यं" देवानां हविर्वोढृत्वेन
न् ईदृशं "त्वा" त्वाम् "मानुषा" मानुषाणि मनोरप-
"युगा" "युगानि" युगलानि पत्नी-यजमान-रूपाणि*
"गिरा" स्तुत्या स्तुवन्तीति शेषः॥ ३॥ १९ (१)

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य
पञ्चमः खण्डः॥ ५॥

---

अथ षष्ठे खण्डे—

प्रसोअग्नेइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१र २र३ २ ३ १ ३ २ ३ १ २ ३ १ २
प्रसोअग्नेतवोतिभिःसुवीराभिस्तरतिवाजकर्मभिः।
२ ३ १ २ १र २र
यस्यत्वꣳसख्यमाविथ॥ १ †॥

हे "अग्ने!" "तव" "ऊतिभिः" "सः" यजमानः "प्र
तरति" प्रवर्द्धते ऊतयो विशिष्यन्ते—"सुवीराभिः" शोभनाः
वीराः पुत्रादयो यासु तास्तथोक्ताभिः, "वाजकर्मभिः" वाजानाम-
न्नानां वा कर्म कारणं यासु तादृशीभिः; हे अग्ने "त्वं"
"यस्य" यजमानस्य "सख्यं" सखित्वं मित्रत्वम् "आविथ"
प्राप्नोषि स तरतीत्यन्वयः॥ १॥

---

* 'युगा—योजयित्वा यजमानेन'—इति वि०।

† छ० आ० १, १, ३, २ (१भा० २७६पृ०) = ऋ० वे० ६, १, २४, ५।

अथ द्वितीया।

१ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ १

तवद्रप्सोनीलवान्वाशऋत्वियइन्धानःसिष्णवाददे

१ ३ १ २ ३ १ २ ३ १ ३ १र २र

त्वम्महीनामुषसामसिप्रियःक्षपोवस्तुषुराजसि॥ २ *॥

हे "सिष्णो !" [सिषिः सेचनार्थः] सोमेनासिच्यमानाग्ने "द्रप्सः" द्रवण-शीलः, "नीलवान्" शकट-नीलेऽवस्थानात् तद्वान्, "वाशः" कान्तः शब्दायमानो वा, "ऋत्वियः" ऋतौ वसन्तादि-काल-विशेषे भवः, "इन्धानः" सन्दीपयन्, एवम्भूत स्तव सोमः "आ ददे" तुभ्यं होमायायुणा आदीयते। अपिच त्वं "महीनां" महतीनाम् "उषसां" "प्रियः" मित्रभूतः "असि" [उषसि हि अग्नयो होमाय प्रज्वाल्यन्ते]। तथा "क्षपः" क्षपाया रात्रेः सम्बन्धिषु "वस्तुषु" आच्छादकेषु तमस्सु सत्सु त्वं "राजसि प्रकाशसे [यद्वा, रात्रि-सम्बन्धीनि वस्तूनि पदार्थ-जातानि त्वं प्रकाशयसि ॥ २ ॥ २० (२)

अथ तमोषधीर्दधिरे-इति एकर्चं द्वितीयं सूक्तम्,

सा ऋगेषा।

१र २र ३ १ २ ३ १ ३

तमोषधीर्दधिरेगर्भमृत्विय

१र १र ३ १ २ ३ १ २

न्तमापोअग्निञ्जनयन्तमातरः।

* ऋ० वे० ६, १, ३५, १।

१र २र३ २ ३ १ २ ३ १ २३
तमित्समानंवनिनश्चवीरुधो

१ २ ३१ २ ३१ २
न्तर्वतीश्चसुवतेचविश्वहा ॥ १ * ॥ ३

"ऋत्वियम्" ऋतौ प्राप्तं "गर्भं" गर्भभूतं "तं" प्रकृतम् "अग्निम्" "ओषधीः" ओषध्यः "दधिरे" धारयन्ति। "तम्" एव अग्निं "मातरः" धारकत्वेन मातृ-स्थानीयाः "आपः" "जनयन्त" जनयन्ति। किञ्च, "वनिनः" वनस्पतयः "च" "समानं" गर्भ-भावेन प्रवेशात् तत्तुल्यत्वम् "तमित्" † तमेवाग्निम् "अन्तर्वतीः" गर्भभवाः "वीरुधः" ओषधयश्च "विश्वहा" सर्वदा "सुवते" जनयन्ति ॥ १ ॥ २१ (३)

अग्निरिन्द्रायेति तृतीयं सूक्तम्,

सा ऋगेषा।

३ १र २र २ ३ १र २र
अग्निरिन्द्रायपवतेदिविशुक्रोविराजति।

१ २ ३ १ २
महिषीवविजायते ॥ १ ‡ ॥ ४

"अग्निः" यज्ञेषु प्रथमं प्रणेता अग्निः "इन्द्राय" इन्द्रार्थं "पवते" अस्माभिर्दत्तेन चर्वन्नेन पुरोडाशेन देवानामधिकः

---

* ऋ० वे० ८, १, ११, १।

† 'इत्—इति पद-पूरणः'—इति वि०।

‡ नेयमन्यत्र क्वापि दृश्यते।

चरति। अग्निः "शुक्रः" दीप्तः सन् "दिवि" स्वर्गे "वि राजति" विशेषेण प्रकाशयति [यद्वा, 'दिवि' अन्तरिक्षादि-लोकेषु स्थितेषु देवेषु मध्येषु 'शुक्रः' दीप्तः सन् 'विराजति']। तत्र दृष्टान्तः—"महिषीव" यथा महिषी तृणादिना विविधानि पयोघृतादीनि जनयति तथा "वि जायते" देवानामुपभोगार्थं विविधान्नानि जनयति॥ १॥ २२ (४)

अथ योजागारेति एकर्चं चतुर्थं सूक्तम्,

सा ऋगेषा।

१ २ २ ३ १र २र ३
योजागारतमृचःकामयन्ते
२ ३ २ ३२३१ २
योजागारतमुसामानियन्ति।
१ ३ २ ३१३१र २र
योजागारतमयꣳसोम
३ २३ १२ ३ १ २
आहतवाहमस्मिसख्येन्योकाः॥ १ *॥ ५

"यः" देवः "जागार" सर्वदा विनिद्रो जागरूको गृहे वर्त्तते "तम्" "ऋचः" सर्व-शस्त्रात्मिकाः "कामयन्ते"। "यः" "जागार" "तम् उ" तमेव "सामानि" स्तोत्र-रूपाणि "यन्ति" प्राप्नुवन्ति। "यः" "जागार" "तम्" "अयम्" अभिषुतः "सोमः" "आह" वक्ति स्वीकुर्विति। हे अग्ने! तादृशस्य "तव" "सख्ये"

* ऋ० वे० ५, २, १५, ४।

समान-ख्याते हित-करणे "न्योकाः" नियत-स्थानः "अहम्" "अस्मि" भवामि ॥ १ ॥ २३ (५)

अथाग्निर्जागारेत्येकर्चं पञ्चमं सूक्तम्,

सा ऋगेषा।

३ १ २, ३ १र २र ३
अग्निर्जागार तमृचः कामयन्ते
१ २ ३ २ ३ १ २
ग्निर्जागार तमु सामानि यन्ति।
३ १ २ ३ २ ३ १र २र ३
अग्निर्जागार तमयꣳसोम आह
२ ३ १२ ३ १ २
तवाहमस्मि सख्ये न्योकाः ॥ १ * ॥ ६

सा निगद-व्याख्याता (१३) ॥ १ ॥ २४ (६)

अथ नमः सखिभ्य इति तृचात्मकं षष्ठं सूक्तम्,

तत्र प्रथमा।

१ १ ३ १ २ ३ १ ३ १ २ ३ २ ३
नमः सखिभ्यः पूर्वसद्भ्यो नमः साकन्निषेभ्यः।
३ १र २र ३ १ २
युञ्जे वाचꣳशतपदीं ॥ १ † ॥

---

* ऋ० वे० ४, ३, २५, ५।

† नेयमन्यत्र क्वापि दृश्यते।

"पूर्वसद्भ्यः" ये यज्ञे प्रारम्भात् पूर्वं सीदन्ति तिष्ठन्तीति पूर्वसदः तेभ्यः "सखिभ्यः समान-ख्यानेभ्यः सखिवन्मित्रभूतेभ्यो देवेभ्यो "नमः" वयं नमस्कारं कुर्म्म *। किञ्च, "साकन्निषेभ्यः" यस्मिन् यज्ञे सह निषत्तेभ्यः "नमः"। किञ्च "शतपदीम्" अस्मभ्यं फल-प्रदानाय अपरिमित-मार्गां "वाचं" स्तुति-रूपाम् ऋचं "युञ्जे" योजयामि ॥ १ ॥

अथ द्वितीया ।

३ १र २र ३ १ २ ३ १ २ ३ १ २
युञ्जेवाच७ंशतपदीङ्गायेसहस्रवर्त्तनि ।
३ १र २र ३ १ २
गायत्रन्त्रैष्टुभञ्जगत् ॥ २ † ॥

"शतपदीम्" अपरिमित-सङ्ख्याक-मार्गां‡ "वाचं" स्तोत्रं "युञ्जे" तेभ्यः प्रकृतेभ्यो वक्ष्यमाणेभ्योऽहं योजये। "गायत्र" गायत्राख्यं¶ "त्रैष्टुभं" त्रैष्टुभाख्यञ्च "जगत्" जागतञ्च साम-रूपां तामृचं साम वा "सहस्रवर्त्तनि" अपरिमित-मार्गं यथा भवति तथा "गाये" अहं गानं करोमि ॥ २ ॥

* 'नमः सखिभ्यः ऋत्विग्भ्यः पूर्वसद्भ्यः—पूर्व-सदशि उपरिष्टात्तेभ्यो नमः'—इति वि०।

† नैषाप्यन्यत्र क्वापि श्रूयते ।

‡ 'शतपदी-ऋक्' - इति वि०।

¶ 'गायत्रं प्रातःसवनम्, त्रैष्टुभं माध्यन्दिनं सवनम्, जागतं तृतीयं सवनम्'—इति वि०।

अथ तृतीया ।

२ १र २र ३ २ ३ १ २ ३ २ ३ १ २
गायत्रन्त्रैष्टुभञ्जगद्विश्वारूपाणिसम्भृता ।
३ १र २र ३ २
देवाओकाᳬसिचक्रिरे ॥ ३ * ॥ ७

"गायत्रं", "त्रैष्टुभं", "जागतम्"—"ऋक्समूहं "विश्वा" विश्वानि "रूपाणि" उद्गाता "सम्भृता" सम्भृतानि नानारूपाणि कृतानि "देवाः" अग्न्यादयश्च "ओकांसि" आश्रितानि स्थानानि "चक्रिरे" कुर्वन्ति† ॥ ३ ॥ २५ (७)

अथाग्निर्ज्योतिरिति तृचात्मकं सप्तमं सूक्तम्,‡

तत्र प्रथमा ।

३ २उ ३ १ २ ३ २उ ३ २ ३ १ २
अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रोज्योतिर्ज्योतिरिन्द्रः ।
२ ३ २ ३ २ ३ १ २
सूर्य्योज्योतिर्ज्योतिःसूर्यः ॥ १ ¶ ॥

एषा स्पष्टा§ ॥ १ ॥

---

* इयमपि नान्यत्रोपलभ्यते ।

† 'चक्रिरे—कृतवन्तः इति वि० । 'विश्वरूपा उक्ताः'—इति च वि० ।

‡ 'इदानीं ज्योतींषि ज्योतिष्टोमे'—इत्यादि वि० ।

¶ य० वे० ३, ९ ।

§ अत्रेयं महीधर-व्याख्या--"अथाग्निहोत्र-होम-मन्त्राः। अग्निर्ज्योतिरित्यारभ्य यन्त इत्यतः प्राक् । सप्तमन्त्राणां प्रजापतिरृषिः सामान्यतः । यत्र ऋषि-विशेषो-

अथ द्वितीया।

१ २ ३ १२ २२ ३ १ २ ३ १ २
पुनरूर्जानिवर्त्तस्व पुनरग्न इषायुषा।
१ २ ३ १ २
पुनर्नःपाह्यंहसः ॥ २ * ॥

हे "अग्ने!" "ऊर्जा" बलेन "इषा" अन्नेन "आयुषा" जीवनेन च "पुनः" अस्मान् "निवर्त्तस्व" अस्मान् प्रत्यागच्छ।

---

ऽभिधीयतेऽनुक्रमणीकारैस्तत्र द्वावप्यृषी। यथाग्निर्ज्योतिर्द्वे तचापश्यत् परां जीवलस्यैलकिरिति (अनु० १, ११)। सप्त लिङ्गोक्त-देवता गायत्र्यः आद्याः पञ्चैकपदाः। अग्निर्ज्योतिः सूर्य्यो ज्योतिः एते द्वे एकपदे गायत्र्यौ तचा मुनिरपश्यत्। परां ज्योतिः सूर्य्यं इमां चेलकस्य पुत्रो जीवल ऋषिरपश्यदित्यर्थः। अथ का० प्रदीप्तामभि जुहोत्यग्निर्ज्योतिरितीति (४, १४, १४३)। या समित् प्रदीप्ता तामभिलक्ष्य जुहुयात्। अग्निर्ज्योतिषमिति (३, २, १) काण्वशाखोक्त-मन्त्रेण समित्प्रक्षेपः। मन्त्रार्थस्तु—योऽयमग्निर्देवः स एव ज्योतिर्दृश्यमान ज्योतिःस्वरूपम्। यद्वेदं दृश्यमानं ज्योतिः तदेवाग्निर्देवः। देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम्। स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम्। अयं सायंकालीनोऽग्निहोत्र-होम-मन्त्रः ॥ सूर्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहेति प्रातर्होममन्त्रः सायंहोममन्त्रवद्व्याख्येयः। सूर्य-सम्बन्धि तेजो रात्रावग्निं प्रविशतीति सायमग्निर्ज्योतिरिति मन्त्रो युक्तः उदय-कालेऽग्नि-सम्बन्धि ज्योतिः सूर्यं प्रविशति। तस्मात् प्रातः सूर्य्यो ज्योतिरिति मन्त्रः। अग्निमादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी सम्पद्येते उद्यन्तं वादित्यमग्निरनु समारोहति। तस्माद्धूम एवाग्नेर्दिवा ददृश इति तित्तिरि-श्रुतेः। का० अग्निर्वर्च इति ब्रह्मवर्चसकामस्येति (४, १४, १५)। ब्रह्मवर्चसकामस्तु अग्निर्वर्चः सूर्यो वर्च इति सायं प्रातश्च जुहुयात्। योऽग्निर्वर्चो ऽनन्यभूतः। यस्य तज्ज्योतिर्वर्चो ऽनन्यभूतम्। तस्मै सुहुतमस्तु। एवं रूपो वर्च इति"॥

* य० वे० १२, ९।

किञ्च त्वं "नः" अस्मान् "अंहसः" पापात् "पाहि" पालय। पुनः-शब्दस्यावृत्तिरादरार्था* ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १र १ १र २ २ ३ १ २ ३ १ २
सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया।

३ १ २ं १ २ ३ १ २
विश्वप्स्न्या विश्वतस्परि ॥ ३ † ॥ ८

हे "अग्ने !" त्वं "रय्या" रमणीयेन धनेन "सह" "निवर्त्तस्व" तत् अस्मान् प्रापयेत्यर्थः। किञ्च, "विश्वतः" सर्वतः "परि" उपरि [ परीति सप्तम्यर्थानुवादकः ] "विश्वप्स्न्या" [प्सा भक्षणे (अदा० प०) ], विश्वस्य उपभोक्त्या‡ "धारया" "पिन्वस्व" अस्मान् सिञ्च¶ ॥ ३ ॥ २६ (८)

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* अस्यापरवर्च्चस्विः-पाठो भगवन्मनुना विहितो ब्रह्मचारि-स्कन्न-रेतः-चरणे—तथाहि—"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ( २, १८१ )"—इति।

† य० वे० १२, १०।

‡ 'विश्वप्स्न्या विश्वव्यापिन्या धारया'—इति वि०।

¶ 'वैराजपृष्ठे चतुर्थेऽह्नि एवं श्रूयते—"स वैराजमसृजत, तदग्ने घोषोऽन्वसृजत, ततश्चाग्निमन्थः, एतद्धुमन्त्रणम्"—इति'—इति वि०।

अथ सप्तमे खण्डे—

यदिन्द्राहंयथात्वमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २उ ३ १र २र ३ २ ३ १ ३ २
यदिन्द्राहंयथात्वमीशीयवस्वएकइत्।
३ २ ३ १ २
स्तोतामेगोसखास्यात्॥ १ *॥

हे "इन्द्र!" "यथा" "त्वम्" "एकइत्" एकएव केवलं "वस्वः" वसुनः धनस्य "ईशिषे" ईश्वरो भवसि, एवमहमपि "यद्" यदि "ईशीय" ऐश्वर्य्य-युक्तः स्यामिति तदानीं "मे" मम "स्तोता" "गोसखा स्यात्" गोभिः सहितो भवेत्। ईश्वरस्य तव स्तोता कुतो हेतोर्गो-सहितो न भवेत् अपितु भवेदेवेत्यभि-प्रायः॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
शिक्षेयमस्मैदित्सेयंशचीपतेमनीषिणे।
२ ३ १र २र ३ १
यदहङ्गोपतिःस्याम्॥ २ †॥

---

* ऋ० आ० २, १, ३, ८ (१भा० ३०२पृ०) = ऋ० वे० ६, १, १४, १।

† ऋ० वे० ६, १, १४, २।

हे "शचीपते" शक्तिमन्निन्द्र! "अस्मै" "मनीषिणे" मनस ईशित्रे स्तोत्रे "दित्सेयं" दातुमिच्छेयम्, तदनन्तरं "शिक्षेयं" प्रार्थितं धनं दद्याञ्च "यद्" यदि "अहं" "गोपतिः" गवामधिपतिः त्वत्प्रसादात् भवेयम् ॥ २ ॥

अथ तृतीया।

३ १२ ३१ २ ३ १ २ ३ २
धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते।

१र २र ३ १ ०
गामश्वम्पिप्युषी दुहे ॥ ३ * ॥ ९

हे इन्द्र! "ते" तव "सूनृता" स्तुति-रूपा वाक् "धेनुः" दोग्ध्री गौर्भूत्वा "सुन्वते" सोमाभिषवं कुर्वते "यजमानाय" "गाम्" "अश्वं" च [उपलक्षणमेतत्] गवाश्वादिकं सर्वमभिलषितं "दुहे" दुग्धे। किंकुर्वती? "पिप्युषी" तमेव यजमानं प्रवर्द्धयित्री ॥ ३ ॥ २७ (९)

आपोहिष्ठेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ १र २र ३ ३ ३ १ १३ १ २
आपो हिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन।

३ १र २र ३ १ २
महे रणाय चक्षसे ॥ १ † ॥

---

* ऋ० वे० ६, १, १४, ३।

† ऋ० वे० ७, ६, ५, १ = य० वे० ११, ५०।

"हि" यस्मात् कारणात् "आपः" या यूयं "मयोभुवः" मयसः सुखस्य भावयित्र्यः "स्थ" भवथ, "ताः" तादृश्यो यूयं "नः" अस्मान् "ऊर्जे" अन्नाय "दधातन" धत्त अन्न-प्राप्ति-योग्यानस्मान् कुरुत अन्नमस्मभ्यं दत्तेत्यर्थः "महे" महते "रणाय" रमणीयाय "चक्षसे" दर्शनाय सम्यक् ज्ञानं प्रति योग्यान् कुरुतेत्यर्थः॥ १॥

अथ द्वितीया।

१२ ३१२३१२ १ २ ३१२
योवःशिवतमोरसस्तस्यभाजयतेहनः।
३ १ २ ३ १ २
उशतीरिवमातरः॥ २ †॥

हे आपः "वः" युष्माकं स्वभूतः "यः" "रसः" "शिवतमः" सुखतमः "इह" अस्मिन् लोके "तस्य" तं रसं "नः" अस्मान् "भाजयत" सेवयत उपयोजयतेत्यर्थः। तत्र दृष्टान्तः—"उशतीरिव" पुत्र-समृद्धिं कामयमानाः "मातरः" स्तन्यं रसं यथा भाजयन्ति प्रापयन्ति तद्वत्॥ २॥

---

* अत्रेयं निरुक्त-व्याख्या—'आपोहि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनाय"—इति १० ३, १७।

† ऋ० वे० ७, ६, ५, २ = य० वे० ११, ५१।

अथ तृतीया ।

१ २ १ २ ३ २ ३ १ २ ३ १ २

तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।

१ २ ३ १ २

आपो जनयथा च नः ॥ ३ * ॥ १०

हे "आपः !" यूयं "यस्य" पापस्य "क्षयाय" विनाशाय† "जिन्वथ" अस्मान् प्रीणयथ, "तस्मै" तादृशाय पाप-क्षयाय "अरं" क्षिप्रं "वः" युष्मान् "गमाम" गमयामास वयं शिरसि प्रक्षिपामीत्यर्थः [यद्वा, यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधी-र्जिन्वथ तर्पयथ, तस्मै तदन्नमुद्दिश्य वयमलं पर्याप्तं यथा भवति तथा वो युष्मान् गमाम गच्छाम]। किञ्च, हे आपः ! "नः" अस्मान् "जनयथ" पुत्र-पौत्रादि-जनने प्रयोजयतेत्यर्थः‡ ॥ ३ ॥ २८ (१०)

अथ वात आ वात्विति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १

वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे ।

२ ३ १ २

प्र न आयूꣳषि तारिषत् ॥ १ ¶ ॥

---

* ऋ० वे० ७, ६, ५, २ = य० वे० ११, ५२ ।

† 'क्षयाय—क्षयो निवासः । क्षयाय चतुर्थी सप्तम्याः स्थाने द्रष्टव्या'—इति वि० ।

‡ 'षष्ठेऽहनि अद्भिरेवोपाकुर्युः । * * * । आपो हि ष्ठेत्याभिः'—इति वि० ।

¶ छ० आ० २, २, ४, १० ( १भा० ४०७पृ० ) = ऋ० वे० ८, ८, ४५, १ ।

"वातः" वायुः "नः" अस्माकं "हृदे" हृदयाय "भेषजम्" औषधम् उदकं वा "आ वातु" आगमयतु। कीदृग्भूतम्? "शम्भु" रोग-शमनस्य भावयितृ, "मयोभु" मयः सुखस्य च भावयितृ। अपिच "नः" अस्माकम् "आयूंषि" अन्नानि वा "प्र तारिषत्" प्रवर्द्धयतु॥ १॥

अथ द्वितीया।

२ १ १ ३१ २ ३२उ ३ २३१ २
उतवातपितासिनउतभ्रातोतनःसखा।
१२ ३ १ २
सनोजीवातवेकृधि॥ २ *॥

"उत" अपिच हे "वात!" त्वं "नः" अस्माकं "पिता असि" उत्पादकोऽसि पालयिता वा। "उत" अपिच "भ्राता" असि। "उत" अपिच "नः" अस्माकं "सखा" समान-ख्यानश्च असि। "सः" त्वं "नः" अस्मान्† "जीवातवे"‡ जीवन-हेतवे यागाय "कृधि" कुरु [करोतेश्छान्दसो विकरणस्य लुक् (२, ४, ७३), "श्रु-शृ-णु-पृ-कृ-वृभ्यश्छन्दसि (६, ४, १०२) —इति हेर्धिरादेशः॥ २॥

* ऋ० वे० ८, ८, ४५, २।

† 'नः—अस्मभ्यम्'—इति वि०।

‡ "तुमर्थे से-सेनसेन्-कसे-कसेनध्यै-अध्यैन्-कध्यैकध्यैन्-शध्यैन्-तवै-तवे ङ्-तवे (३, ४, ९)"—इति पा०।

अथ तृतीया ।

२ ३ १ २  ३ २  २ ३ १ २ ३ १ २
यददोवाततेगृहेऽ३ऽमृतन्निहितङ्गुहा ।
१ २  ३ १ २
तस्यनोधेहिजीवसे ॥ ३ * ॥ ११

हे "वात" वायो ! "ते" तव "गृहे" स्थाने "यदद:" यदिदम् "अमृतस्य" [कर्मणि षष्ठी (३, १, ८५)] अविनाशि "गुहा †" गुहायां गह्वरे हितं निहितं वर्त्तते । हे "विभा-वसो" विशिष्ट प्रकाश-धनवन् ! वायो ! "तस्य" तद्धनं [कर्मणि षष्ठी (३, १, ८५)] "नः" अस्माकं "धेहि" देहि प्रयच्छेत्यर्थः ‡ ॥ ३ ॥ २९ (११)

अथाभिवाजीति तृचात्मकं चतुर्थं सूक्तम् ¶

तत्र प्रथमा ।

३ १ ३ ३ ३ १ २  ३ १ २
अभिवाजीविश्वरूपोजनित्रं
३ २ ३ २ ३ १ २  ३ २
हिरण्ययम्बिभ्रदत्कं सुपर्णः ।

---

* ऋ० वे० ८, ८, ४५, ३ ।

† 'गुहा—हृत्पुण्डरीके निहितम्'—इति वि० ।

‡ 'तृतीयेऽङ्के विरूप-पृष्ठे विनियोगः । वातस्याधानमिति तृचेनाहुमध्ययेत्'—इति वि० ।

¶ 'अवाचतव्रतं साम, तेनोद्गायेत् यदभिवाजीविश्व इति वि० ।

१२ ३ १२३१२ १२३
हव्यं स्वभानुमृतुथावसानः

१२३१२ ३१२३ १ २
परिस्वयम्मेधमृज्रोजजान॥१ *॥

"सुपर्णः" सुपतनः शोभन-पतनो गरुत्मान् इव, "वाजी" वेगवान् बलवानन्नवान् वा, "विश्वरूपः" नानाविध-प्रकाशः, सहि चित्रभानुः "ऋज्रः" [ ऋजी भर्जने (भ्वा० आ०), भ्रस्ज-पाके ( तु० उभ० ), ऋजति भृज्जति पचतीति ऋज्रः] अग्निः सः स्वकीयं "जनित्रं" जनन-स्थानम् अरणि-विलम् "अश्मकम्" स्व-तेजसा व्याप्तम् अतएव "हिरण्ययं" हिरण्मयमिव स्थितम् "अभि" अभितः/साकल्येन "बिभ्रत्" पुष्णन् "सूर्यस्य भानुम्" सवितुः प्रकाशम् "ऋतुथा" कालेकाले रात्रौ "वसानः" वस्त्र-यदाच्छादयन् ["अग्निमादित्यं सायं प्रविशति तस्मादग्नि दूरान्नक्तं ददृशे"—इति श्रुतेः ] "मेधं परि" यज्ञं लक्षीकृत्य स्वयं "जजान" उपद्यत॥ १॥

अथ द्वितीया।

३ १२ ३२ ३ १२३
अप्सुरेतःशिश्रिये विश्वरूपं

१ २ ३ २उ ३ १ २ ३१२
तेजःपृथिव्यामधियत्सम्बभूव।

३ १ २ ३ १ २ ३ २ ३ १ २ ३
अन्तरिक्षेस्वम्महिमानम्मिमानः

१२ ३ ३ २ ३ १ २३१२
कनिक्रन्तिवृष्णोअश्वस्यरेतः॥२ †॥

* मेधमन्यत्र क्वापि दृश्यते। † इयमपि मान्यत्र।

"रेतः" सारभूतं "विश्वरूपं" नानारूपं "यत्" अन्नात्मकं "तेजः" "अप्सु" "शिश्रिये" आश्रयते [ "स नि लीयते सोमः प्राविशन्"—इति श्रुतेः ] यश्च "पृथिव्यामधि" भूमौ "सम्बभूव" तिष्ठति ["अग्निः पृथिवी-स्थानः (निरु० दै० १, १४)"—इति हि निरुक्तम् ]। सः "अन्तरिक्षे" आकाशे "स्वं" महिमानं" किरण-जालं "मिमानः" व्यापारयन् "वृष्णः अश्वस्य रेतः" सोमाहुतिं प्रति ["सोमो वृष्णो अश्वस्य रेतः"—इति श्रुतेः] "कनिक्रन्ति" याचमान इव पुनः-पुनः क्रन्दते शब्दं करोति, यद्वा आक्रोशन्निव भृशं शब्दायते ॥ २ ॥

अथ तृतीया।

३ १ २३२ १२२ १२ २२ २
अयꣳसहस्रापरियुक्तावसानः

१ २ ३२३१२
सूर्यंस्वभानुंयज्ञोदाधार।

३ १ १२१ २३१ १
सहस्रदाःशतदाभूरिदावा

३ १ ३१२ १२ ३ १ २
धर्त्तादिवोभुवनस्यविश्पतिः॥ ३ * ॥ १२

"दिवः" स्वर्गस्य अथ "भुवनस्य" भूतजातस्य लोकस्य "धर्त्ता" धारयिता, "विश्पतिः" विशां प्रजानां पालयिता,

---

* नैषाध्यन्य।

"सहस्रदाः शतदाः भूरिदा वा" यो यावत् प्रार्थयते सहस्रं शतं भूरि अपरिमितं वा तस्मै तस्मै तावद्दाता "यज्ञः" यजति यः "अयम्" अग्निः "युक्ता" युक्तानि स्वात्मना सम्बद्धानि "सहस्रा" सहस्राणि स्वकीय-किरण-जालानि "परि वसानः" परितः आच्छादयन् "सूर्यस्य भानुं" रात्रौ सूर्यस्यापि प्रकाशं "दधार" स्वयमेव धारयति ॥ ३ ॥ ३० (१२)

नाकेसुपर्णमिति द्व्यचात्मकं सूक्तम् पञ्चमम्,*

तत्र प्रथमा।

१ २ ३ १२उ ३ १र २र
नाकेसुपर्णमुपयत्पतन्तᳬ

३ १र २र ३ १ २
हृदावेनन्तोअभ्यचक्षतत्वा।

१ २ ३ १ २ ३ २
हिरण्यपक्षंवरुणस्यदूतं

२ १ ३ १ २ ३ १ २ ३ १
यमस्ययोनौशकुनम्भुरण्युम् ॥ १ † ॥

हे वेन! "त्वा" त्वां "हृदा" हृदयेन मनसा "वेनन्तः" कामयमानाः स्तोतारः "नाके" अन्तरिक्षे "अभ्यचक्षत" अभि पश्यन्ति। तदानीं त्वमुपागच्छसीति शेषः। कथम्भूतम्?

---

* 'इदानीं परिमद्दीऽवर्गणेषु वर्ततेषु चित्रेषु यज्ञपात्रेषु त्रिः छन्दोगः परिगायेत् नाकेसुपर्णमिति'—इति वि०।

† छ० आ० ४, १, ३, ८ (१भा० ८४४पृ०)=ऋ० वे० ८, ७, ८, ३।

"सुपर्णं" शोभन-पतनं, "पतन्तम्" अन्तरिक्षे गच्छन्तं, "हिरण्य-पक्षं" हिरण्मयाभ्यां पक्षाभ्यामुपेतं, "वरुणस्य" जलाभिमानी देवस्य "यमस्य" नियामकस्य वैद्युताग्नेः "योनौ" स्थानेऽन्तरिक्षे "शकुनं" पक्षिरूपेण वर्त्तमानं "भुरण्युं" भर्त्तारं [यद्वा, वृष्टि-प्रदानादिना सर्वस्य जगतः पोषकम्। भुरण धारण-पोषणयोः कण्ड्वादिः, अस्मादौणादिक यु प्रत्ययः ॥ १ ॥

अथ द्वितीया ।

२ १ ९ २ २उ ३ १ २ ३ २
ऊर्द्ध्वोगन्धर्वोअधिनाकेअस्थात्

३ २ ३ १र २र ३ १ २
प्रत्यङ्चित्राबिभ्रदस्यायुधानि ।

१ २ ३ १ २ ३ २ ३ २
वसानोअत्कꣳसुरभिन्दृशेकꣳ

१र २र ३ १ २
स्वा३ऽर्णनामजनतप्रियाणि ॥ २ * ॥

"ऊर्द्ध्वः" उपरि देशे वर्त्तमानः "गन्धर्वः" गवामुदकानां धर्त्ता† ["गवि धृञो वः"—इति गो-शब्दोपपदात् धृञ् आधारणे (भ्वा०उ०)—इत्यस्मात् व-प्रत्ययः उपपदस्य गन्भावश्च] ईदृशो वेनः "प्रत्यङ्" अस्मान् प्रपश्यन्नभिमुखः सन् "नाके अधि" अन्तरिक्षे "अस्थात्" तिष्ठति। किङ्कुर्वन् ? "अस्य" आत्मनः स्वभूतानि "चित्रा" चित्राणि आश्चर्य्यभूतानि वा "आयुधानि" "बिभ्रत्" धारयन् [ बिभर्त्तेः शतरि "भृञा-

* ऋ० वे० ८, ७, ८, ४ ।

† 'गन्धर्वः—गोयमान स्वायत्त सामभिः'—इति वि० ।

मित् (७, ४, ७६ )"—इत्यभ्यासस्येत्वम्, "नाभ्यस्ताच्छतुः (७, १, ७८)"—इति नुम्-प्रतिषेधः, "अभ्यस्तानामादिः ( ६, १, १८९)"—इत्यादि रुदात्तः ], तथा "सुरभि" शोभनम् "अत्कम्" आत्मीयं व्याप्तं रूपं "वसानः" सर्वत्राच्छादयन्। किमर्थम् ? "दृशे" दर्शनार्थम् ["दृशेविख्ये च ( ३, ४, ११ )"—इति निपात्यते ]। "कम्" [—इति पूरकम् ] तत्र दृष्टान्तः—"स्वर्णः" शोभनारण आदित्यः स यथा आत्मीयं रूपं दर्शनाय सर्वत्राच्छादयति तद्वत्। तदनन्तरं "नाम" नामानि नमनशीलान्युदकानि "प्रियाणि" सर्वेषामनुकूलानि "जनयत" जनयति वृष्टि-मुत्पादयतीत्यर्थः ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ २ ३ १र २र ३

द्रप्सःसमुद्रमभियज्जिगाति

२ ३ १ २ ३ १ २ ३ १ २

पश्यन्गृध्रस्यचक्षसाविधर्म्मन् ।

३ २ ३ १ २ ३ १ २ ३ २

भानुःशुक्रेणशोचिषाचकान

३ १ २ ३ १ २ ३ १ २

स्तृतीयेचक्रेरजसिप्रियाणि ॥ ३ * ॥ १३

"विधर्मन्" विधर्मणि विधारकेऽन्तरिक्षे स्थितः "द्रप्सः" द्रवणशीलः† [यद्वा, द्रप्सा विन्दवः तद्वान्, अर्श आदित्वादच् (५,

---

* ऋ० वे० ८, ७, ८, ५ ।

† 'द्रप्सः—समुद्रम्'—इति वि० ।

२, १२७)] "गृध्रस्य" गृध्रो रसानभिकाङ्क्षतः सूर्यस्य* "चक्षसा" तेजसा "पश्यन्" प्रकाशमानो वेनः "यद्" यदा "समुद्रं" समुन्दन-शीलं मेघम् "अभि जिगाति" अभिगच्छति तदानीं "भानुः" सूर्यः "शुक्रेण" "शोचिषा" तेजसा "तृतीये" "रजसि" लोके "चकानः" दीप्यमानः "प्रियाणि" सर्वेषामभीष्टानि उदकानि "चक्रे" करोति ॥ ३ ॥ ३१ (१३)

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य विंशस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥†

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ २० ॥

## ॥ इति नवमस्य द्वितीयोऽर्द्धप्रपाठकः ॥‡

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे त्रिंशोऽध्यायः†

समाप्तः ॥ २० ॥

---

* 'गृध्रस्य—अन्तरिक्ष-गामिनः पक्षि-भूतस्य। अथवा गृध्रो मांसाशी अतः सर्वप्राणि नाशनकरः' तद्वच श्रुतौ—"एष एव मृत्युः, एतस्मिन् मरणे पुरुषः * * * मयो गृध्रः"। अथवा गृध्रो गरुत्मान् पक्षी'—इति वि०।

† 'समाप्तानि एकाहाहीनसत्रप्रायश्चित्तक्षुद्रकर्मसु सामानि छन्दोगानां मन्त्रभूतानि। तेषामार्षच्छन्दो देवताः, विनियोगश्च ब्राह्मण-सिद्धः'—इति वि०।

‡ 'नवम-प्रपाठकस्य प्रथमोऽध्यायः'—इति वि०। एषएवैको मूलविवृतौ गीतौ विवरण-कारस्येति ध्येयम्।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २१ ॥

## ॥ अथैकविंशोऽध्याय आरभ्यते ॥

तत्र,

आशुःशिशान इत्यारभ्य नवसूक्तात्मक एक एव खण्डः*।

तत्र प्रथम[illegible] —

३ १र २र ३२उ ३ १
आशुःशिशानोवृषभोनभीमो
२ ३१र २र ३ १
घनाघनःक्षोभणश्चर्षणीनाम् ।
३ १ २ ३ १ २ ३ २
सङ्क्रन्दनोनिमिषएकवीरः
३ १र २र ३ १र १र
शतꣳसेनाअजयत्साकमिन्द्रः ॥ १ † ॥

* 'इदानीं शाग्निस्थित्ये क्रतौ "ब्रह्मा प्रतिरथं जपेत्"—इत: "[illegible] [illegible]त्युक्तं तत्र ब्रह्मत्वं [illegible] विद्यया क्रियते, एतस्मात् कारणात् उद्गात्राणामपि [illegible] [illegible]ब्रह्मत्वमाम्नातं सामस्य परिसमाप्ति एतस्मात् कारणात् सर्वासु शाखासु प्रतिरथः [illegible] [illegible]च्यते । इन्द्रः सर्वस्य देवता, हिरण्यग ऋषिः, प्रजापते[illegible]राषम्, त्रिष्टुप् छन्दः'—इति वि० ।

† ऋ० वे० ८, ५, १२, १ = य० वे० १७, ३३ ।

[अत्रैन्द्रोऽप्रतिरथऋषिः, त्रिष्टुप् छन्दः, इन्द्रो, देवता साग्निचित्ये क्रतौ अग्नौ प्रणीयमानेऽयमध्यायो ब्राह्मणेन जाप्यः । ] अयमिन्द्रः "आशुः" शीघ्रकारी व्यापको वा "शिशानः" निशितः शत्रूणां भयजनक इत्यर्थः । कइव ? "वृषभो न भीमः" [बिभेत्यस्मादिति भीमः तादृशः ] भीमः वृषभो यथा—स यथा तीक्ष्णाभ्यां शृङ्गाभ्यां भीमो भवति तद्वत् [ अथवा शिशानस्तीक्ष्णमिति व्यत्ययेनात्मनेपदम्] "घनाघनः" घातकः शत्रूणां हन्ता [पचाद्यचि हन्तेर्घत्वञ्चेति द्विर्वचनम् अभ्यासस्याङागमः घत्वञ्च धात्वभ्यासयोः] "चर्षणीनां" चर्षणयो मनुष्याः मनुष्याणां द्वेष्याणां "क्षोभणः" क्षोभयिता, "सङ्क्रन्दनः" सम्यक् क्रन्दयिता प्राणिनाम् आकर्षणेन प्रहारेण वा, "अनिमिषः" चक्षुर्निमेष-रहितः सर्वदा स्व-यज्ञमागमादि-कार्येष्वनलस इत्यर्थः, "एकवीरः" [वीरयत्यमित्रान् इति वीरः, एकश्चासौ वीरश्च; अथवा,] एकएव विक्रान्तः असहायेन कार्यक्षमइत्यर्थः । ईदृशो ऽयमिन्द्रः "शतं सेनाः" "साकं" सह एकोद्योगेनैव "अजयत्" जयति ॥ १ ॥

अथ प्रथमे सूक्ते द्वितीया ।

२ १ १ २     २ १ २ २ १ २
सङ्क्रन्दनेनानिमिषेणजिष्णुना
२ १ २     २ १ २२ १ २
युत्कारेणदुश्च्यवनेनधृष्णुना ।

१ २र ३१२ १
तदिन्द्रेणजयततत्सहध्वं
१२ ३१२ ३१२
युधोनरइषुहस्तेनवृष्णा ॥ २ * ॥

[अप्रतिरथः, त्रिष्टुप्, इन्द्रः।] अस्तुनामेन्द्र उक्तविधः, तथाप्य स्माकं किमिति चेत् तत्राह—"सङ्क्रन्दनेन" "अनिमिषेण" चोक्त-लक्षणेन, "जिष्णुना" जय-शीलेन, "युत्कारेण" [योधनं युत्] युद्धकारिणा [कर्मण्यण् (३, २, १)], "दुश्चयवनेन" अन्यैरविचाल्येन [च्युङ् प्रुङ् गतौ (भ्वा० आ०), "छन्दसि गत्यर्थेभ्यः (३, ३, १२९)"—इति युच्], "धृष्णुना" धर्षकेण। ईदृशेन "इन्द्रेण" "तत्" युद्धं "जयत"; "तत्" शत्रु-बलं "सहध्वम्" अभिभवत। हे "युधः" योद्धारः! हे "नरः" नेतारः! [सामान्यवचनं विभाषितं विशेषवचने बहुवचनम् (८, १, ७४)"—इति पूर्वस्याविद्यमानवत्त्व-निषेधादुत्तरं निह-न्यते]। पुनः कीदृशेनेन्द्रेण? "इषुहस्तेन" "वृष्णा" वर्ष-कर्त्रा च ॥ २ ॥

अथ प्रथमे सूक्ते तृतीया।

१र२र ३ १ २ ३ १ २ ३ १र
सइषुहस्तैःसनिषङ्गिभिर्वशी
२र ३ २उ ३ १ २ ३ १ २
सꣳस्रष्टासयुधइन्द्रोगणेन।

---

* ऋ० वे० ८, ५, २२, २ = य० वे० १७, ३४।

२ १ २ ३ १ २ ३ २
स॑सृष्टजित्सोमपा बाहुशर्द्ध्यू
१ २ ३ १ २ ३ १ २
ऽ३ग्रधन्वाप्रतिहिताभिरस्ता॥ ३ * ॥ १

[अप्रतिरथः, त्रिष्टुप्, इन्द्रः।] पूर्व्व-मन्त्रे इन्द्रेण जयते-त्युक्तम् अत्रेन्द्रस्य जय-साधन-सामर्थ्यं प्रतिपादयति—"सः", इन्द्रः "इषु-हस्तैः" भटैः मरुदादिभिः "वशी" वश्यैस्तद्वान्, तथा "निषङ्गिभिः" युक्तः [ निषङ्गः खड्गः, तद्वद्भिः] वशी, सचेन्द्रो "युधः" युध्यमानः सन् [इगुपधलक्षणः कः (३,१,१३५), अथवा 'युधः' युद्ध-हेतोः] "गणेन" शत्रु-सङ्घेन सह संस्रष्टा एकीभवनशीलः। यतएवंविधः अतः "संसृष्टजित्" ये परस्परैक-मत्येन युद्धाय संसृष्टा भवन्ति, तेषां जेता च, "सोमपाः" सोमस्य पाता, "बाहुशर्द्धी" शर्द्धो बलं बाहु-बलं, तद्वान् [मत्व-र्थीय इनिः (५, २, ११५)। यद्वा, शृधु प्रहसने (भ्वा० आ०), बाहुभ्यां शर्द्धयत्यति भवतीति बाहुशर्द्धी "सुप्यजातौ णिनि स्ताच्छिल्ये (३, २, ७८)"—इति णिनिः], "उग्रधन्वा" उद्यत-धन्वा, "प्रतिहिताभिः" शत्रुषु प्रेरिताभिरिषुभिः "अस्ता" मारयिता; यत्रेषुन् मुञ्चति तत्र हृथा न भवतीत्यर्थः। ईदृशेने-न्द्रेण जयतेति सम्बन्धः॥ ३ ॥ १

---

* ऋ० वे० ८, ५, २१, ३ = य० वे० १७, ३५।

अथ द्वितीये सूक्ते प्रथमा।

१२ २११ २११
बृहस्पतेपरिदीयारथेन

२ १२ २२ २१२
रक्षोहामित्राँ अपबाधमानः।

२ १२ २२ १२ २१२ २२
प्रभञ्जन्त्सेनाःप्रमृणोयुधाजय

२ १ २ ११२ १२
न्नस्माकमेध्यवितारथानाम्॥ १ *॥

[अप्रतिरथः, त्रिष्टुप्, बृहस्पतिः।] हे "बृहस्पते" बृहतां पते! पालयितः! देव! "रथेन" "परिदीय" परिगच्छ [दीयति गति-कर्मा (निघ० २,१४, ६८)]। आगत्य च "रक्षोहा:" रक्षसां हन्ता "अमित्रान्" शत्रून् "अप बाधमानः" सर्वतो नाशयन् तथा "सेनाः" शत्रु-सम्बन्धिनीः "प्रभञ्जन् प्रकर्षेण नाशयन् "प्रमृणन्" प्रकर्षेण हिंसन् [मृण हिंसायाम् (तु० प०), इगुपध-लक्षणः कः (३,१, १३५)]। केन हिंसन्? "युधा" युद्धेन ["सावे-काच (६, १, १६८)"—इति विभक्तेरुदात्तत्वम्] "जयन्" एवं सर्वं जयं प्रतिपद्यमानः। ईदृशस्त्वम् अस्माकं रथानाम् "अविता" रक्षिता "एधि" भव॥ १॥

* ऋ० वे० ८, ५, १९, १ = य० वे० १७, ३९।

अथ द्वितीये सूक्ते द्वितीया।

३ १र २र३ १ २ ३
बलविज्ञायःस्थविरःप्रवीरः
१ २ ३ १र २र ३ २
सहस्वान्वाजीसहमानउग्रः।
३ १ २ ३ १ १ ३ १र
अभिवीरोअभिसत्वासहोजा
२र ३ २ ३ १ १ ३ २
जैत्रमिन्द्ररथमातिष्ठगोवित्॥ २ *॥

[अप्रतिरथः, त्रिष्टुप्, इन्द्रः।] सर्वस्य बलं विजानातीति "बलविज्ञायः" [यद्वा, ममायमिति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः सर्वस्य बलभूत इत्यर्थः], "स्थविरः" महान्† "प्रवीरः" प्रकर्षेण वीरः‡, "सहस्वान्" पराभिभव-सामर्थ्यवान्, "वाजी" वेगवान् अन्नवान् वा, "सहमानः" शत्रूणामभिभविता, "उग्रः" उद्गूर्ण-बलः, "अभिवीरः" अभिगता वीरा वीर्यवन्तो ऽनुचरा यस्य स तथोक्तः, "अभिसत्वा" अभिगत-सत्वा, "सहोजाः" सहसो बलाज्जातः। एवं महानुभावस्त्वं हे इन्द्र! "जैत्र" जय-शीलं "रथम्" "आ तिष्ठ" अस्मत्सहायार्थम् आरो-

* ऋ० वे० ८, ५, १९, ५ = य० वे० १७, ३७।

† 'स्थविरः—महत्-प्रमाणः। अथवा स्थविरः स्थैर्य-संयुक्तः। अथवा स्थविरो गुणैर्वृद्धः'—इति वि०।

‡ 'प्रवीरः—* * *। अथवा प्रकर्षेण वीरैः सम्पन्नः'—इति वि०।

दुमर्हसि। त्वञ्च "गोवित्" उदकस्य स्तुतेर्वा लब्धा वेदिता वा* ॥ २ ॥

अथ द्वितीये सूक्ते तृतीया।

२ २ १ २ २ १ १ १ २

गोत्रभिदङ्गोविदंवज्रबाहु

१ ३ २ १ २ ३ १ २ १ २

ञ्जयन्तमज्मप्रमृणन्तमोजसा।

३१ २ २ १ १ ३

इमꣳसजाताअनुवीरयध्व

१ २ २ २ ३ १ २

मिन्द्रꣳसखायोअनुसꣳरभध्वम् ॥ ३ † ॥ २

[अप्रतिरथः, त्रिष्टुप्, इन्द्रः।]"गोत्रभिदं" [गा उदकानि त्रायन्त इति गोत्रा मेघाः ; यद्वा, गौर्भूमिः तां त्रायन्तइति] गोत्राः पर्वताः,तेषां भेत्तारम्‡"गोविदम्" उदकस्य लब्धारं,"वज्रबाहुं" वज्र-हस्तं ["प्रहरणार्थेभ्यः (२,२,३७ वा०)"—इति सप्तम्याः पर-निपातः], "जयन्त" जयन-शीलम्, "अज्म" गमन-शीलं शत्रु-बलम् "ओजसा" बलेन जयन्तं [यद्वा, 'अज्म' आजिं 'जयन्तं' 'ओजसा' बलेन] "प्रमृणन्तं शत्रूनभिभवन्तम्। ईदृशं मह्वा-

* 'गोवित्—रश्मिवान्। अथवा उदकवान्। अथवा * * *। अथवा गावो यस्य विद्यन्ते स गोवित्। अथवा विद ज्ञाने (अदा० प०)—इत्यस्यैतद्रूपम्'—इति वि०।

† ऋ० वे० ८, ५, २१, ६ = य० वे१ १७, ३८।

‡ 'गोत्रभिदं—शत्रूणां भेत्तारं'—इति वि०।

नुभावम् इन्द्रम् हे "सजाताः" सहोत्पन्ना योद्धारो यूयम् "अनु-वीरयध्वम्" एनमग्रतः कृत्वा 'अनु' पश्चाद् 'वीरयध्वं' वीरकर्म्म युद्धं कुरुध्वम् [ वीर शूर विक्रान्तौ, वीर-शब्दात् "तत् करोति तदाचष्टे ( सि० कौ० ति० चु० )"—इति णिच् ]। हे "सखायः" परस्परं सखिभूता यूयम् "इमम् इन्द्रम्" "संरभ-माणम्" अनुसंरभध्वम्॥ ३॥ २

अथ तृतीये सूक्ते प्रथमा।

२ २ ३ २ ३ १ २ ३ १ २
अभिगोत्राणिसहसागाहमानो

३ २ ३ २ ३ १ २ ३ १ २
ऽदयोवीरःशतमन्युरिन्द्रः।

३ १ २ ३ १ २ ३ १
दुश्च्यवनःपृतनाषाडयुध्यो

२ ३ १ २ ३ १ २ १
ऽस्माकꣳसेनाअवतुप्रयुत्सु॥ १ *॥

[ अप्रतिरथ त्रिष्टुप् इन्द्रः। ] अयम् "इन्द्रः" "गोत्राणि" अभ्राणि मेघान् "सहसा" बलेन "अभि गाहमानः" प्रविशन्, "अदयः" निर्दयः, "वीरः" विक्रान्तः, "शतमन्युः" बहु-यज्ञः बहु-क्रोधो वा, "दुश्च्यवनः" अन्यैरच्याव्यः, "पृतनाषाट्" शत्रु-सेना-नामभि-भविता [ "छन्दसि सहः ( ३, २, ६३ )"—इति ण्विः, "सहेः साढः सः (८, ३, ५६)"—इति मूर्द्धन्यादेशः ], "अयुध्यः"

* ऋ०वे० ८, ५, २३, १ = य० वे० १७, ३९।

सम्प्रहर्त्तुमशक्यः [ युध सम्प्रहारे, छान्दसः क्यप् (३, १, ८५)] । ईदृगिन्द्रः अस्माकं सेना "युतस्तु" सङ्ग्रामेषु "प्रावतु" प्रकर्षेण रक्षतु ॥ १ ॥

अथ तृतीये सूक्ते द्वितीया ।

१ २    ३ २उ ३ १ २<br>
इन्द्र आसान्नेता बृहस्पति<br>
१ २    ३ १ २ ३१२ ३ १ २<br>
र्दक्षिणा यज्ञः पुरएतु सोमः ।<br>
२    ३ १    ३ १र<br>
देवसेनानामभिभञ्जतीनां<br>
२र    ३ १ २ ३ १ २<br>
जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ २ * ॥

[अप्रतिरथः, त्रिष्टुप्, इन्द्रः ।] "आसाम्" अस्मत्सहायार्थमागतानां देवसेनानाम् अयम् "इन्द्रः" "नेता" नायकः अस्तु। तथा तस्य "बृहस्पतिः" "पुरएतु" एवं "दक्षिणा यज्ञः सोमः" च पुरएत्विति प्रत्येकं सम्बन्धः। तथा "देवसेनानाम्" "अभिभञ्जतीनाम्" अस्मदमित्राणामाभिमुख्येन मर्द्दयन्तीनां "भजन्तीनां" ["ङ्याश्छन्दसि (६, १, १७८)"—इति नाम उदात्तत्वम्] "जयन्तीनाम्"—इत्यत्र बहुलवचनान्न भवति। तासाम् "अग्रम्" "मरुतः" "यन्तु" गच्छन्तु ॥ २ ॥

---

* ऋ० वे० ८, ५, २१, २ = य० वे० १७, ४० ।

अथ तृतीय सूक्ते तृतीया।

१ २ ३ २ ३ १ १ ३ १ २
इन्द्रस्यवृष्णोवरुणस्यराज्ञ

१ १ २ ३ २ ३ १ २ ३ १
आदित्यानाम्मरुताꣳशर्द्धउग्रम्।

३ १ २ ३ १ ३
महामनसाम्भुवनच्यवाना

१ २ ३ २ ३ १ २ ३ १ २
घोषोदेवानाञ्जयतामुदस्थात्॥ २ *॥ ३

[अप्रतिरथस्त्रिष्टुबिन्द्रः।] "वृष्णः" वर्षकस्य "इन्द्रस्य" "राज्ञः वरुणस्य", "आदित्यानां" "मरुतां" च "उग्रम्" उद्गूर्णं "शर्द्धः" बलम् अस्माकं भवत्विति शेषः। किञ्च "महामनसाम्" उदार-मनसां "भुवनच्यवानां" भुवनानां च्यावयितॄणां "देवानां" "घोषः" जय-शब्दः "उदस्थात्" उत्तिष्ठति† [अनूर्द्ध-कर्मत्वादात्मनेपदाभावः (१, ३, २४)] ॥ २ ॥ (३)

---

* ऋ० वे० ८, ५, २३, ३ = य० वे० १७, ४१।

† "वृष्णः कामवर्षितुरिन्द्रस्य राज्ञो वरुणस्यादित्यानां द्वादशानां मरुतां चैषां देवानामुग्रमुत्कृष्टं शर्धो बलं गजतुरगरथपत्त्यात्मकसैन्यं घोषो जितं जितमिति शब्दश्च उदस्थात् उत्थितः। जितं जितमिति वदद्इन्द्रादिसैन्यमुत्थितमित्यर्थः। कीदृशानां देवानां महामनसां महन्मनो येषां ते महामनसस्तेषाम् युद्धे स्थिरचित्तानाम्। तथा भुवनच्यवानां भुवनं लोकं च्यावयन्ति ते भुवनच्यवास्तेषां भुवनच्यावनसमर्थानाम्। जयतां विजयमानानाम्।"—इति महीधर-कृत-व्याख्यानम्।

अथ चतुर्थ-सूक्ते प्रथमा।

१ २ ३ १ २ ३ १र
उद्धर्षयमघवन्नायुधान्युत्

१र ३ २ ३ १ २
सत्वनाम्मामकानाम्मनाᳬसि।

१ २ ३ २ ३ १ १ ३ १र
उद्वृत्रहन्वाजिनांवाजिनान्यु

२र ३ १ २ ३ १ २
द्रथानाञ्जयतांयन्तुघोषाः॥ १ *॥

[अप्रतिरथस्त्रिष्टुबिन्द्रः।] हे "मघवन्" इन्द्र! अस्मदीयानि "आयुधानि" "उद्धर्षय" उत्कृष्टं हर्षय प्रहरणेषूद्युक्तानि भवन्त्वीत्यर्थः। "मामकानां" मदीयानां "सत्वनां" प्राणिनां सैनिकानां "मनांसि" च उद्धर्षय। हे "वृत्रहन्" इन्द्र! "वाजिनाम्" अश्वानां "वाजिनानि" वेगाः "उद्यन्तु"। तथा "जयतां रथानां" "घोषाः" "उत्" यन्तु† ॥ १ ॥

---

* ऋ० वे० ८, ५, २३, ४ = य० वे० १७, ४२।

† "हे मघवन्धनवन्निन्द्र आयुधानि उद्धर्षय उद्धतहर्षाणि कुरु मामकानां मदीयानां सत्वनां प्राणिनां मनांसि च उद्धर्षय हर्षयुक्तानि कुरु। हे वृत्रहन् वैरिघातिन् वाजिनामश्वानां वाजिनानि शीघ्रगमनानि उद्धर्षय उत्कृष्टानि कुरु। किञ्च जयतां विजयमानानां रथानां घोषाः शब्दा उद्यन्तु उद्गच्छन्तु रथाः सशब्दाः प्रसरन्तु।"— इति म० ऋ० भा०।

अथ चतुर्थे सूक्ते द्वितीया।

२ ३ ३ १ २ ३ १ १ ३ २
अस्माकमिन्द्रः समृतेषु ध्वजे

३ २ ३ १र २र३ १ २
ष्वस्माकं या इषवस्ता जयन्तु।

३ १ २॰३ १र २र ३ १
अस्माकं वीरा उत्तरे भवन्त्वस्मा ७

२ ३ १ २
उ देवा अवता हवेषु॥ २ *॥

[अप्रतिरथस्त्रिष्टुबिन्द्रः।] "अस्माकं" सम्बन्धिष्वेव "समृतेषु" पर-सेनां सम्प्राप्तेषु "ध्वजेषु" ध्वजवत्सु सैनिकेषु "इन्द्रः" अविता भवतु। तथा "अस्माकं" "या इषवः" सन्ति "ताः" एव "जयन्तु" न शत्रूणाम्। तथा "अस्माकं" "वीराः" भटाः "उत्तरे" उपरि "भवन्तु"। हे "देवाः!" "अस्माँउ" अस्मानेव अवत" रक्षतां 'हवेषु" सङ्ग्रामेषु‡॥ २॥

---

* ऋ० वे० ८, ४, १३, ५=य० वे० १७, ४३।

† "द्वीघादटि समानपादे (८, ३, ९)"—इति, "आतोऽटिनित्यम् (८, ३, ३)"—इति सूत्राभ्यां रूपम्।

‡ "ध्वजेषु समृतेषु सङ्गतेषु शत्रुध्वजैः संयुक्तेषु सत्सु इन्द्रः अस्माकं रक्षिता भवत्विति शेष इदानीम् अस्माकं या इषवोऽस्मदीयैः प्रयुक्तास्ता जयन्तु परसैन्यानि घ्नन्तु। अस्माकं ये वीराः शूरास्ते उत्तरे परकीय-भटेभ्य उत्कृष्टा भवन्तु उ अपि च हे देवा। हवेषु अस्मान् यूयमवत रक्षत अन्येषामपि इष्यन्त इति दीर्घः।" इति म० क० व्या०।

अथ चतुर्थे सूक्ते तृतीया।

३ १२ ३२ ३१२
असौया सेनामरुतःपरेषा

३१ २३ १ २ ३ १२
मभ्येतिनओजसास्पर्द्धमाना।

१ ३२३१ २ ३
ताङ्गूहततमसापव्रतेन

२३१२ ३ २ ३ २ ३ २
यथैतेषामन्योअन्यन्नजानात्॥ ३ *॥ ४

[अप्रतिरथस्त्रिष्टुम्मरुतः।] "असौ या सेनाः" हे "मरुतः!" "परेषां शत्रूणाम्" "अभ्येति" अभिमुखा एति "नः" अस्मान् प्रति "ओजसा" बलेन "स्पर्द्धमाना", "तां" सेनां "गूहत" व्याप्नुत "तमसा" "अपव्रतेन" [व्रतमिति कर्मनाम (निघ० २, १, ७)] अपगत-कर्मणा [येन तमसा] व्याप्ता नश्यन्ति कर्माणि तदपव्रतं तमः, तेनापव्रतेन तमसा तथा गूहत "यथा एतेषां" योद्धा "अन्योन्यं न जानात्" परस्परं न जानातीत्यर्थः† ॥ ३ ॥ ४

* ऋ० वे० ८, ५, २३, ८ = य० वे० १७, ४७।

† "मरुद्देवत्या त्रिष्टुप् हे मरुतो या प्रसिद्धा असौ परेषां शत्रूणां सेना नोऽस्मानभिमुखा एति अभ्यागच्छति। कीदृशी ओजसा बलेन स्पर्धमाना स्पर्धां कुर्वाणा तां सेनां तमसा अन्धकारेण यूयं गूहत संवृतां कुरुत। तथा गूहत यथा अमी सैनिका अन्योऽन्यं न जानन् परस्परं न जानीयुस्तथा गूहत। कीदृशेन तमसा अपव्रतेन अपगतं व्रतं कर्म यस्मात्तेन येन व्याप्तानां कर्म नश्यति तादृशेन तमसा गूहतेत्यर्थः।"—इति म० भा० व्या०।

अथ पञ्चमे सूक्ते प्रथमा ।

३ १ २ २ १ २   ३ १ २   ३ १ २   ३ १ २
अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ।
३ २उ ३ १ २ ३ १र २र
अभिप्रेहिनिर्दहहृत्सुशोकै
३ २ ३ २ ३ १ १
रन्धेनामित्रास्तमसासचन्ताम् ॥ १ * ॥

[अप्रतिरथस्त्रिष्टुब्वायुः ।] हे "अप्वे" पापाभिमानि देवते !† "अमीषां" योद्धृणां "चित्तं" "प्रतिलोभयन्ती" विमोहयन्ती सती "अङ्गानि" तेषामवयवान् शरादिकान् "गृहाण" स्वीकुरु । ते "अमित्राः" अस्मच्छत्रवः "अन्धेन तमसा" "सचन्तां" सङ्गच्छन्ताम्‡ ॥ १ ॥

---

* ऋ० वे० ८, ५, २३, ६ = य० वे० १७, ४४ ।

† "अप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा"—इति निरु० नै० ६, १२ ।

‡ अवाह यास्कः—अमीषां चित्तानि प्रज्ञानानि प्रतिलोभयमाना गृहाणाङ्गान्यप्वे परेह्यभिप्रेहि निर्दहैषां हृदयानि शोकैरन्धेनामित्रास्तमसा संसेव्यन्ताम्"—इति (निरु० दै० ३, ३३)

"अप्वा देवता सा व्याधिर्भयं वा यस्मादेतया विद्धोऽपवीयते तस्मादप्वा अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् अन्येष्वपि दृश्यतऽइति उप्रत्ययः अपशब्दान्त्याकारलोपश्छान्दसः ततष्टाप् अपवाति अपगमयति सुखं प्राणांश्चेत्यप्वा। ऐन्द्रोऽभिरूपा द्वादश भवन्तीति (९, २, ३, ६) श्रुतेरियमप्यैन्द्रसेनासम्बन्धिनी। हे अप्वे अमीषां शत्रूणां चित्तं चित्तानि प्रतिलोभयन्ती मोहयन्ती अङ्गानि शत्रुगात्राणि गृह्णाना ततः परेहि अङ्गान्यादाय परागच्छ पुनरन्यान् रिपून् गृह्णीतु मभि शत्रुसङ्घं प्रेहि प्रगच्छ तेषां शत्रूणां हृदयानि शोकैर्धनपुत्रनाशादिनिमित्तैर्निर्दह विभक्तिव्यत्ययः। किञ्च अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण सचन्तां सङ्गच्छन्तां षच् सम्बन्धे लोट्।"—इति म० हु०व्या० ।

अथ पञ्चम-सूक्ते द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रेताजयतानरइन्द्रोवःशर्मयच्छतु।

३ १ २ ३ १ २ ३ १र १र
उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥ २ * ॥

[अप्रतिरथोऽनुष्टुबिन्द्रो मरुतो वा ।] हे "नरः" नेतारः! सङ्ग्रामस्य निर्वोढारो योद्धारः! "प्रेत" प्रकर्षेण गच्छत। गत्वा च "जयत" तान् प्रतिभटान् [तिङ्-परत्वात् 'तिङ् तिङः (८, १, २८)"—इति निघाताभावः "वः" युष्माकम् "इन्द्रः" "शर्म" सुखं "यच्छतु" प्रयच्छतु "वः" बाहवः "उग्राः" उद्गूर्ण-बलाः "सन्तु" भवन्तु। "अनाधृष्याः" अन्यैरनभिभाव्याः "यथा" यूयम् "असथ" भविष्यथ तथा उग्राः सन्तु वो बाहवः† ॥ २ ॥

---

* ऋ० वे० ८, ५, १९, ७ = य० वे० १७,४६ ।

† "योद्धृदेवत्यानुष्टुप् योद्धॄन् स्तौति। हे नरोऽस्मदीया योद्धारो यूयं तेन परसैन्यं प्रति प्रकर्षेण गच्छत ततो जयत विजयं प्राप्नुत द्व्यचोऽतस्तिङ इति। प्रेतेत्यत्र दीर्घः अन्येषामपि दृश्यतऽइति जयतेत्यत्र दीर्घः। इन्द्रो वो युष्मभ्यं शर्म जयोत्थं सुखं यच्छतु ददातु दाण दाने पाघ्रेत्यादिना यच्छादेशः। किञ्च यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ। तथा वो युष्माकं बाहवो भुजदण्डा उग्रा उद्गूर्णायुधा सन्तु। असथेत्यत्र लेटोऽडाटाविति अडागमः।"—इति म०स्व० व्या०।

अथ पञ्चम-सूक्ते तृतीया।

१ २  ३ १ २  ३ १ १ ३ १ २
अवसृष्टापरापतशरव्येब्रह्मसꣳशिते।
१ ३  २ ३  १ १  ३ २उ  ३ २ ३ १ २
गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः॥ ३* ॥ ५

[अप्रतिरथऋषिः पायुर्वा भारद्वाजः अनुष्टुप् छन्दः इषुर्देवता।] "ब्रह्मसंशिते" मन्त्रेण तीक्ष्णीकृते हे "शरव्ये" हिंसाकुशले! इषो! त्वम् "अवसृष्टा" क्षिप्ता "परा पत" परागच्छ। इतो देशात् गत्वा च "अमित्रान्" हिंसकान् "प्रपद्यस्व" प्राप्नुहि च। "अमीषाम्" अमित्राणां मध्ये "कञ्चन" कञ्चिदपि "मा उच्छिषः" अवशिष्टं मा कुरु॥ ३॥ ५

अथ षष्ठे सूक्ते प्रथमा।

३ १  १ ३ १र  २र  ३
कङ्काःसुपर्णाअनुयन्त्वेनान्
१ २ ३ १ २ ३ १ २ ३ १ २
गृध्राणामन्नमसावस्तुसेना।

---

* ऋ० वे० ५, १, १२, १ = य० वे० १७, ४५।

† "अस्य ऋक्चतुष्टयस्य विनियोगः कात्यायनेनोक्तः। इयमिषुदेवत्यानुष्टुप्। हिंसिका शरमयी हेतिः शरव्या ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि हे शरव्ये त्वमवसृष्टास्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव। पतित्वा चामित्रान् शत्रून् गच्छ प्राप्नुहि प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश प्रविश्य चामीषां शत्रूणां मध्ये कं चन पुरुषं मा उच्छिषः अवशिष्टं मा कुरु सर्वानपि जहि। अत्यर्थः शिष्लृ विशेषणे पुषादीत्यादिना च्लेरङ्।"—इति म० ह० व्या०।

१ २ ३ १ २ २ ३
मैषाम्मोच्यघहारश्चनेन्द्र

१ २ ३ १ २ २ १ २
वयाꣳस्येनानमुसंयन्तु सर्वान् ॥ १ * ॥

[अप्रतिरथऋषिः पायुर्वा भारद्वाजः, त्रिष्टुप् छन्दः, इन्द्रो देवता।] "कङ्काः" नाम पक्षिणः क्रव्यादाः "सुपर्णाः" शोभनपतनाः "अनु यन्तु" "एतान्" शत्रून्। "गृध्राणाम् अन्न" पक्षिणां भक्षभूता "असौ" "अस्तु" सेना। "मा एषां मोचि" एतेषां मा कश्चित् मुच्यताम्। "अघहारश्चनेन्द्र" हे इन्द्र! योऽपि नितरां पापीयान् अतिप्रत्यवरः सोऽपि न मुच्यतां मृत्योः। "वयांस्येनान्" वयांसि पक्षिरूपाणि क्रव्यादादीनि "अनु संयन्तु सर्वान्" अनु पश्चात् यन्तु सर्वान् शत्रून् ॥ १ ॥

अथ षष्ठे द्वितीया।

२ १ २ ३ १ ३ ३ २ ३ २
अमित्रसेनाम्मघवन्नस्माञ्छत्रुयतीमभि।

३ १२ २२ ३ १ २ ३ १ २
उभौतामिन्द्रवृत्रहन्नग्निश्चदहतम्प्रति ॥ २ † ॥

[अप्रतिरथऋषिः अग्निर्वा, अनुष्टुप् छन्दः, इन्द्राग्नी देवते।] "अमित्रसेनां" हे "मघवन्!" "अस्मान्" "शत्रुयतीमभि"

* नेयमन्यत्र श्रूयते।

† अस्याप्यन्यत्र न श्रुतिः।

शत्रुभिः परिवारिताम् "उभौ" "तां" सेनां हे "इन्द्र!" "वृत्रहन्!" त्वञ्च "अग्निश्च" "प्रति दहतम्" भस्मीकुरुतमित्यर्थः ॥ २ ॥

अथ षष्ठे सूक्ते तृतीया।

१ २३ २ ३ १ २ ३ १ २ ३ १ १
यत्रबाणाःसम्पतन्तिकुमाराविशिखाइव।
१ २३ १ २ ३ २ ३ १ २ ३ १ २
तत्रनोब्रह्मणस्पतिरदितिःशर्मयच्छतु।
३ २ ३ १ २
विश्वाहाशर्मयच्छतु ॥ ३ * ॥ ६

[अप्रतिरथऋषिः पायुर्भारद्वाजः, पङ्क्तिश्छन्दः, ब्रह्मणस्पतिरदितिश्च देवता।] "यत्र" सङ्ग्रामे "कुमारा विशिखा इव" मुण्डिता इव] "बाणाः सम्पतन्ति"। "तत्र" "नः" अस्मभ्यं "ब्रह्मणस्पतिः" "शर्म" सुखं "विश्वाहा" सर्वदा "यच्छतु"। "अदितिः" च सर्वदा "शर्म यच्छतु"। द्विरुक्तिरादरार्था ॥ ३ ॥ ६

* ऋ० वे० ५, १, २२, २ = य० वे० १७, ४८।

† "इन्द्रबृहस्पत्यदिति देवत्या पङ्क्तिरष्टाक्षरपञ्चपादा। यत्र यस्मिन् युद्धे बाणाः शत्रुप्रयुक्ताः सम्पतन्ति इतस्ततश्च सम्भूय पतन्ति। तत्र दृष्टान्तः कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा वा अतिबालाश्चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत्। तत् तत्र युद्धे इन्द्रः नोऽस्मभ्यं शर्म विजयोत्थं सुखं यच्छतु ददातु। कीदृश इन्द्रो बृहस्पतिः बृहतां मन्त्राणां

अथ सप्तमे सूक्ते प्रथमा।

१उ २ १र १र २ २ ३ २ ३ १ १ २
विरक्षोविमृधोजहिविवृत्रस्यहनूरुज।

२ ३ १ २ ३ १ २ ३ १ २
विमन्युमिन्द्रवृत्रहन्नमित्रस्याभिदासतः॥ १ *॥

[अप्रतिरथ ऋषिः शासो भारद्वाजो वा, अनुष्टुप् छन्दः, इन्द्रो देवता।] हे "इन्द्र!" "रक्षः" राक्षस-जातं "विजहि" विनाशय। "मृधः" सङ्ग्राम-कारिणः शत्रून् "वि" जहि। "वृत्रस्य" आवरकस्यासुरस्य "हनू" कपोल प्रान्तौ "विरुज" विशेषेण भग्नौ कुरु। हे "वृत्रहन् इन्द्र!" "अभि दासतः" अस्मानुपक्षपयतः "अमित्रस्य" शत्रोः "विमन्युं" क्रोधमपि विनाशय॥ १॥

अथ सप्तमे सूक्ते द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १
विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः।

२ ३ १ २ ३ १ ३ १२ ३ १ २
योअस्माँ अभिदासत्यधरङ्गमयातमः॥ २ †॥

---

पतिः पालकः विजयोचितमन्त्रश्च। अदितिः नास्ति दितिः खण्डनं यस्य अखण्डित-शक्तिः। विश्वाचा विश्वान्सर्वान् शत्रून् सम्यगाक्रमोति विश्वाचां स शर्म यच्छतु इति पुनरुक्तिरादरार्था। यद्वा मम इन्द्रः बृहस्पतिरिन्द्रगुरुः अदितिरिन्द्रमाता च विश्वाचा सर्वाश्चाचामि सर्वदा शर्म यच्छतु विश्वामि च नान्यचामि च विश्वाचा विभक्ति राकारः अत्यन्तसंयोगे द्वितीया।"—इति स० ह० व्या०।

* ऋ० वे० ८, ८, १०, १।

† ऋ० वे० ८, ८, १०, ४ = य० वे० ८, ४४—१८, ७०।

[अप्रतिरथऋषिः, अनुष्टुप् छन्दः, इन्द्रो देवता।] हे "इन्द्र!" "नः" अस्माकं "मृधः" सङ्ग्राम-कारिणः शत्रून् "वि जहि" विनाशय। तथा "पृतन्यतः" पृतनाः सेनाः आत्मन इच्छतः युयुत्समानानपि "नीचा यच्छ" नीचीनमवाङ्मुखं यच्छ गमय। "यः" शत्रुः "अस्मान्" "अभि दासति" अभितः उपक्षपयति, तम् "अधरं" निकृष्टं "तमः" अन्धकारं मरणलक्षणं "गमय" प्रापय * ॥ २ ॥

अथ सप्तम-सूक्ते तृतीया।

१ २   ३ १र   २र ३ १ २

इन्द्रस्य बाहू स्थविरौ युवाना

३ १ २   ३ १ २ ३ २

वनाधृष्यौ सुप्रतीकावसह्यौ।

---

* "का० (१३, २, १०) प्रत्यं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वेति। गवामयनस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वं मैन्द्रग्रहग्रहणे मन्त्रत्रयम्। तत्राद्यः। इन्द्रदेवत्यानुष्टुप् शासदृष्टा। हे इन्द्र नोऽस्माकं मृधः शत्रून् संग्रामान्वा विजहि विशेषेण नाशय। किं च पृतन्यतः नीचा यच्छ पृतनां संग्रामं सेनां वा इच्छन्ति ते पृतन्यन्तीति पृतन्यन्तस्तान् सुप आत्मनः क्यजिति। पृतनाशब्दात् क्यचि प्रत्यये कव्यध्वरपृतनस्यर्चि लोप इति टिलोपे शतृ-प्रत्यये च रूपम् पृतन्यतः सेनामिच्छतः शत्रून् नीचान्यग्भूतान्यच्छ निगृहीष्व युद्धादुपरतान् कुर्वित्यर्थः। किं च यश्चात् योऽस्मानभिदासति दसु उपक्षये उपक्षयति तं शत्रुमधरं निकृष्टं तमो नरकं गमय प्रापय संहितायां दीर्घः। हे ग्रह त्वमुपयामेन गृहीतोऽसि इन्द्राय विमृधे विशिष्टसंग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः विमृधविशिष्टायेन्द्राय त्वां सादयामि।

१ २ ३ १उ २ १ १ २ ३
तौयुञ्जीतप्रथमौयोगआगते

१ २ ३ १र २र ३ १ २ ३ १
याभ्याञ्जितमसुराणाᳫसहोमहत् ॥ २* ॥ ७

[अप्रतिरथऋषिः, इन्द्रो देवता, विराट्जगतीच्छन्दः]"इन्द्रस्य बाहू" "स्थविरौ" स्थिररूपौ [अथवा स्थविरौ स्थूलौ] "युवानौ" जरया न ग्रसितौ, "अनाधृष्यौ" न केनचिद्धृतौ, "सुप्रतीकौ" स्वाकृतौ हस्ति-कराकारौ, "असह्यौ" न कश्चित् सोढुं शक्तौ, "तौ युञ्जीत, प्रथमे योगे आगते" योगे सङ्ग्रामे यत्र नियुज्यन्ते बाहवः, "याभ्यां" "जितम्" "असुराणां" स्वभूतं "सहः" बलं "महत्" ॥ २ ॥ ७

अथाष्टमे सूक्ते प्रथमा।

१ २ ३ १ ३ २
मर्म्माणितेवर्म्मणाच्छादयामि

३ २ ३ २ ३ २ ३ १ २
सोमस्त्वाराजामृतेनानुवस्ताम्।

३ १र २र ३ १ २ ३
उरोर्वरीयोवरुणस्तेकृणोतु

१ २ ३ १ २ ३ १ २
जयन्तन्त्वानुदेवामदन्तु॥ १ † ॥

---

* मान्यवेयं दृश्यते।

† ऋ० वे० ५, १, ११, १ = य० वे० १७, ४९।

[अप्रतिरथऋषिः, पायुर्वा भारद्वाजः, त्रिष्टुप् छन्दः, सोमो देवता वरुणश्च देवता ।] हे राजन् ! "ते" त्वदीयानि "मर्माणि" [येषु स्थानेषु विद्धः सद्यो म्रियते, तानि मर्माणि] "वर्मणा" कवचेन छादयामि "सोमः राजा" "त्वा" त्वाम् "अनु" छादनानन्तरम् "अमृतेन" "वस्ताम्" आच्छादयन्तु । "वरुणः" अपि "ते" तुभ्यं "उरोर्वरीयः" उरु-तुल्यं सुखं "कृणोतु" करोतु । "जयन्तं" "त्वा" त्वां "देवाः" सर्वेऽपि "अनु मदन्तु" अनुहृष्यन्तु * ॥ १ ॥

अथाष्टमे सूक्ते द्वितीया ।

३ १ २　　　　३ १ २
अन्धा अमित्रा भवताशीर्षाणोऽहय इव ।
१ २　२ ३ १ २　३ १ २　३ १ २
तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरं वरम् ॥ २ † ॥

---

* "का० (१३, ३, १०) मर्माणि तऽइति कवचं प्रयच्छति । महाव्रते यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः । सोमवरुणदेवदेवत्या त्रिष्टुप् । हे यजमान ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छादयामि आवृणोमि । राजा विप्रादीनामधिपः सोमोऽमृतेन नास्ति मृतं मरणं येन तेन मरणनिवारकेणानेन वर्मणा त्वा त्वामनुवस्तामन्वाच्छादयतु वस आच्छादनेऽदादिः लोट् । तथा वरुणः ते तव वर्म उरोः पृथोरपि वरीयः उरुतरं प्रथीयः कृणोतु करोतु अत्यन्तमुरु वरीयः इयसुनि प्रियस्थेत्यादिना उरोर्वरादेशः । किं च देवाः जयन्तं विजयं प्राप्नुवन्तं त्वा त्वामनु-मदन्तु अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा ।"—इति म० छ० व्या० ।

† ऋ० वे० ८, ५, २२, ९ ।

[अप्रतिरथऋषिः, अनुष्टुप् छन्दः, चन्द्रो देवता।] हे "अमित्राः" शत्रवः! यूयम् "अन्धाभवत"। कीदृशा अन्धाः? "अशीर्षाणः अहय इव" यथा सर्पाः शीर्षच्छिन्ना, अकिञ्चित्कराः * भवन्ति तथा भवत। "तेषां" "वः" "अग्निनुन्नानाम्" अग्नि-दग्धानां शत्रूणाम् "इन्द्रः हन्तु वरं वरम्" यो यो वरिष्ठस्तं तं हन्तु नाशयन्तु ॥२॥

अथाष्टमे सूक्ते तृतीया।

१ २ १ २ ३ २ ३ १ ३ १ २
योनःस्वोरणो†यश्चनिष्टयोजिघाꣳसति।

३ १२ १२ ३ १ ३ २ ३
देवास्तꣳसर्वंधूर्वन्तुब्रह्मवर्म्म

१२ २१३ २३ २३ १२ १२
ममान्तरꣳशर्म्मवर्म्मममान्तरम्॥ ३ ‡॥ ८

[अप्रतिरथऋषिः पङ्क्तिच्छन्दः, विश्वेदेवा देवताः] "यः" "स्वः" ज्ञातिः "अरणः" अरममाणः, "यश्च" "निष्ट्यः" तिरोभूतः दूरेस्थितः "नः" अस्मान् "जिघांसति" हन्तुमिच्छति "तं" "देवाः सर्वे" "धूर्वन्तु" हिंसन्तु। "ब्रह्म" मन्त्रः "मम अन्तरम्" शराणां निवारकं "वर्म" विद्यते "शर्मवर्म" सन्नहन-भूतः "मम अन्तरम्" अस्तु ॥ ३ ॥ ८

* "शीर्षाणा अहय"—इति वि०।

† 'स्वोअरण'—इति क०-पाठः।

‡ ऋ० वे० ५, १, २२, ४।

अथ नवमी सूक्ते प्रथमा ।

१ २उ  ३  १  २३१  २  ३  १
मृगोनभीमःकुचरोगिरिष्ठाः

१ ३ २३ १  २  ३  १ २
परावतआजगन्था*परस्याः ।

३ १  ३  १ २३ १ २  ३ १
सृकꣳसꣳशायपविमिन्द्रतिग्मं

२र  ३ १र २र
विशत्रून्ताढिविमृधोनुदस्व ॥ १ † ॥

[अप्रतिरथऋषिः, ऐन्द्रावायवः, त्रिष्टुप्छन्दः, इन्द्रो देवता । "कुचरः" कुत्सित-चरणः "गिरिष्ठाः" पर्वत-निवासो "मृगः न" सिंह इव । हे इन्द्र ! त्वं "भीमः" भयङ्करः असि । स त्वं "परस्याः" परावतः अतिशयेन दूरात् द्युलोकात् "आ जगन्थ" आगच्छ [गमेश्छान्दसे लिटि (३, २, १०५) क्रादि-नियम-प्राप्तेरिटः (७, २, १३) "उपदेशेऽत्वतः (७, २, ६२)"—इति प्रतिषेधः । आगत्य च "सृकं" सरण-शीलं "तिग्मं" तीक्ष्णं "पविं" वज्रं संशाय" सम्यक् तीक्ष्णीकृत्य "शत्रून्" अस्मदीयान् वैरिणः हे इन्द्र ! "ते" तव वज्रेण "वि ताढि" विशेषेण ताडयति नाशयतीत्यर्थः [तड़ आघाते (चु० प०) अस्मात्पञ्चात्लोटि

* "जगम्यात्"—इति अथ०-पाठः ।

† ऋ० वे० ८, ८, ३८, २ = य० वे० १८, ७१ = अथ० वे० ११, २३, १ ।

रूपमेतत्। तथा "मृधः" सङ्ग्रामोद्युक्तान् युयुत्सून् अन्यानपि "वि नुदस्व" विशेषेण प्रेरय तिरस्कुरु* ॥ १ ॥

अथ नवमे सूक्ते द्वितीया।

३ १र २र
भद्रङ्कर्णेभिःशृणुयामदेवा,

१ १ २ ३ १ २
भद्रम्पश्येमाक्षभिर्यजत्राः।

---

* "अथेदं यास्ककृतं व्याख्यानम्—"मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टे-र्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सित-मथ चेद् देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समु-द्गीर्णो भवति पर्ववान्पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वार्धमासपर्व देवानस्मिन् प्रीणा-न्तीति तत्प्रकृतीतरत्सन्धिसामान्यान्मेघस्थायी मेघोऽपि गिरिरेतस्मादेव॥ तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद् व्याख्यास्यामो नैघण्टुकानि नैगमानीह।"—इति निरु० नै० १, २०।

† "अयदृष्टा त्रिष्टुप् हे इन्द्र परस्याः परावतो दूरतराद्देशादाजगन्थ आगच्छ परावच्छब्दो दूरवचनः परावतः दूरदेशादित्यर्थः लोडर्थे लिट्। आगत्य च शत्रून् त्विताढि विशेषेण ताडय। मृधः संग्रामांश्च विनुदस्व विशेषेण प्रेरय दूरीकुरु। किं कृत्वा पविं वज्रं संशाय तीक्ष्णीकृत्य शो तनूकरणे ल्यप्। कीदृशं पविं सृकम् सरति शत्रुशरीरे गच्छतीति सृकः तम्। तिग्ममुत्याद्वयन्तम् "तिग्मं तेजतेरुत्साहकर्मण"-इति (निरु० १०, ६) यास्कः। क-इव मृगो न मृग-इव यथा मृगः सिंहो दूरादेत्य प्राणिनं हन्ति। कीदृशो भीमः भयङ्करः। कुचरः कुत्सितं चरति गच्छति कुचरः। गिरिष्ठाः गिरौ तिष्ठति गिरिष्ठाः पर्वताश्रयः। ताडयतिर्हिंसाकर्मा तस्य हौ परे छन्दस्युभयथेत्यार्धधातुकत्वे णिचो लोपः ऊयतुभ्यो हेर्धिः ढ्रुत्वम् ताढि।"—इति च म० कृ० व्या०।

३ १२ २२ ३ १ २ ३ १ ३क
स्थिरैरङ्गैस्तुष्टुवाᳫँसस्तनूभि

१२ ३ १ २ ३ १ १२
र्व्यशेमहि*देवहितंयदायुः ॥ २ † ॥

[अप्रतिरथऋषिः राहुगणो गौतमो वा, त्रिष्टुप् छन्दः, विश्वेदेवा देवताः।] हे देवाः। दानादि-गुण-युक्ताः सर्वे देवाः "कर्णेभिः" अस्मदीयैः श्रोत्रैः "भद्रं" भजनीयं कल्याणं वचनं शृणुयाम युष्मत्-प्रसादात् श्रोतुं समर्थाः स्याम; अस्माकं वाधिर्यं कदाचिदपि माभूत्। हे "यजत्राः" यागेषु चरु-पुरोडाशादिभिः यष्टव्याः देवाः "अक्षभिः" अक्षिभिः आत्मीयैश्चक्षुभिः "भद्रं" शोभनं "पश्येम" द्रष्टुं समर्थाः स्याम; अस्माकं दृष्टि-प्रतिघातोऽपि माभूत्। "स्थिरैः" दृढ़ैः "अङ्गैः" हस्तपादादिभिः अवयवैः "तनूभिः" शरीरैश्च युक्ता वयं "तुष्टुवांसः" युष्मांस्तुवन्तः "यदायुः" षोड़शाधिक-शत-प्रमाणं विंशत्यधिक-शत-प्रमाणं वा "देवहितं" देवेन प्रजापतिना स्थापितं तत् "व्यशेमहि" प्राप्नुयाम [कर्णेभिः—बहुलम्छन्दसि (७, १, १०)"—इति भिसऐसभावः। अक्षभिः—"छन्दस्यपि दृश्यते (७, १, ७६)"—इत्यनङ् सचोदात्तः। यजत्रा—"अमि-नक्षि (उ० ३,१०५)"—इत्यादिना यजेरत्रन् प्रत्ययः। तुष्टुवांसः—ष्टुञ् स्तुतौ (अदा०

* "व्यशेम"—इति ऋ०-पाठः।

† ऋ० वे० १, ६, १९, ३ = य० वे०२५, २१।

प०), लिटः कसुः (३, २, १०७), "मपूर्वाः खयः (७, ४,६१) इति तकारः शिष्यते। अशेमहि—अशूव्याप्तौ (स्वा० आ०), "लिङ्याशिष्यङ् ( ३, १, ८६ ), यदितु तत्र परिगणनमन्य-व्याप्त्यर्थं तदानीं लिङि व्यत्ययेन शप् (३, १, ८५)। देवहितं "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपद-प्रकृतिस्वरत्वम् ]॥ २॥

अथ नवमे सूक्ते तृतीया।

३ १ ३१२ ३१२ ३ १२३२ ३१२
स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः।

३ २ ३१ ३ १ २ ३ १ ३ २३१ २
स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु।

३ २ ३२३१ २
स्वस्तिनोबृहस्पतिर्दधातु॥ ३*॥ ९

[अप्रतिरथऋषिः राहुगणो गौतमो वा, स्वराट् त्रिष्टुप् छन्दः, विश्वेदेवा देवताः।] "वृद्धश्रवाः" ['वृद्ध' प्रभूतं 'श्रवः' श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृशः] "इन्द्रः" "नः" अस्माकं [स्वस्तीत्यविनाश-नाम] "स्वस्ति" अविनाशं "दधातु" विदधातु। "विश्ववेदाः" [विश्वानि वेत्तीति विश्ववेदाः यद्वा, विश्वानि सर्ववेदांसि ज्ञानानि धनानि वा यस्य, तादृशः] "पूषा" पोषको देवः "नः" अस्माकं "स्वस्ति" विदधातु। "अरिष्टनेमिः"

* ऋ० वे० १, ६, १६, ६ = य० वे० २५, १९।

[नेमिरित्यायुधनाम (निघ० २,२०,२), अरिष्टो अहिंसितो नेमिर्यस्य ; यद्वा, रथ-चक्रस्य धारा नेमिः, यत् सम्बन्धिनो रथ-नेमिर्न हिंस्यते सोऽरिष्टनेमिः एवम्भूतः] "तार्क्ष्यः" तृक्षस्य पुत्रः गरुत्मान्* "नः" अस्माकं "स्वस्ति" अविनाशं विदधातु। तथा "बृहस्पतिः" बृहतां देवानां पतिः पालयिता, "नः" अस्माकं "स्वस्ति" "अविनाशं" विदधातु† [वृद्धश्रवाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। विश्ववेदाः—विद ज्ञाने (अदा० प०), विद्लृ लाभे (तु० उ०), आभ्यामसुन्-प्रत्ययान्तो वेदस्-शब्दः, "बहुव्रीहौ विश्वं सञ्ज्ञायाम् (६, २, १०६)"—इति पूर्वपदान्तोदात्तत्वम्। तार्क्ष्यः—तृक्षस्यापत्यं "गर्गादिभ्यो यञ् (४, १, १०५), ञित्वादाद्युदात्तत्वम् (६, १, १९७)। अरिष्टनेमिः—न रिष्टा अरिष्टा, अव्यय-पूर्वपद-प्रकृतिस्वरत्वम् (८, २, २), अरिष्टा नेमिर्यस्य स तथोक्तः। बृहस्पतिः—"तद् बृहतोः कर-पत्योः (६,१,१५७ वा॰)"—इति सुट्-तलोपौ "उभे वनस्पत्यादिषु (६, २, १४०)"—इति पूर्वोत्तर-पदयोर्युगपत् प्रकृतिस्वरत्वम्॥ ३॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्यैकविंशस्याध्यायस्य

प्रथमः खण्डः॥ १॥

---

* 'तार्क्ष्यः—वायुः, सहि रथादीनां तारयिता'—इति वि०।

† संहितायां स्वस्तिरिति द्विरुक्तिः समाप्ति-द्योतिका।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥२१॥

॥ इति नवमः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे एकत्रिंशोऽध्यायः समाप्तः ॥२१॥

॥ इत्युत्तरार्च्चिकः समाप्तः ॥

—:○:—

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेद संहिता ॥

तत्र

## ॥ उत्तरार्चिकसंहिता-परिशिष्टम् ॥

अथवा

## ॥ ऊह्यगानम् ॥



॥ हरिः ॐम् ॥

॥ दशरात्रपर्वेदानीम्प्रवर्त्तते ॥

२ऽ
वसिष्ठःककुबुत्तराबृहतीन्द्रः ॥ रथन्तरम् ॥(प्र) अभि
र र र १ २र र र र
त्वाशूरनोनुमोवा ।(उ) आदुग्धाइवधेनवईशानमस्यज
१ २ १ र २ १ ४
गतः । सुवा २ ३ईशाम् ।(प्र) आयिशानमा२ ३ यिन्द्रा
र र ५ ५ २र १
३ ।(उ) हस्थू २ ३ ४षा । ओवाई । हाऊवा [१]॥(प्र) ईशो
२ र र र र १
वा ।(उ) नामिन्द्रसुस्थुषोनत्वांवा अन्योदिवियः । नपा२
२ १र २र १ ४ १ र र ५
३र्थिवाः । नजातोना२३जा३ । नायिष्या२३४ता । ओवाई ।
५ २ १ २ र र र
हाऊवा[२]॥(प्र)नजोवा ।(उ)तोनजंनिष्यतेअश्वायन्तोमघवन्नि
:

१ २ १ २ १ ४ १ र
द्रवा२३जिनाः। गव्यन्नत्त्वा२३द्दा३। वामा२ ३ ४द्दा।
१ ५ ५
ओवाइ। द्दाऊवा*[३]॥ १॥

अस्य व्याख्यानम्—३भा० ८३ पृष्ठे द्रष्टव्यम्। १

२८
वसिष्ठः ककुबुत्तराव्‌हत्यग्निः॥ रथन्तरम्॥ आयि
र र १ र २ र र र र
नावो अग्निन्नमसोवा। ऊर्ज्जोनपातमाहुवे प्रियञ्चेतिष्ठमर
१ २ १ २ १ ४ १
तिम्। सुवा२३ध्वाराम्। वायिश्वस्यदू२३ता३म्। आ
र र ५ ५ २ १
मा२३४र्ताम्। ओवा६। हाऊवा(१)॥ विश्वोवा। स्या
र २ र र १ र १ २ १
दूतमम्रुतᳬसयोजते अरुषावि। श्वस्ता२३जसा। सादु
२ १ ४ १ र र र १
द्रवा२ ३ त्स ३। आह्व२३४ता। ओवा६। हाऊवा (२)॥
२ १ २र र र १
सदोवा। द्रावत्सुवाहुतस्सुब्रह्मायज्ञस्सुशमी। वह्व२३
२ १ २र१ ४ १ र र ५
नाम्। दायिवᳬराधो२३जा३। ना२३४नाम्। ओवा६।
५
हाऊवा(३)॥ २†॥

अस्य व्याख्यानम्—३भा० २३६ पृष्ठे द्रष्टव्यम्। २

---

* ज्योतिष्टोमे पृष्ठमिदं साम।

† अतिरात्रे सन्धिस्तोत्रम् 'एना'-'प्रत्यु'-'इमाः'—इति सामत्रयम्।

२र
वसिष्ठःककुबुत्तराबृहत्युषा॥ रथन्तरम्॥ प्रात्युव
र १ २र र र र र र
दर्श्यायतीवा। ऊच्छन्तीदुहितादिवोअपोमहीवृणुतेच।
१ २ १ २ १ ४ १ र र
क्षुषा२३तमाः। ज्योतिष्कृणो२३ती३। हूना२३४रा। ओ
५ ५ २र १ र २ र र
वा६। हाऊवा(१)॥ ज्योतीवा। कार्णोतिहूनरीउदुस्रि
र र र १ २ १ २ १ ४ १
यास्हजतेसू। रिया२३स्सचा। उद्यन्नक्षा२३त्रा३म्। आ
र र ५ ५ २ १
र्चा२३४यिवात्। ओवा६। हाऊवा(२)॥ उद्योवा। ना
२ र र र १ २ १ २र
क्षत्रमर्चिवत्तवेदुषोवियुषिस्। रिया२३स्यचा। साम्भक्ते
१ ४ १ र र ५ ५
ना२३गा३। मायिमा२३४हा। ओवा६। हाऊवा(३)॥३॥

अस्य व्याख्यानम्—३भा० २४०पृष्ठे द्रष्टव्यम्। ३

२र र
वसिष्ठःककुबुत्तरावश्विनी॥ रथन्तरम्॥ आयिमा
र १ र २ र र र र
उवान्दिविष्टयोवा। ऊस्राहवन्तेअश्विनाअयंवामह्वे अव
र १ २ १ २ १ ४ १
से। शचा२३यिवसू। वायिशंविशा२३९वौ३। गाच्छा
र र ५ ५ २ १
२३४था। ओवा६। हाऊवा(१)॥ विशोवा। वायिश९

२ र र १ २ १ र
द्दिगच्छथोयुवञ्चित्रन्ददथुब्भीं । जना२३न्नरा । चोदे

२र १ ४ १ र र र ५
थाꣳहू२३ना३ । तावा२३४ता । ओवा६ । हाऊवा(२) ॥

२र १ र २ र र १ र १
चोदोवा । थाꣳसूनृतावतेऽअर्वाग्रथꣳसमनसा । निया२

२ १ २ १ ४ १ १
२३च्छतम् । पायिबतꣳसो२३मी३ । याम्ना२ ३ ४धा ।

र ५ ५ १
ओवा६ । हाऊवा । (नि) अम् (३) ॥ ४ ॥

अस्य व्याख्यानम्—१भा० २४५ पृष्ठे द्रष्टव्यम् । ४

२र
भरद्वाजःककुबुत्तराबृहतीन्द्रः ॥ बृहत् ।(प्र०) औ

र र र २ र१र र २
होयित्वामिद्धिहवामहा३ए ।(उ) सातौवाजा । स्याका

३ ५ १ २ ३र ४र ५ २१
रा२३४वाः । ओवा३४ । औहोवा । वृत्रायिषुवायि ।

२ २ १ ५ १र र १ १र
ꣳआसा३१त् । पतिन्ना२३४राः ।(प्र०) त्वाङ्काष्ठा३४ । औ

४र५ १ ५ ५
होवा ।(उ०)हू२आर्वा२३४ । ताः । उद्भवा६हाऊ । वा(१)॥

२र र २ र १ २ ३ ५ १ २
औहोयिउवा३मे । काष्ठा । हूअर्वा२३४ताः । सत्वा३

३र ४र ५ २ १ १ १ १ २
४ । औहोवा । नश्चायित्रवा । ज्राहा३१ । स्तधृष्णू२

५ १ १ १ ३र ४र ५ १
३४या। महस्त्वा३४। औहोवा। नो२आद्रा२३४

५ ५ २र र
यि। वाः। उऊवा६हाऊ। वा(२)॥ औहोहोयिमहा

१ १ १ ३ ५ १र २ ३र
३ए। स्तवा। नोअद्रा२३४यिवाः। गामा३४। औ

४र ५ १ १ २ २१
होवा। प्रुवा२रथायि। यामा३१यि। द्रसङ्का२३४

५ २१र र २ ३र ४र ५ १
यिरा। सत्रावाजा३४। औहोवा। ना२जायि।

१ ५ ५
ना२जिग्य २३४। षायि। उऊवा६हाऊ। वा।

(नि) हस्॥५*॥

अस्य व्याख्यानम्—६भा० ३३१-३३२ पृष्ठयोर्द्रष्टव्यम्। ५

२र र
प्रजापतिर्बृहतीन्द्रः॥ अन्तरिक्षम्॥ हावभिसो

२१ १र र १र १२ १ १र
मा। सआय। वा। औहोहोवा२। इहा। पवन्ते

१ ११ २१ १र र १र १२
मदियम्मदियम्। दाम्। औहोहोवा२। इहा। स

१र २ १र२र १ १र र १र १२
मुद्रस्याधिविष्टपेमनीषि। णा। औहोहोवा२। इहा।

१ र २र र १र२ १२ १ ३
मत्सरा। सा। औहोहोवा। इहा। मद। च्यू२ता

* पृष्ठम्।

५र र २र र १
२३४औहोवा(१)॥ हाऊमत्सरासः। मदच्यु। त।
१र र १र १ २ १र र १ १
औहोहोवा२। इहा। मत्सरासोमदच्यु। ता। औ
र १र १ २ १ २ १ २र र १
होहोवा२। इहा। तरत्समुद्रम्पवमानऊर्मि। णा।
२र र १र १ २ १र र र २र र १र
औहोहोवा२। इहा। राजादे। वा। औहोहो
१ २ १ ३ ५र र २र
वा२। इहा। ऋतम्। बृ२हा२३४औहोवा(२)॥ हा
र र र १ २र र १र १ २
ऊराजादेवाः। ऋतम्बृ। हात्। औहोहोवा२। इहा।
१र र २र १ १ १ २र र १र १ २ १
राजादेवऋतम्बृ। हात्। औहोहोवा२। इहा। अ
र १ १ २ १ १ १ २र र १र १ २
र्यामित्रस्यवरुणस्यधर्म। णा। औहोहोवा२। इहा।
२ र २र र १र १ २ १
प्रहिन्वा। ना। औहोहोवा२। इहा। ऋतम्।
३ ५र र २ १ र र २
बृ२हा २ ३ ४ औहोवा। सुष्टुभस्तुभोस्वाग्निग्रुमक्रा३न्।
१ १ १ १ १
इट्०इडा २ ३ ४ ५(३)॥ ६ *॥

अस्य व्याख्यानम्—३भा० ४०१-४०२ पृष्ठयोर्द्रष्टव्यम् ।६

* पृष्ठ्यस्य तृतीये माध्यन्दिने विनियोगः।

१ र
विरूपोबृहतीन्द्रः॥ पञ्चनिधनवैरूपम्॥ यद्या

१ र १ र २१ र र २१
वइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्तोवा। दिशं

र २ २ २ १र २र १२ १ र
व्विशश्हस्* । नत्वावज्रिन्सहस्रꣳसूर्य्याअनु। अश्वाशिप्रा

२ र १ र २१र २र १ र २१र २र
मती। नजातमष्टरोदसी। इट्(१)॥ नजातमष्टरोदसी।

१र २र र १ १र
ए। नजातमष्ट। रोदसोवा। दिशव्विशꣳहस्। आप

२र १र र २ १ र १ र १ र २
प्राथमह्विनावृष्ण्याअृषन्। अश्वाशिप्रामती। विश्वाशवि

१ २र र २ १ २र १र २ र
ष्ठशवसा। इट्(२)॥ विश्वाशविष्ठशवसा। ए। विश्वा

१ २१र २
शविष्ठ। शवसोवा। दिशंव्विशꣳहस्। अस्माꣳअवम

१र २ १र र २र १ २ १र २र
घवन्गोमतिव्रजे। अश्वाशिप्रामती। वज्रिञ्चित्राभिरू

१ १ १ १
तिभिः। इट्। इडा२ ३ ४ ५(३)॥ ७†॥

अस्य व्याख्यानम्—३भा० ४३१-४३२-४३३ पृष्ठेषु द्रष्टव्यम्। ७

---

* इमानि पदानि निधनानि।

† सर्वैव पृष्ठम्।

३र २र
प्रजापतिर्जगतीसोमः॥ अरिष्टम्॥ हाहु। हो

३र ४५ १ २१ १२
इया। पावी। चन्तायि। वितता३म्ब। ह्मणस्पा२३

५ ४५ १र २ १२१ २
४तायि। प्राभूः। गात्रा। णी३परियायि। षिवा

३ ५ ४५ १ २१२१र र२
यिश्वा२३४ताः। आता। प्तता। नू३र्नतदा। मोश्र

३ ५ ४५ १ २ १
श्नू२३४तायि। ग्नार्ता। सश्रायित्। वहन्तः। सम्।

१र ३ ३ ४५ १ २ १२१
तदाश्रा२३४ता(१)॥ तापोः। पवायि। त्रा३वितत्म्।

२३ ५ ४५ १र २ १२१
दिवस्पा२३४दायि। आर्चा। तोश्रा। स्या३तन्तवः।

२३ ५ ४५ १ २ १२१र
वियस्था२३४यिरान्। आवा। तिया। स्या३पविता।

२र ३ ५ ४५ १ २ १र
रमाश्रा२३४वाः। दायिवाः। पृष्ठाम्। अधिरो। ह।

१र ३ ५ ४५ १ २१२१
तितेजा२३४सा(२)॥ आह्र। रुचात्। उषसः पृ। श्नि

२३ ५ ४५ १ २ १२१र १र
रग्रा२३४याः। ऊत्ता। मिमायि। तो३भुवने। षुवा

३ ५ ४५ १ २१२र१ २र३
जा२३४यूः। माया। विनो। ममिरेश्र। स्थमाया२

५ ४ ५ १ २ १ २ १ २ र ३
३४या। नार्चा। त्तसाः। पितरः। ग। भमादार

५ ३
३४धूः। च्चोर३४५इ। डा(३) ॥ ८ * ॥

अस्य व्याख्यानम्—२भा० ४६०-४६१-४६२ पृष्ठेषु द्रष्टव्यम् । ८

२ र
अथर्व्वा गायत्री सोमः ॥ आथर्व्वणम् ॥ उऊवा

र र र र र र र र १र
ओहा। औहोवा। पवस्वदा। उऊवाओहा। औहो

३र १ १ २ १र २ र
वाहाऊ। वा। आवत्। त्तसाधार२३नाइः। उऊवा

र र र र र र र र र
ओहा। औहोवा। देवेभ्यःपायि। उऊवा। ओ

र १र ३र २ १ २ १र २
हा। औहोवाहाऊ। वा। सूवः। तायहार२३रा

र र र र र र र र
३यि। उऊवाओहा। औहोवामरुद्भ्योवा। उऊवा

र र १र ३र र १ २ १र
ओहा। औहोवाहाऊ। वा। ज्योतिः। यवेमार

२ २ र र र १र ३र २
३दाइः। उऊवाओहा। औहोवाहाऊ। वा३(१) ॥

२ र र र र र र र र र र
उऊवाओहा। औहोवा। सन्देवैभो। उऊवाओहा।

१र ३र २ १ २ १र २
औहोवाहाऊ। वा। आवत्। भतेवा २ ३ र्षा ३।

* आर्भवाम्नंत्र नवव ।

२ र र र र र र र र
उहुवाओहा। औहोवा। कविर्य्योनाउ। उहुवा
र र १र ३र १ १र १
ओहा। औहोवाहाऊ। वा। स्वः। अधिप्रा२३
१ र र र र र र र
या३ः। उहुवाओहा। औहोवा। पवमानाः। उहु
र र र १र ३र १ १ २ १र
वाओहा। औहोवाहाउ। वा। ज्योतिः। अदाभार
१ १ र र र १र ऽ ३र १
३या३ः। उहुवाओहा। औहोवाहाऊ। वा३(२)॥
१ र र र र र र र र र र
उहुवाओहा। औहोवा। पवमाना। उहुवाओहा।
१र ३र १ १ १र १
औहोवाहाऊ। वा। आवत्। धियाहा२३यिता ३ः।
१ र र र र र र र र
उहुवाओहा। औहोवा। अभियोनायिम्। उहुवा
र र १र ३र १ १ १ १
ओहा। औहोवाहाऊ। वा। सूवः। कनिक्रा२३
१ र र र र र र र
दा३त्। उहुवाओहा। औहोवा। धर्म्मणावा। उहु
र र र १र ३र १ १ २ १र
वाओहा। औहोवाहाऊ। वा। ज्योतिः। युमाह
१ १ र र र र ३र १ १
२३द्धा३ः। उहुवाओहा। औहोवाहाऊ। वा३। इ२
१ १ १
३४५(३)॥ ९ *॥

अस्य व्याख्यानम्—३भा० ५१३-५१४ पृष्ठयोर्द्रष्टव्यम्। ९

* चतुर्थे मध्यन्दिने विनियोगः।

२र र र
इन्द्रोविराडिन्द्रः॥ महावैराजम्॥ होइयाहोइ

र र २१ १र २ १ १र १
याहोइयाइ४३पिब। सोमाम्। इन्द्रमा। दतुत्वा। द

१र १ २र १र र २ १ १र
तुत्वा। दतुत्वा। पिबासोमाम्। इन्द्रमा। दतुत्वा।

१ २र १ २र १र र २ १
दतुत्वा। दतुत्वा। पिबासोमाम्। इन्द्रमा। दतु

२र १ २र १ २र १र २ १ २ १र
त्वा। दतुत्वा। दतुत्वा। यन्तेसुषा। वाहरिया। स्वा

ऽ १र ऽ १र २ १र २ १ २
द्रीर:। स्वाद्रीर:। स्वाद्रिः। यन्तेसुषा। वाहरिया।

१र ऽ १र ऽ १र २ १र २ १
स्वाद्रीर:। स्वाद्रीर:। स्वाद्रिः। यन्तेसुषा। वाह

२ १र ऽ १र ऽ १र २र १ र
रिया। स्वाद्रीर:। स्वाद्रीर:। स्वाद्रिः। सोतुर्बाहु।

२ १ २ १र २ ऽ १र र ऽ १र र २र १
भ्याꣳसुयतो। नार्वा२। नार्वा२। नार्वा। सोतु

र २ १ २ १र र ऽ १र र ऽ १र र
र्बाहु। भ्याꣳसुयतो। नार्वा२। नार्वा२। नार्वा।

१र १ र २ १ २ १र र ऽ १र र ऽ १र र
सोतुर्बाहु। भ्याꣳसुयतो। नार्वा२। नार्वा२। नार्वा।

१ २ १ २ १ ऽ २
इयाहाउ। इयाहाउ। इयंपिबमत्स्वा३। हाउवा

२र र र र र २ ३र १ २ १
३(१)॥ चोइयाचोइयाचोइया३४३यस्ते। मदो। युजि

१ १ २ १ २ १ २ १र २
यश्वा। हरस्ति। हरस्ति। हरस्ति। यस्तेमदो। यु

१ २ १ २ १ २ १ २ १र
जियश्वा। हरस्ति। हरस्ति। हरस्ति। यस्ते मदो।

२ १ २ १ २ १ २ र १ २ १
युजियश्वा। हरस्ति। हरस्ति। येनवृत्रा। णीह

२ १ २ १ २ र १ २ १
रिया। स्वहꣳसि। स्वहꣳसि। येनवृत्रा। णीहरि

२ १ २ १ २ १ २ र १
या। स्वहꣳसि। स्वहꣳसि। स्वहꣳसि। येनवृत्रा।

२ १ २ १ २ १ २ १ २
णीहरिया। स्वहꣳसि। स्वहꣳसि। स्वहꣳसि।

१र २ १र २ १ २ १ २
सत्वामिन्द्रा। प्रभूवसाऊ। ममत्तु। ममत्तु।

१ २ २ १र २ १र ३ १ २ १ २
ममत्तु। सत्वामिन्द्रा। प्रभूवसाऊ। ममत्तु। ममत्तु।

१ २ १र २ १र २ १ २ १ २
ममत्तु। सत्वामिन्द्रा। प्रभूवंसाऊ। ममत्तु। ममत्तु।

१ २ १ २ १ २ १ र ऽ
ममत्तु। इयाहाऊ। इयाहाऊ। इययस्ते मत्स्वा३।

२ १र र र र र २र३ १
हाऊवा३(२)॥ चोइयाचोइयाचोइया३४३बोध। सुमायि।

२ १ १ १ र २र १ र २र १ र २र र
मघवन्वा । चमेमाम् । चमेमाम् । चमेमाम् । बो

१र २ १ २ १ र २र १ र २र १ र
धासुमायि । मघवन्वा । चमेमाम् । चमेमाम् । चमे

२र र १र २ १ २ १ र २र १ र
माम् । बोधासुमायि । मघवन्वा । चमेमाम् । चमे

२र १ र २र र १र २ १ २
माम् । चमेमाम् । यान्तेवसायि । छोअर्चतायि ।

१ २ १ २ १ २ र १र
प्रशस्तिम् । प्रशस्तिम् । प्रशस्तिम् । यान्तेवसायि ।

२ १ २ १ २ १ २ १ २ र
छोअर्चतायि । प्रशस्तिम् । प्रशस्तिम् । प्रशस्तिम् । या

१र १ २ २ १ २ १ २ १
न्तेवसायि । छोअर्चतायि । प्रशस्तिम् । प्रशस्तिम् । प्रश

२ १र २ १ र २ १ २ १
स्तिम् । इमाब्रह्मा । सधमादायि । जुषस्व । जुष

२ १ २ १र २ १ २ २ १ २
स्व । जुषस्व । इमाब्रह्मा । सधमादायि । जुषस्व ।

१ २ १ २ १र २ १ र २ १ २
जुषस्व । जुषस्व । इमाब्रह्मा । सधमादायि । जुषस्व ।

१ २ १ २ १ २ १ २ १ र
जुषस्व । जुषस्व । इयाद्दाऊ । इयाद्दाऊ । इयबोध

२ १ १ १ १
मत्वा३ । द्दाऊवा३ । ई२३४५(३) ॥ १० * ॥

अस्य व्याख्यानम्—१भा० ५१७-५१८-५१९ पृष्ठेषु द्रष्टव्यम् । १०

* चतुर्थोऽयमिदं ग्रहम् ।

१ र २र १ २
प्रजापतिर्गायत्रीन्द्रः ॥ यण्वम् ॥ अर्षासोमद्युमत्तमः ।

१ र र २ र १ २र र र र र र
ए२ । अभिद्रोणानि । रोरुवोवा । औहोवा औहोवा

र र र र १ २ र १ २ र १ २
औहोवा । औहोहायि । औहोहायि । औहोहायि ।

र र र १ २ ५ २
सीदञ्छ्येनोनीवना२३यिषुवाऊ । वा३ । ई२३४डा(१) ॥ अ

र र १ २ १ र १ २ १र
प्साइन्द्रायवा२३यवा३यि । वरुणायमरु२३द्भियाः । सो

र १ २ ३ ५ २
मा अर्षन्तुवा२३यिष्णवाऊ । वा३ । ई२३४डा(२) ॥ इष

र र १ २ २ र १ २
न्तोकायनो२३दधा३त् । अस्मभ्यꣳसोमवा२३यिश्वता३ः ।

२र र र र र र र र र र १ २ र १ २
औहोवाऔहोवाऔहोवा । औहोहायि । औहोहा

र १ २ र १ २
यि । औहोहायि । आपवस्वसहा२३स्रिणाऊ । वा३ ।

१ १ १ १ १
इट् ० इडा२३४५(३) ॥ ११ * ॥

अस्य व्याख्यानम्—३भा० ६१४-६१५-६१६ पृष्ठेषु द्रष्टव्यम् । ११

१ र
बृहद्गिरिःपथ्यापङ्क्तिरिन्द्रः ॥ बार्हद्गिरम् ॥ इन्द्रो

१ र र र १
मदा । यवावृधेशवसेवृत्रहा२नृभायि । अथा । तमिन्म

---

* पञ्चमेऽहनि माध्यन्दिने ।

२ २ २ २१ २ १ ४ ५
पन्स्तुवा१जा३यि । षू । ऊतिमर्भेद्दवा३ । माद्दायि ।

१ २ २ १ २ १
सवाजेषुप्रना२३द्दोयि । वायिषदा३१ऊवा२३(१) ॥ असि

१ २ २ २ १
द्दिवी । रसेन्द्योसिभूरिपरा२ददायि । अथा । असिद

२ २ २ १ २ २ २ ४ ५
भ्रस्यचा१यिद्दा३र्धाः । यजमानायशा३यि । द्दासायि ।

१ २ २ १ २ २
सुन्वतेभूरिता२३यिद्दोयि । वासुआ३१ऊवा२३(२)॥ यदु

२ १ २ २ २ २ १
दीरा । तआजयोधृष्णवेधीयता२यिधनाम् । अथा ।

२ २ २ १ २ ४ ५
युङ्क्ष्वामदच्युता१द्दा३री । कॅहनःकव्वसा३ऊ । दाधाः ।

१ २ १ २
अस्मांइन्द्रवसा २ ३ ऊहोयि । दाधआ ३ १ ऊवा २ ३ ।

५
आ २ ३ ४ था(३) ॥ १२ * ॥

अस्य व्याख्यानम्—३भा० ६३२—६३५ पृष्ठेषु द्रष्टव्यम् । ११

१
पृथुरश्मिःपथ्यापङ्क्तिरिन्द्रः ॥ पार्थुरश्मम् । एई

२ ३ ५ २ १२ १
न्द्रा । ओ२ ३ ४ वा । मदायवा२बुधायि । अथा ।

२ ३ ५ २२ १ १
एशावा । ओ२३ ४ वा । सेवृत्रहा२नृभायि । अथा ।

* ब्राह्मणस्य बार्हद्गिरं नाम साम ।

२र ३ ५ २१ १
एताभौ। ओ२ ३ ४ वा। मद्दन्तुवा२जिषू। अथा।

२र ३ ५ २१र १
एऊता। ओ२३ ४ वा। अर्वद्वा२मह्यायि। अथा।

२र ३ ५ २र१ १
एसावा। ओ२३ ४ वा। जेषुप्रनो२विषात्। अथा(१)॥

२र ३ ५ १र १
एआसा। ओ२३ ४ वा। हिवोरमे२नियाः। अथा।

२र ३ ५ २र१ १
एआसा। ओ२३ ४ वा। भरिपरा२ददायि। अथा।

२र ३ ५ २१ १
एआसा। ओ २ ३ ४ वा। दभ्रस्यचा२यिद्धाः।

२र ३ ५ १र१र १
अथा। एयाजा। ओ२३४वा। मानायशा२यिक्षसायि।

२र ३ ५ १र१र १
अथा। एहृन्वा। ओ२३४वा। तेभूरिता२यिवसाऊ।

२र ३ ५ २र१ १
अथा(२)॥ एयादू। ओ२३४वा। ईरतआ२जयाः।

२र ३ ५ २र१र १
अथा। एधृष्णा। ओ२३४वा। वेधीयता२यिधनाम्।

२र ३ ५ २१ १
अथा। एयृञ्जाः। ओ २३४वा। मदच्युता२हरायि।

२र ३ ५ २१ १
अथा। एकाण्वा। ओ२३४वा। नःकव्वसा२ऊदधाः।

१ ९ ५ ११ १
धथा। एत्रस्मा९। ओ२३४वा। इन्द्रवसा२ऊद्धाः।
१११११
धथा२३४५(३) ॥ १३ * ॥

अस्यापि व्याख्यानम्—३भा० ६३१—६३५ पृष्ठेषु तद्देव । १३

रायोवाजःपथ्यापङ्क्तिरिन्द्रः ॥ रायोवाजीयम् ॥

१ २ १र र र र १
एस्वादोः। इत्थाविषूवतोमधोःपिबन्तिगौ२रियाः। इडा।
र र १ २ २ १र २ ४ ५
याइन्द्रेणसया१वा३रीः। वृष्णामदन्तिशो३। भाथा(१)॥
१ २ १ र र र १
एताश्रा। स्यपृशनायुवस्सोम९श्रीणन्तिपा२श्नयाः। इडा।
र २ २ २ १ २
प्रियाइन्द्रस्यधा१ यिना ३ वाः। वज्र९हिन्वन्तिसा ३।
४ ५ १ २ १ र
याकाम्(२) ॥ एताश्रा। स्यनमसासहस्सपर्य्यन्तिप्रचा
१ र १ २ २ १र
२यितमाः। इडा। व्रतान्यस्यसा१स्सा३यिरायि। पुरूणि
र २ ४ ५ र १ २
पूर्वचा३यि। तायायि। वस्वोरनुस्वरा२३द्दोयि। जायमा
१ १११
३१ऊवा२३। इट्०इडा२३४५(३) ॥ १४ † ॥

अस्य व्याख्यानम्—३भा० ६३७-६३८-६३९ पृष्ठेषु द्रष्टव्यम् । १४

२
रुद्रोऽनुष्टुप् सोमः ॥ शाक्करर्षभः। ओ३१म्।

---

* राजन्यस्येदं ब्रह्म साम । [ सामगी ।

† उभयोरिदमच्छावाकसाम । वैश्यस्य रायोवाजीयवार्हद्गिरे ब्रह्मसामाच्छावाक-

र र र र र र र १ २ १र २ १र र र
पवाएस्ववाएजसाएतयआ। अय्यो:। अय्यो:। पाए
र र र र२ २ १ र र र र र र र२ १
वाएन्वाएधा१। ह्विः। राएयाएह्वएतआ। सुवः। सु
र र र र र र १ १ र र
वः। इन्द्राएयसोएमवाएष्णवआ। ज्योतिः। ज्योतिः।
र र र र र र र र २ १ र र र र
देवाएभ्योमाएधुमाएत्तरआ। इट्(१)॥ ओवामेरिह्वाएन्ति
र र २ १ २ १र २ १र र र र र र र १ १
धाएतयआ। अय्योः। अय्योः। ह्वाएराएम्याएविया।
२ १ २ १ र र र र र र २ १ १
ह्विः। ह्विः। चाएआएद्रएहआ। सुवः। सुवः।
र र र र र र र र २ १ र र र
वत्सामेजातामेनमाएतरआ। ज्योतिः। ज्योतिः। पवा
र र र र र र र १ र र र र र र
एमानाएविधाएर्मणिया। इट्(२)॥ ओवामेय्याच्चाएमह्वा
१ र१ २ ०र २ १र र र र र र र २ २ १
एव्रतआ। अय्योः। अय्योः। पाएर्थाएवाएच्चा१। ह्विः।
२ १ र र र र र र र २ १ र
ह्विः। आएताएजाएभ्रिषआ। सुवः। सुवः। प्रता
र र र र र र २र १ र र र र
एद्रापीमेश्रमूएच्चथाआ। ज्योतिः। ज्योतिः। पवाए
र र र र र १ २ १ १ १
मानाएमह्वाएमना१। इट्०इडा२३४५(३)॥ १५*॥

अस्य व्याख्यानम्—३भा० ६५८-६५९-६६० पृष्ठेषु द्रष्टव्यम्। १५

---

* पञ्चनाभवे।

१र र
प्रजापतिरनुष्टुप्सोमः ॥ अष्टेडपदस्तोभः ॥ इडा ।
२ १र २र र १र र र र २ १ २र १र २र १
पवस्ववाजसातये । इडा । इडा । पवित्रेधारयासुतः ।
र र र र र र र १ १र १र र र र
इडा । इडा । इन्द्रायसोमविष्णवे । इडा । इडा ।
२र१र२र १ २ ३ १ १ १ १ १ १र र र र र २
देवेभ्योमधुमत्तरा२३४५ः । इडा(१) ॥ इडा । त्वाᳪरिहन्ति
र १ र र र र १ १ र २ १ र र
धीतयः । इडा । इडा । हरिम्पवित्रे अद्रुहः । इडा ।
र र २ १ २र १ २र १ १र र र र २र
इडा । वत्सञ्जातन्नमातरः । इडा । इडा । पवमान
१ २ ३ १ १ १ १ र र र र र र
विधर्म्मणी२३४५ । इडा(२) ॥ इडा । त्वन्दग्राञ्चमच्छिव्रत ।
१र र र र २ १र र २ र १र र र र
इडा । इडा । पृथिवीञ्चातिजभ्रिषे । इडा । इडा ।
२र १ २ र १र र र र १ २र १ २
प्रतिद्रापिममुञ्चथाः । इडा । इडा । पवमानमच्छित्वं
२ १ १ १ १ १ २र ३ १ र र
ना२३४५ । पवमानमच्छित्वना१ । इडा(३) ॥ १९ * ॥

अस्यापि व्याख्यानम्—३भा० ६५८-६५९-६६० पृष्ठेषु तद्देव । १९

१ २
प्रजापतिर्गायत्रीन्द्रः ॥ रैवत्यम् ॥ हावीन्द्रा ।
र १ २ १ ५ २
येन्दाऊ । इहा । मरुत्वतारयि । हा३१ऊवा२३ । इ

* पञ्चमार्भवे । इडापदानि च निधनानि ।

३४डा। पवा२स्वमा। इहा। धुमत्तमा२ः। हा३१
ऊवा२३। ई३४डा। अर्का२स्ययो। इहा। निमास
हा२म्। हा३१ऊवा२३। ई३४डा(१)॥ हाऊतान्वा।
विप्राः। इहा। वचोविदा२ः। हा३१ऊवा२३। ई३
४डा। परा२यिष्कृण्वा। इहा। तिधर्णसा२यिम्।
हा३१ऊवा२३। ई३४डा। सन्त्वा२मृजा। इहा। ति
आयवा२ः। हा३१ऊवा२३। ई३४डा(२)॥ हाऊरासाम्।
तेमायि। इहा। चोअर्यमा२। हा३१ऊवा२३। ई३
४डा। पिबा२न्तुवा। इहा। रुणःकवा२यि। हा३१
ऊवा२३। ई३४डा। पवा२माना। इहा। स्यमरु
ता२ः। हा३१ऊवा२३। ई३४डा(३)॥ १७ *॥

अस्य व्याख्यानम्—४भा० ३०-३१ पृष्ठयोर्द्रष्टव्यम्। १७

रुद्रोगायत्रीन्द्रः॥ रैवतर्षभः॥ सुरूपकृत्नु मूत

---

* षष्ठे मध्यन्दिने।

र १र १र र १र १र र २१र १
ये। सुहूपकृत्नुमूतये। सुहूपकृत्नुमूतये। सुदुघामि

र १र १२ र १ २
वगोदुहे। जुहूमसायि। द्याविद्यवायि। द्याविद्यवा

२र १ २ १ २ १ १ १र २ १
यि। द्याविद्यवा३१ऊ। वा२३(१)॥ उपनस्सवनागहि। उप

१ १ २२र२ १ २१११र२ १र २ र र
नस्सवनागहि। उपनस्सवनागहि। सोमस्यसोमपाःपिब।

१र ३ २ र १र २र १र २र १र २
गोदाइद्र। वातोमदाः। वातोमदाः। वातोमदा३१ऊ।

१ र २र १ २र र १ र २र १ २र र
वा२३(२)॥ अथातेअन्तमानाम्। अथातेअन्तमानाम्।

१ र २र १ २र र १र २ र १र र १
अथातेअन्तमानाम्। विद्यामसुमतीनाम्। मानोअ

२ र १र २र १र २र १र
तायि। ख्याआगहायि। ख्याआगहायि। ख्याआ

२ १ १ १
गहा३१ऊ। वा२३। उम्। उम्। उम् (३)॥ १८ *॥

अस्य व्याख्यानम्—४भा० ५७-५८-५९ पृष्ठेषु द्रष्टव्यम्। १८

१ २
प्रजापतिः षट्पदापि जगतीन्द्रः॥ श्येनम्॥ ऊभा

१ १ २ र १
यि। यदिन्द्रो२दसायि। इडा। आपा। प्राथउषा

५ १ २ १र १
२यिवा। इडा। माद्दा। तन्वामघा२यिनाम्।

* षष्ठं भ्रष्टसाम।

इडा। साम्रा। जस्त्वर्षणा२यिनाम्। इडा (१)॥ दी
र्घाम्। ह्रियङ्कुशा२यथा। इडा। शाक्तोम्। बिभ
र्षिमा२न्तुमाः। इडा। पूर्वं। णमघवा२न्पदा। इ
डा। वायाम्। अजोयथा२यमाः। इडा (२)॥ आवा।
स्मदुर्हणा२यताः। इडा। मार्ता। स्वतनुद्दा२यिस्थि
राम्। इडा। आधाः। पद्नमा२यिङ्कधायि। इडा।
योश्रा। स्मॅअभिद्रा२सतायि। इडा। देवो। ज
नित्रयजा२यिजनात्। इडा। भाद्रा। जनित्रयजा२
यिजनात्। इडा२३४५ (३)॥ १९ *॥

अस्य व्याख्यानम्—४भा० ६०-६१-६२ पृष्ठेषु द्रष्टव्यम्। १९

प्रजापतिः द्विपदा विष्टारपङ्क्तिः विराडेकेषामिति भुवने-
न्द्रो विश्वेदेवाः॥ भद्रम्॥ चोइचा। इमानुकम्भवना
सीषधेमा३। इचा। इन्द्रश्चविश्वे चदेवा३ः। इचा(१)॥

* षष्ठं अच्छावाकसाम।

यज्ञश्चनस्तन्वश्चप्रजाश्चाइ । इहा । आदित्यैरिन्द्रस्स
हसौषधातूइ । इहा(२)॥ आदित्यैरिन्द्रस्सगणोमरुद्भी
३: । इहा । अस्मभ्यम्भेषजाकरा ३ त् । इहा । ए ३ ।
भद्रम् (३) ॥ २० * ॥

अस्य व्याख्यानम्—४भा० ९८-९९ पृष्ठयोर्द्रष्टव्यम् । २०

॥ इत्यूह्यगाने दशरात्रपर्व्वणि प्रथमस्यार्द्धः प्रपाठकः ॥

———000———

अग्निर्गायत्रीरर्कः ॥ अग्नेरर्कः ॥ यस्तेमदोवाऽइ
रायिणा१या२ः । तेनापवस्वा३आन्धा१सा२ । देवावीर
घा३शा॒ऽसा१हा२(१)॥ जघ्निर्वृत्रमा३मायित्रा१या२म् । स
स्निर्वाजन्दिऽ३वायिदा१यिवा२यि । गोषातिरश्वाऽ३सा
आ१सा२यि(२)॥ सम्मिश्लोअरुऽ३षोभू१वा२ः । सूपस्थाभि
र्नो३धायिनू१भा२यिः । सीदञ्छ्येनोना३योना१यिमा२ ।
ए । अग्निर्मूर्धाभवद्दिवः (३)॥ १ † ॥

अस्य व्याख्यानम्—३भा० ३४३-३४४-३४५ पृष्ठेषु द्रष्टव्यम् । १

---

* षष्ठे द्वितीयखण्डे ।  † सप्तमारम्भे ।

१ १र २र
होयि। होयि। हाऊहाऊहाऊवा। द्यौः (२)॥ द्यावद्
१ २ १ २
व्यस्य। रभिन्तरा३ः। होयि। होयि। होयि। हा
१ र १ १ २
ऊहाऊहाऊवा। मह्योनरः। अद्व्यस्सुरभिन्तरा३ः।
१ २ १
होयि। होयि। होयि। हाऊहाऊहाऊवा। सत्य
र २ १र २र १ २ १
मोजः। सुतेचित्त्वाप्सुमदा३। होयि। होयि। हो
२ १ र १र १ २
यि। हाऊहाऊहाऊवा। स्वर्ज्योतिः। मोअन्धसा३।
१ २ र १र
होयि। होयि। होयि। हाऊहाऊहाऊवा। एस्था
१र १र २र १र २र १ २र १र २
दिदम्। एस्थादिदम्। एस्थादिदम्। श्रीणन्तोगोभि
१ २ १ २
रुत्तरा३म्। होयि। होयि। होयि। हाऊहाऊ
१र २र १र २ १ २र
हाऊवा। द्यौरक्रान् भूमिरततनत्समुद्रं समचूकुपत्।
१ १ १ १ १
इट्‍इडा२३४५ (३)॥ ३ *॥

अस्यापि व्याख्यानम्—४भा० ३०५-३०६-३०७ पृष्ठेषु द्रष्टव्यम्। १

---

* नवमे सध्यन्दिने।

प्रजापतिर्बृहती सोमः॥ सङ्कृतिनि॥ एपारी। तोषिञ्चता२३हो२३यि। सुता२३म् हाओवा। सोमोयउत्तमꣳहविः। दधन्वाꣳयोनर्य्योअ। प्सुवन्तरा। सुषावसोममद्रिभिः(१)॥ एहृषावसोममा२३हो२३। द्रिभा२३यिः। हाउवा। सुषावसोममद्रिभिः। नूनम्पुनानोविभिः। परिस्रव। अदब्धस्सुरभिन्तर। एआदा। ब्धस्सुरभा२३यिहो२३। तरा२३ः। हाओवा। अदब्धस्सुरभिन्तरः। सुतेचित्त्वाप्सुमदा। मोअन्धसा। श्रीणन्तोगोभिरुत्तरम्। हौ३। आ३। ऊ३। ई२३४५ (३)॥ ४ *॥

अस्यापि व्याख्यानम्—४भा० ३०५—३०७ पृष्ठेषु तदेव। ४

प्रजापतिः बृहती सोमः॥ भर्गम्॥ यत्। परोतोषि। चतार२३४ताम्। सोमोयउ। तमा२ꣳ

---

* अस्यापि नवमे मध्यन्दिने।

२ ५ २ र र र १ ३ ५
च्चा२३४वीः। दधन्वा९ं योनर्य्योअ। प्सुवा२न्ता२३४रा
१र र १ ३ ५ १र र १
सुषावसो। ममा२द्रा२३४यिभायिः॥ सुषावसो। ममा
३ ५ २र र १ ३ ५
२द्रा२३४यिभायिः(१)॥ सुषावसो। ममा२द्रा२३४यिभा
२र र र १ ३ ५
यिः। नूनम्पुनानोअविभिः। परा २ यिस्रा २ ३ ४ वा।
२ १ ३ ४ २ १
अदब्धस्सुरभा२यिन्ता२ ३ ४रा:(२)॥ अदब्धस्सुरभा२यि
२ ५ २ १ ३ ५ २र
न्ता२३४राः। अदब्धस्सु। रभा२यिन्ता२३४राः। सुतेचि
र र १र ३ ५ २र र र
त्वाप्सुमदा। मोअा२न्धा २ ३ ४ सा। श्रीणन्तोगो।
१ ३ ५ २ १ १११
भिरुत्ता२३४राम्। ए३। भर्गा२३४५ः (३)॥ ५*॥
अस्यापि व्याख्यानम्—४भा० ३०५—३०७ पृष्ठेषु द्रष्टव्यम्। ५

प्रजापतिर्बृहती सोमः॥ यज्ञः॥ परीतोषिञ्चता
१ २ २र १ २१ ११ २ १र र र२१
सुतम्। सोमोयउत्तम९ंहविः। दधन्वा९ंयोनर्य्योअप्सु
२१र १र२१र२१ २ २१र२१र२१ २
वन्तरा। सुषावसोममद्रिभिः(१)॥ सुषावसोममद्रिभिः।
१र२१र२१ २ २१ १र१र २१२ १
सुषावसोममद्रिभिः। नूनम्पुनानोविभिःपरिस्रव। अ

* एतस्यापि नवमे मध्यन्दिने।

२ १ २ १ २ १ २ १ २
दब्धस्तुरभिन्तरः(२)॥ अदब्धस्तुरभिन्तरः। अदब्धस्तुर
१ २ १र २र १ २र र १ २र २र १ २र १र २
भिन्तरः। सुतेचित्त्वाप्सुमदामोअन्धसा। श्रीणन्तोगोभि
१ २ १ र २र १ २र १ ३ १ १ १ १
रुत्तरम्। अतञ्जोवेमअरदोवयन्ते२३४५(३)॥ ६* ॥

अस्य व्याख्यानम्—४भा० ३०५-३०६-३०७ पृष्ठेषु तद्देव। ६

१
दीर्घतमा बृहती सोमः॥ दीर्घतमसोर्कम्॥ वृ
२ १ र २ १ २ १ २ १ २
षा। वासोमम। द्रिभायिद्रिभायिः। द्रिभायिः।
१ २ १ र २ १ २ १ २ १ २
वृषा। वासोमम। द्रिभायिद्रिभायिः। द्रिभायिः।
१ २ १ र २र १ २ १ २ १ २
नूनाम्। पूनानोअविभिःपरि। स्रवास्रवा। स्रवा।
१ २ १ २ १ २ १ २ १ २
आदा। ब्धास्तुरभि। तरास्तराः। तराः(२)॥ ७† ॥

अस्य व्याख्यानम्—४भा० ३०६ पृष्ठे तद्देव। ७

१
दीर्घतमा जगती सोमः॥ दीर्घतमसोर्कः॥ आ
२ १ र २र र र १ २ १ २ १ २
सा। वायिसोमोअरुषोवृषा। हरायिर्हरायिः। हरा
१ २ १ २र र १ २ १ २
यिः। राजे। वादस्मोअभिगाअचि। क्रदात्क्रदात्

---

* नवमे मध्यन्दिने। स्तोभविभाग्यम्।

† तथैव।

१ २   १ २   १ र २ र   १ २ १ २   १
भ्रदात्। पूना। नोवारमत्येष्य। व्ययाव्ययाम्। व्य
२   १   २   १ र २   र   १ २ १
याम्। श्चायिनो। नायोनिङ्क तवन्तमा। सदात्स
२   १ २.   १ २   १   २र   १
दात। सदात् (१)॥ पार्जा। न्याःपितामहिषस्यप। पि
२ १ २   १ २   १ २   २र
नापिनाः। पिनाः। नाभा। पार्थिव्यागिरिषुत्त्यम्।
१ २   १ २   १ २   १ २   १ र २र
दधायिदधायि। दधायि। खासा। रात्रापोत्रभि
र   र   १   १ २   १ २   १ २   १
गाउदा। सरान्त्सरान्। सरान्। साङ्गाः। वाभि
२ र र र   १ २   १ २   १ २   १ २
व्वंसतेवीतेत्र। ध्वरायिध्वरायि। ध्वरायि (२)॥ कावोः।
२र   २   र   १ २   १ २   १ २   १
वायिधस्यापरियेषिमा। हिनार्ग्हिनाम्। हिनाम्। आ
२   १   २र   र   १ २   १ २   १ २
चरो। नाम्टष्टोत्रभिवाजम्। षसायिषसायि। षसा
१ २   १   २ र र   १ २ १ २
यि। आपा। सायिधन्दुरितासोमनः। म्टडाम्टडा।
१ २   १ २   १ र २   र   १ २ १
म्टडा। धार्ता। वासानःपरियासिनिः। निजाम्नि
२   १ २   ३ १ १ १ १
जाम्। निजाम्। ई२३४५ (३)॥ ८ *॥

अस्य व्याख्यानम्—४भा० ३२७-३२८-३२९ पृष्ठेषु द्रष्टव्यम्। ८

* मर्वेव।

२
वसिष्ठो गायत्रीन्द्रः॥ कवतीषु रथन्तरम्॥ का
२ २ १ २ १ २ १ २ १
यानश्चित्रआभुवोवा। ऊतीसदा। वृधा२३सखा। का
२ १ १ ४ १ २ २ ५ ५
याशचा२३यिष्ठा३। यावा२३४र्ता। औवा६। हाऊ
१२ १ १२ २ २ २ १
वा(१)॥ ताकोवा। त्वासत्योमदानाम्म४हिष्ठौम। त्सदा
२ १ २ २ १ ४ १ २
२३न्धसाः। दार्ढाचिदा२३रुइ। जायिवा २ ३ ४ सा।
२ ५ ५ १ २ २ २
औवा६। हाऊवा(२)॥ स्वोवा। भीषुणस्सखीनामविता
१ १ २ १ ४ २
ज। रितॄ२३णाम्। शातम्भवा२३सी३। ऊता२३४या।
२ ५ ५
औवा६। हाऊवा(३)॥ ९ *॥

अस्य व्याख्यानम्—१भा० ८८-८९ पृष्ठयोर्द्रष्टव्यम्। ९

॥ इति ऊह्यगाने दशरात्रपर्व्व समाप्तम्॥ १॥

---

* दशमे पृष्ठम्।

## ॥ अथ संवत्सर-पर्व्व ॥

———000———

वसिष्ठो बृहती सोमः ॥ रथन्तरम् ॥ पूनानस्सोम धारयोवा। आपोवसानोअर्षस्यारत्नधायोनिमृत। स्व सा२३यिदसायि। उत्सोदेवो२३ह्वा३यि। राण्या२३४या। ओवा६। हाउवा(१)॥ उत्सोवा। दायिवोहिरण्ययोदु हानऊधर्हिवियम्। मधू२३प्रियाम्। प्रत्न॰सधा२३ स्था३म्। आसा२३४दात्। ओवा६। हाउवा(२)॥ प्रत्नोवा। साधस्थमासददापृच्छ्यन्धरुणंवा। जिया२३ र्षसायि। नृभिर्धौतो२३वा३यि। चाक्षा२३४णा। ओ वा६। हाउवा। अस्(३)॥ १० *॥

अस्य व्याख्यानम्—३भा० ४१-४२-४३ पृष्ठेषु द्रष्टव्यम्। १०

विरूपः प्रजापतिर्बृहती सोमः ॥ अजोवैरूपम् ॥

---

* प्रायणीयेऽह्नि मध्यन्दिने।

२ र ५ १ र
अभिसोमा। सआ३१ऊवा२३। यार३४वाः। पवन्तेम।
१ ५ १ १ र र
दिया३१ऊवा२३। मा२३४दाम्। समुद्रस्याधिविष्टपे।
१ ५ २ १र १
मना३१ऊवा२३यि। षी२३४णाः। मत्सरासः। मदा३
५ १ र
१ऊवा२३। च्यू२३४ताः(१)॥ मत्सरासः। मदा३१ऊवा
५ १ १र २
२३। च्यू२३४ताः। मत्सरासः। मदा३१ऊवा२३।
५ १ २ १ र २ १
च्यू२३४ताः। तरत्समुद्रम्पवमा। नऊ३। आऊवा२३।
५ १र र र २
मी२३४णा। राजादेवः। ऋता३१ऊवा२३। बृ२ ३ ४
५ १र र र ५
हात्(२)॥ राजादेवाः। ऋता३१ऊवा२३। बृ२३४हात्।
१र र र २ ५ १ र १
राजादेवः। ऋता३१ऊवा२३। बृ२३४हात्। अर्षामि
१ १ २ ५ १ र
त्रस्यवरुण। स्वधा३१ऊवा२३। मा२३४णा। प्रहिन्वा
२ ५ १र
नः। ऋता३१ऊवा२३। बृ२३४हात्। हाहा३१ऊवा२
१ १११११
३। २०॰ इडा२३४५(३)॥ ११ *॥

अस्य वा सामम्—३भा० ४०१-४०२ पृष्ठयोर्द्रष्टव्यम्। ११

* अभिसवस्य तृतीयेऽह्नि माध्यन्दिने।

२ र
अथर्व्वा बृहती सोमः॥ आथर्व्वणम्॥ उङ्कवा

र र र र र र र १ र र र
ओहा। औहोवा। परीतोषायि। उङ्कवाओहा।

१र ३र २ १ २ १र २
औहोवाहाउ। वा। आवत्। चताम्२३ता३म्।

१ र र र र र र र र र र
उङ्कवाओहा। औहोवा। सोमोयजु। उङ्कवाओ

र १र ३र २ १ २ १ र
हा। औहोवाहाउ। वा। स्वः। तमᳲहविर्द्धन्वाᳲ

र र ११ २ १ र र र र र र
योनर्य्योअप्सुवन्ता२३रा३। उङ्कवाओहा। औहोवा।

र र र र १र ३र २
सुषावसो। उङ्कवाओहा। औहोवाहाउ। वा।

१ २ १ २ १ र र र १र
ज्योतिः। ममद्रा२३यिभा३यिः। उङ्कवाओहा। औ

३र २ २ र र र र र र
होवाहाउ। वा३(१)॥ उङ्कवाओहा। औहोवा। सु

र र र र १र ३र १ १
षावसो। उङ्कवाओहा। औहोवाहाउ। वा। आ

१ १ १ २ र र र र र
वत्। ममद्रा२३यिभा३यिः। उङ्कवाओहा। औहो

र र र र र १र ३र १
वा। सुषावसो। उङ्कवाओहा। औहोवाहाउ।

१२ १ र र र र ११ २
वा। स्वः। ममद्भिर्नृम्पुनानो अविभिःपरिस्रा२३वा

२ र र र र र र र
३। उहुवाओहा। औहोवा। अदब्धस्तु। उहुवा

र र १र २र १ २ १
ओहा। औहोवाहाउ। वा। ज्योतिः। रभिन्ता२

२ र र र १र २
३रा३ः। उहुवाओहा। औहोवाहाउ। वा३(२)॥

र र र र र र र ऽ र र र
उहुवाओहा। औहोवा। अदब्धस्तु। उहुवाओहा।

१र २र २ १ २ २
औहोवाहाउ। वा। आवत्। रभिन्ता२३रा३ः।

र र र र र र र र र
उहुवाओहा। औहोवा। अदब्धस्तु। उहुवाओहा।

१र २र २ १ २ २ र र र
औहोवाहाउ। वा। सूवः। रभिन्तरस्सुते चित्त्वाप्सुमदा

२र र २ २ र र र र र र र
मोअन्धा२३सा३। उहुवाओहा। औहोवा। ओण

र र र र १र २र २ १
न्तोगो। उहुवाओहो। औहोवाहाउ। वा। ज्यो

२ १ २ २ र र र १र २र
तिः। भिन्त्तार२३रा३म्। उहुवाओहा। औहोवा

२ १ १ १ १
हाउ। वा३। ई२३४५(३)॥ १२ *॥

अस्य आम्नानम्—४भा० २०५-२०६-२०७ पृष्ठेषु द्रष्टव्यम्। ११

---

* अभिप्लवस्य चतुर्थेऽह्नि माध्यन्दिने।

